5.2

अच्युतग्रन्थमालायाः ( क ) विभागे १४ शं कुसुमम्

वेदसाराख्यं

# शिवसहस्रनामस्तोत्रम्

[ भाष्यसहितम् ]



प्रकाशनस्थानम्—

अच्युतग्रन्थमाला-कार्यालयः,

काशी

अच्युत ग्रन्थमालायाः (क) विभागे १४शं. कुसुमम्

वेदसाराख्यं

# शिवसहस्रनामस्तोत्रम्

( श्रीमत्परमशिवेन्द्रसरस्वतीकृतभाष्यसहितम् )

सम्पादकः—पं० श्रीकृष्णपन्तः

प्रकाशनस्थानम्

अच्युत ग्रन्थमाला—कार्यालयः, वाराणसी ।

प्रथमावृत्तिः १००० ] संवत् २०३२ [ मूल्यम् : ५)

# भूमिका

कतमस्यामृतानां मनामहे चारुदेवस्य नाम

ऋ० सू० २४ सू० म० १

यस्यनाम महद्यशः

यजु० ३२,३

नाम उपास्व स यो नाम ब्रह्मेत्युपास्ते ।

अनादिकालाच्चतुरशीतिभवाटव्यामटाट्यमानमनन्तानन्तवैविध्यजुड्जीवजातं नानापत्कुलाक्रान्तं सदाकुलमाकांक्षतेऽहर्निशं दुःखनिवृत्तिपूर्विकां सुखावाप्ति-मेतदर्थमेव विराममलभमानं निजनिजबुद्धिवैभवेन यत्किञ्चिद् विचार्य तदनुकूलकार्य-कदम्बके लग्नमस्ति । परमद्यावधि चरममनितरसाधारणं स्वीयं लक्ष्यं नाध्यगमत् । अनेकानेकजननजात—कलुषकुलप्रबलसंस्काराहितमानसतया स्वकीयसाध्यप्रापकं पन्थानमेव निश्चेतुं न प्राभवत् मृगमरीचिकालुब्धहृदा अचिरप्रणाशशालिनि सुखाभासे रममाणं शाश्वतिकपरमानन्दार्णवतरङ्गाभङ्गावलितालोलस्पर्शरहित-मात्मानं सच्चित्स्वरूपं वञ्चयतितराभिति दर्श दर्शं ध्यायं ध्यायं निष्कारण-करुणाप्लुतमानसेन भगवता वेदव्यासेन समेषां विशेषेण कलिमलकुलदावानल-दग्धान्तःकरणमानवानां सर्वविधकल्याणाय नैकविधशास्त्राद्यष्टादशपुराणमहा-भारतादिकञ्च तत्तदधिकारिभ्यो विनिर्मितम् ।

यद्यपि शास्त्रादिष्वनेके कल्याणकारिण उपाया दर्शिताः परं विकटेऽस्मिन्ननेहसि भगवन्नामोच्चारणात् नान्यः सरलः सुगमः सर्वविधपापनिर्हरणक्षमश्चोपायो दृश्यते । उक्तञ्च

शिवेति वर्णद्वयमादरेण सदा स्मरन् मुक्तिमुपैति जन्तुः ।
कलौ युगे कल्मषमानसानामन्यत्र धर्मे खलु नाधिकारः ॥

इति युगान्तरेषु बाहुल्येन प्राप्तानां सत्वसम्पन्नानां जनानां मतयः स्वतएव सत्कार्ये प्रावर्तन्तात एव धर्मबुद्धयो भवाब्धितरणशीलास्ते स्वीयं परमं लक्ष्यं सम्प्राप्यात्मारामा भवन्तिस्म । किन्तु कलिमलकुलक्लान्तचेतसो निजकर्त्तव्य-च्युतात्मानो याथातथ्येन स्वीयं प्राप्यमजानन्तः कुपथे वर्तमानाः सीदन्ति । बहुधा बोधिता अपि माययापहृतज्ञानास्ते नात्मोद्धाराय यतन्ते । एतानेवाभिलक्ष्य महता संरम्भेण तत्तत्पुराणादिषु भगवान् वादरायणः सरलातिसरलं भुक्ति-

मुक्तिप्रदायकं समग्रेहितपूरकं भगवन्नामेति दिव्योपायमुपदिदेश। नाम्निनिरवधिका शक्तिरस्तीति स्वयं भगवता प्रतिपादितम्—

नाम्नोऽस्ति यावती शक्तिः पापनिर्हरणे हरेः।
तावत्कर्त्तुं न शक्नोति पातकी पातकं जनः॥

कलिकलुषकलितचेतसां कृते नाम्नो महत्त्वं विशेषतः सिद्धयति—

ध्यायन् कृते भजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन्।
यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम्॥

अनिच्छया अज्ञानेन चापि केनापि विवशेन तन्नामोदीरितं तस्या सर्वं समीहितं करतलगतमेवेत्यत्र न कोऽपि संशीतिलेशः। तदुक्तञ्च—

अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः।
पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्वृकैरिव॥

अपरमप्यत्रावधेयम्

अन्ये ये केचन पुरुषार्थप्रापकाः कार्यकलापाः सन्ति तेषु कश्चन द्रव्यप्रधानः कश्चित्क्रियाप्रधानः कश्चिच्च भावप्रधानः। सदोषेषु द्रव्यादिषु सत्सु तदारब्धकार्येष्वपि तत्तद्दोषाः संक्रामन्त एव कारणगुणाः कार्यगुणान् आरभन्ते इति न्यायात्, एवं स्थितौ लक्ष्यसिद्धिर्विघ्निता—सती साधकं क्लेशयते। नामसाधनं ततो बहिर्भूतम्। नात्र दोषसंक्रमणस्य अवकाशः यस्यां कस्याञ्चिद् दशायां यया कयापि रीत्या यस्मिन् कस्मिश्चिदपि क्षणे यं कमपि भावमवलम्ब्द यः कोऽपि नामोच्चारयते तदुच्चरितं 'नाम' तत्कृते किमप्यपूर्वं फलं सूत एव। उक्तञ्चः—

अज्ञानादथवा ज्ञानाद् उत्तमश्लोकनाम यत्।
संकीर्तितमघं पुंसां दहत्येधो यथानलः॥
सांकेत्यं पारिहास्यं वा स्तोभं हेलनमेव च।
वैकुण्ठनामग्रहणमशेषाघहरं विदुः॥
यद्द्व्यक्षरं नाम गिरेरितं नृणां।
सकृत् प्रसङ्गादघमाशु हन्ति तत्॥
पवित्रकीर्ति तमलङ्घ्यशासनं।
भवानहो द्वेष्टि शिवं शिवेतरः॥

नारदपुराणे :—

ब्राह्मणः श्वपचीं भुञ्जन् विशेषेणरजःस्वलाम्।
अश्नाति सुरया पक्वं मरणेहरिमुच्चरन्॥

मुच्यते पातकात्तस्मान्नात्र कार्याविचारणा
हरिरिति सकृदुच्चरितं दस्युच्छलेनापि यैर्मनुजैः ।
जननी मार्गं मुक्त्वा ममपदवीं निविशतेमर्त्यः ॥

हरिरिति हर इत्यस्याप्युपलक्षकं श्रीशेशयोरभेदबोधनात् नामापराधगणना-प्रसङ्गे कीर्तितं यत् ये श्रीशशयोर्भेदबुद्धिं कुर्वन्ति भवन्ति नामापराधिनस्ते तथाहि--

सन्निन्दासति नामवैभवकथा श्रीशशयोर्भेदधी-
रश्रद्धाश्रुतिशास्त्रदेशिकगिरां नाम्न्यर्थवादभ्रमः ।
नामास्तीति निषिद्धवृत्तिविहितत्यागोहि धर्मान्तरैः ।
साम्यं नाम्नि जपे शिवस्य च हरेर्नामापराधा दश ॥

एभिर्दशनामापराधिभिरुदीरितं नाम निष्फलायते; तस्मात् सर्वथापराध-परिहाराय भक्तैर्यतनीयम् । कृते परिहारे :—

"सर्वाण्येतानि नामानि परस्य ब्रह्मणोऽनघ ।
एवमेतानि नामानि देवदेवस्य कीर्ययेत् ॥
यं यं काममभिध्यायेत्तं तमाप्नोत्यसंशयम् ।"

इत्युक्तिवशाद् नामव्याहरणं सर्वदुःखनिवृत्तिपूर्वकसमग्रमनोरथदायकमित्यत्र समेषां शास्त्रकाराणामैकमत्यमेव प्रतिभाति । तत्र सुतरामयं प्रश्नो मनस्युदेति यद्यदि भगवन्नाम्नः सकृदुच्चारणेनैव सर्वाणिपापानि नश्यन्ति तदा प्रत्यहमनेकवार-मुच्चारणेन पापविरहिताः सन्तो जनाः कथं न सुखिनः संलक्ष्यन्त इति जिज्ञासायामित्थं शास्त्रकारैरुत्तर्यते । किमपि साधनं तदैव फलमुत्पादयेत् यदा प्रतिबन्धकविराहितं तत् स्यात् । नहि प्रतिबन्धकसद्भावे समस्तेषु साधनेषु सत्स्वपि घट उत्पद्येत । अतः प्रकृतेऽपि नामापराधप्रतिबन्धके सति समुदीरितं नाम अकिञ्चिकरं भवति । इत्येवाभिसन्धाय सात्वततन्त्रे निगदितम् ।

तस्मान्नामैकमत्रेण तरत्येव भवार्णवम् ।
पुमानत्र न सन्देहो विना नामापराधतः ॥

पद्मपुराणेऽपि

नामाश्रयः कदाचित्स्यात् तरत्येव स नामतः ।
नाम्नोहि सर्वसुहृदो ह्यपराधात्पतत्यधः ॥

अतोनामापराधेभ्यो विमुक्तस्यैव भक्तस्य नामोच्चारणं समग्रफलदायकं सिद्धयति । ननु शब्दस्वरूपे नाम्नि कथं तादृशं विलक्षणं सामर्थ्यमिति शङ्कायामाह

नाम परमात्मनो भिन्नं नास्ति नामनाभिनोरभेदबोधनात्। तथोक्तञ्च शिवरहस्ये:—

परब्रह्मेति विज्ञेयं शिवइत्यक्षरद्वयम्।
अव्यक्तं परमं ब्रह्म नैतस्माद् ब्रह्म भिद्यते।

इति च। भक्तिरसामृतसिन्धुकारेणाचार्यरूपगोस्वामिनाप्युक्तम्—

वाच्यं वाचकमित्युदेति भवतो नामस्वरूपद्वयम् इत्यादिना नाम्नो द्वितीयं रूपं परमात्मेत्युक्तम्। महाकविकालिदासेनापि स्वकीये रघुवंशमहाकाव्ये भावमिममधिकृत्यैव वागर्थयोरभेद: प्रतिपादित:।

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥

इति। एतेनेदानींतनानां वैषयिकवासनावासितान्त:करणानां निखिलप्राणिनां समुद्धाराय विलक्षणशक्तिसम्पन्नस्य भगवन्नाम्नो माहात्म्यं सर्वोत्कृष्टं सिद्धयत्यत एव नानापुराणेषु नामस्तोत्राणि बाहुल्येनोपलभ्यन्ते। कुत्रचिद्विष्णुसहस्रनामस्तोत्रम् कुहचिल्ललितासहस्रनामस्तोत्रम् कुत्रचन गणेशसहस्रनामस्तोत्रम् तत्तदधिकारिभ्यो भगवता बादरायणेन करुणया कृतम्। तत्र आदित्यादिपुराणेषु भारते च शिवविषयकनामसहस्राणि बहूनि सन्ति तथापि वेदमूलकत्वादिदं शिवसहस्रनामस्तोत्रमत्युत्कृष्टम्। वेदमूलत्वञ्च तत्तन्नामव्याख्यानावसरेऽस्य स्तोत्रस्य भाष्ये स्पष्टतया प्रतिपादितम्।

श्री पद्मपुराणान्तर्गत पञ्चपञ्चसाहस्रिकसंहिताया उत्तरभागे भगवतो बिल्वकेश्वरमहादेवस्य माहात्म्यख्यापनप्रसङ्गे कृष्णमार्कण्डेयसम्वादरूपेण प्रसिद्धं वेदसारसहस्रं नाम "शिवसहस्रनामस्तोत्रम्" एतदेकादशशतकनामकविभागेषु विभक्तम्। तत्रपूज्यपादेन श्रीमत्परमहंसपरिव्राजकाचार्यशिवेन्द्रसरस्वतीचरणेन ग्रन्थग्रन्थिविश्लेषणपुर: सरं विद्वत्तोषकरं मौलिकं भाष्यं विरच्य शिवभक्तेभ्य उपायनीकृतम्। एतस्मिन् नानाविधशिवमहिमव्यञ्जकवाक्यकदम्बकं तत्तच्छास्त्रादिभ्य: सङ्कलीकृत्य शिव एव परं ब्रह्मेति संसाधितम्। तथा हि—

एक एवेति यो रुद्र: सर्वं वेदेषुगीयते।
यस्य प्रसादलेशेन मुक्तिर्भवति शाङ्करी।
शून्यं तत्प्रकृतिर्माया ब्रह्मयज्ज्ञानमित्यपि।
शिव: पुरुष ईशानो नित्यमात्मेति कथ्यते।

यं दृष्ट्वा योगिनो नित्यं संतृप्ताः स्वात्मसंस्थितम् ।
अक्षरं वेद सच्छून्यं परमात्मानमीश्वरम् ॥

इत्यादि ।

वेदसाराख्यस्तोत्रमिदमिति भाष्ये स्पष्टयितुं प्रायेण समागतानि नामानि श्रुति-सम्मतानि सन्तीति कियद्भिरुदाहरणैरस्य स्तोत्रस्य प्रतिपादितश्रुतिमूलकत्वं दर्शयते भाष्यकार :—

मृगवाणार्पणायाऽथ शारदावल्लभाय च ।
विचित्रमायिनेतुभ्यमलङ्करिष्णवे नमः ॥

इति पञ्चमशतकीयषट्सप्ततितमेऽस्मिन् पद्ये समागतस्य मृगवाणार्पणेति नाम्नो मूलम् "प्रजापतिर्ह वै स्वां दुहितरमभिदध्यौ" इत्यारभ्य तं रुद्रोऽभ्यायत्य विव्याध इति श्रुतिरस्ति । अस्याः श्रुतेरयमभिप्रायः—प्रजापतिः किल सुन्दरींकाञ्चित् स्त्रियं सृष्ट्वा तां प्रति मोहितः । सा तदभिप्रायं ज्ञात्वा मृगीरूपेण दुद्राव । सोऽपि मृग-रूपेण तां रन्तुमनुगतवान् । एवंभूतेतस्मिन् मृगे वाणस्यार्पणं येन भगवता शङ्करेण कृतं स मृगवार्णापण इति नाम्ना, ख्यातः । एवं भगवतः शङ्करस्यापरमेकं नाम "विचित्रमायीति वर्तते तस्य, मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमिति श्रुतिर्मूलम् ।

अनेन प्रकारेण प्रायः सर्वेषां 'नाम्नां' श्रुतिमूलकत्वं भाष्यकारः प्रादर्शयत् । तस्मात् भाष्यसंवलितशिवसहस्रनामस्तोत्रेस्योपादेयता विशेषेण प्रसिद्धयति । इमामेवोपादेयतामभिलक्ष्य अच्युतग्रन्थमालाप्रकाशनाधिकारिभिर्दुर्लभं भाष्ययुतं प्रकाशितचरमपूर्णं ग्रन्थरत्नमिदं सम्पूर्णरूपेण प्राकाश्यमानीतं तदर्थमेतेभ्यः साधुवादं वितीर्य विरमामीति शम् ।

गोविन्द पाण्डेयः
साहित्याध्यापकः
जो० म० गोयनका संस्कृत महाविद्यालय
ललिताघाट, वाराणसी

॥ श्रीः ॥

# वेदसार-शिवसहस्र-नामावलिः



१ ॐ परदेवाय नमः
२ ,, शङ्कराय नमः
३ ,, महात्मने नमः
४ ,, कामिने नमः
५ ,, नीलकण्ठाय नमः
६ ,, निर्मलाय नमः
७ ,, कपर्दिने नमः
८ ,, निर्विकल्पाय नमः
९ ,, शान्ताय नमः
१० ,, निरहङ्कारिणे नमः
११ ,, अनर्घ्याय नमः
१२ ,, विशालाय नमः
१३ ,, शालहस्ताय नमः
१४ ,, निरञ्जनाय नमः
१५ ,, शर्वाय नमः
१६ ,, श्रुताय नमः
१७ ,, परात्मने नमः
१८ ,, शिवाय नमः
१९ ,, भर्गाय नमः
२० ,, गुणातीताय नमः
२१ ,, वेधसे नमः
२२ ,, महादेवाय नमः
२३ ,, पीताय नमः
२४ ,, पार्वतीपतये नमः
२५ ,, केवलाय नमः
२६ ॐ महेशाय नमः
२७ ,, विशुद्धाय नमः
२८ ,, बुधात्मने नमः
२९ ,, कैवल्याय नमः
३० ,, सुदेशाय नमः
३१ ,, निःस्पृहस्वरूपिणे नमः
३२ ,, सोमविभूषाय नमः
३३ ,, कालाय नमः
३४ ,, अमिततेजसे नमः
३५ ,, अजिराय नमः
३६ ,, जगत्पित्रे नमः
३७ ,, जनकाय नमः
३८ ,, पिनाकिने नमः
३९ ,, निराधाराय नमः
४० ,, सिंहाय नमः
४१ ,, मायातीताय नमः
४२ ,, बीजाय नमः
४३ ,, सर्पभूषाय नमः
४४ ,, पशूनां पतये नमः
४५ ,, पुरन्दराय नमः
४६ ,, भद्राय नमः
४७ ,, पुरुषाय नमः
४८ ,, महीयसे नमः
४९ ,, महासन्तोषरूपाय नमः
५० ,, ज्ञानिने नमः

५१ ॐ शुद्धबुद्धये नमः
५२ ,, वृद्धरूपाय नमः
५३ ,, तपसे नमः
५४ ,, परमात्मने नमः
५५ ,, पूर्वजाय नमः
५६ ,, सुरेशाय नमः
५७ ,, ब्रह्मणे नमः
५८ ,, अनन्तमूर्तये नमः
५९ ,, निरक्षराय नमः
६० ,, सूक्ष्माय नमः
६१ ,, कैलासपतये नमः
६२ ,, निरामयाय नमः
६३ ,, कान्ताय नमः
६४ ,, निरातङ्काय नमः
६५ ,, निरालम्बाय नमः
६६ ,, विश्वाय नमः
६७ ,, नित्ययतये नमः
६८ ,, आत्मारामाय नमः
६९ ,, भव्याय नमः
७० ,, पूज्याय नमः
७१ ,, परमेष्ठिने नमः
७२ ,, विकर्तनाय नमः
७३ ,, सूर्य्याय नमः
७४ ,, शम्भवे नमः
७५ ,, विश्वरूपिणे नमः
७६ ,, ताराय नमः
७७ ,, हंसनाथाय नमः
७८ ,, प्रतिसर्याय नमः
७९ ,, परावरेशरुद्राय नमः
८० ,, भवाय नमः
८१ ,, अलक्ष्यशक्तये नमः
८२ ,, इन्द्रध्वंसनिधीशाय नमः
८३ ॐ कालहन्त्रे नमः
८४ ,, मनस्विने नमः
८५ ,, विश्वमात्रे नमः
८६ ,, जगद्धात्रे नमः
८७ ,, जगन्नेत्रे नमः
८८ ,, जटिलाय नमः
८९ ,, विरागाय नमः
९० ,, पवित्राय नमः
९१ ,, मृडाय नमः
९२ ,, निरवद्याय नमः
९३ ,, पात्राय नमः
९४ ,, स्तेनानां पतये नमः
९५ ,, नादाय नमः
९६ ,, रविनेत्राय नमः
९७ ,, व्योमकेशाय नमः
९८ ,, चतुर्भोगाय नमः
९९ ,, साराय नमः
१०० ,, योगिने नमः
१०१ ,, अनन्तमायिने नमः
१०२ ,, धर्मिष्ठाय नमः
१०३ ,, वरिष्ठाय नमः
१०४ ,, पुरत्रयविघातिने नमः
१०५ ,, गरिष्ठाय नमः
१०६ ,, गिरिशाय नमः
१०७ ,, वरदाय नमः
१०८ ,, व्याघ्रचर्माम्बराय नमः
१०९ ,, दिशावस्त्राय नमः
११० ,, परमप्रेममन्त्राय नमः
१११ ,, प्रथमाय नमः
११२ ,, सुचक्षुषे नमः
११३ ,, आद्याय नमः
११४ ,, शूलहस्ताय नमः

११५ ॐ शितिकण्ठाय नमः
११६ ,, उग्राय नमः
११७ ,, वामदेवाय नमः
११८ ,, श्रीकण्ठाय नमः
११९ ,, विश्वेश्वराय नमः
१२० ,, सूर्याय नमः
१२१ ,, गौरीशाय नमः
१२२ ,, वराय नमः
१२३ ,, मृत्युञ्जयाय नमः
१२४ ,, वीराय नमः
१२५ ,, वीरभद्राय नमः
१२६ ,, कामनाशाय नमः
१२७ ,, गुरवे नमः
१२८ ,, मुक्तिनाथाय नमः
१२९ ,, विरूपाक्षाय नमः
१३० ,, सूताय नमः
१३१ ,, वह्निनेत्राय नमः
१३२ ,, जलन्धरशिरश्छेत्रे नमः
१३३ ,, हविषे नमः
१३४ ,, हितकारिणे नमः
१३५ ,, महाकालाय नमः
१३६ ,, वैद्याय नमः
१३७ ,, संघृणेशाय नमः
१३८ ,, ॐकाररूपाय नमः
१३९ ,, सोमनाथाय नमः
१४० ,, रामेश्वराय नमः
१४१ ,, शुचये नमः
१४२ ,, भीमेशाय नमः
१४३ ,, त्र्यम्बकाय नमः
१४४ ,, निरीहाय नमः
१४५ ,, केदाराय नमः
१४६ ,, गङ्गाधराय नमः
१४७ ॐ कवये नमः
१४८ ,, नागनाथाय नमः
१४९ ,, भस्मप्रियाय नमः
१५० ,, सूद्याय नमः
१५१ ,, लक्ष्मीशाय नमः
१५२ ,, पूर्णाय नमः
१५३ ,, भूतपतये नमः
१५४ ,, सर्वज्ञाय नमः
१५५ ,, दयालवे नमः
१५६ ,, धर्माय नमः
१५७ ,, धनदेशाय नमः
१५८ ,, गजचर्माम्बराय नमः
१५९ ,, भालनेत्राय नमः
१६० ,, यज्ञाय नमः
१६१ ,, श्रीशैलपतये नमः
१६२ ,, कृशानुरेतसे नमः
१६३ ,, नीललोहिताय नमः
१६४ ,, अन्धकासुरहन्त्रे नमः
१६५ ,, पावनाय नमः
१६६ ,, बलाय नमः
१६७ ,, चैतन्याय नमः
१६८ ,, त्रिनेत्राय नमः
१६९ ,, दक्षनाशकराय नमः
१७० ,, सहस्रशिरसे नमः
१७१ ,, जयरूपाय नमः
१७२ ,, सहस्रचरणाय नमः
१७३ ,, योगिहृत्कञ्जवासिने नमः
१७४ ,, सद्योजाताय नमः
१७५ ,, वन्द्याय नमः
१७६ ,, सर्वदेवमयाय नमः
१७७ ,, आमोदाय नमः
१७८ ,, प्रगल्भाय नमः

१७६ ॐ गायत्रीवल्लभाय नमः
१८० ,, व्योमाकाराय नमः
१८१ ,, विप्राय नमः
१८२ ,, विप्रप्रियाय नमः
१८३ ,, अघोराय नमः
१८४ ,, सुवेषाय नमः
१८५ ,, श्वेतरूपाय नमः
१८६ ,, विद्युत्प्रभाय नमः
१८७ ,, चित्राय नमः
१८८ ,, विश्वग्रासाय नमः
१८६ ,, नन्दिने नमः
१६० ,, अधर्मशत्रुरूपाय नमः
१६१ ,, दुन्दुभेर्मर्दनाय नमः
१६२ ,, अजातशत्रवे नमः
१६३ ,, जगत्प्राणाय नमः
१६४ ,, ब्रह्मशिरश्छेत्रे नमः
१६५ ,, पञ्चवक्त्राय नमः
१६६ ,, खड्गिने नमः
१६७ ,, हरिकेशाय नमः
१६८ ,, विभवे नमः
१६६ ,, पञ्चवर्णाय नमः
२०० ,, वज्रिणे नमः
२०१ ,, पञ्चाक्षराय नमः
२०२ ,, गोवर्धनधराय नमः
२०३ ,, प्रभवे नमः
२०४ ,, जनबीजाय नमः
२०५ ,, कालकूटविषादिने नमः
२०६ ,, सिद्धेश्वराय नमः
२०७ ,, सिद्धाय नमः
२०८ ,, सहस्रवदनाय नमः
२०६ ,, सहस्रहस्ताय नमः
२१० ,, सहस्रनयनाय नमः

२११ ,, सहस्रमूर्तये नमः
२१२ ,, जिष्णवे नमः
२१३ ,, जितशत्रवे नमः
२१४ ,, काशीनाथाय नमः
२१५ ,, गेह्याय नमः
२१६ ,, विश्वसाक्षिणे नमः
२१७ ,, हेतवे नमः
२१८ ,, सर्वजीवानां पालकाय नमः
२१६ ,, जगत्संहारकाराय नमः
२२० ,, त्रिधावस्थाय नमः
२२१ ,, एकादशस्वरूपाय नमः
२२२ ,, वह्निमूर्तये नमः
२२३ ,, नरसिंहमहादर्पघातिने नमः
२२४ ,, शरभाय नमः
२२५ ,, भस्माभ्यक्ताय नमः
२२६ ,, तीर्थाय नमः
२२७ ,, जाह्नवीजनकाय नमः
२२८ ,, देवदानवदैत्यानां गुरवे नमः
२२६ ,, दलिताञ्जनभासाय नमः
२३० ,, वायुस्वरूपिणे नमः
२३१ ,, स्वेच्छामन्त्रस्वरूपाय नमः
२३२ ,, प्रसिद्धाय नमः
२३३ ,, वृषध्वजाय नमः
२३४ ,, गोष्ठ्याय नमः
२३५ ,, जगद्यन्त्रप्रवर्तिने नमः
२३६ ,, अनाथाय नमः
२३७ ,, प्रदेशाय नमः
२३८ ,, विष्णुगर्वहराय नमः
२३६ ,, हरिविधातृकलह-नाशकाय नमः

२४० ॐ दशहस्ताय नमः
२४१ ,, बटवे नमः
२४२ ,, गगनाय नमः
२४३ ,, कैवल्यफलदात्रे नमः
२४४ ,, परमाय नमः
२४५ ,, ज्ञानगम्याय नमः
२४६ ,, ज्ञानाय नमः
२४७ ,, घण्टारवप्रियाय नमः
२४८ ,, पद्मासनाय नमः
२४९ ,, पुष्टाय नमः
२५० ,, निर्वाणाय नमः
२५१ ,, अयोनये नमः
२५२ ,, सुदेहाय नमः
२५३ ,, उत्तमाय नमः
२५४ ,, अन्तकालाधिपतये नमः
२५५ ,, विशालाक्षाय नमः
२५६ ,, कुबेरबन्धवे नमः
२५७ ,, सोमाय नमः
२५८ , सुखिने नमः
२५९ , अमृतेश्वररूपाय नमः
२६० ,, कौबेराय नमः
२६१ , धन्विने नमः
२६२ , प्रियंवदाय नमः
२६३ , दक्षाय नमः
२६४ ,, वन्दिने नमः
२६५ ,, विभवाय नमः
२६६ ,, गिरीशाय नमः
२६७ ,, गिरित्राय नमः
२६८ ,, गिरिशन्ताय नमः
२६९ ,, पारिजाताय नमः
२७० ,, बृहते नमः
२७१ ॐ पञ्चयज्ञाय नमः
२७२ ,, तरुणाय नमः
२७३ ,, विशिष्टाय नमः
२७४ ,, बालरूपधराय नमः
२७५ ,, जीवितेशाय नमः
२७६ ,, तुष्टाय नमः
२७७ ,, पुष्टानां पतये नमः
२७८ ,, भवहेत्यै नमः
२७९ ,, हिरण्याय नमः
२८० ,, कनिष्ठाय नमः
२८१ ,, मध्यमाय नमः
२८२ ,, विधात्रे नमः
२८३ ,, शूराय नमः
२८४ ,, सुभगाय नमः
२८५ ,, आदित्यतापनाय नमः
२८६ ,, रुद्रमन्यवे नमः
२८७ ,, महाह्रदाय नमः
२८८ ,, ह्रस्वाय नमः
२८९ ,, वामनाय नमः
२९० ,, तत्पुरुषाय नमः
२९१ ,, चतुर्हस्ताय नमः
२९२ ,, मायिने नमः
२९३ ,, धूर्जटये नमः
२९४ ,, जगदीशाय नमः
२९५ ,, जगन्नाथस्वरूपाय नमः
२९६ ,, लीलाविग्रहरूपिणे नमः
२९७ ,, अनघाय नमः
२९८ ,, अमराय नमः
२९९ ,, अमृताय नमः
३०० ,, अच्छात्राय नमः
३०१ ,, लोकाध्यक्षाय नमः
३०२ ,, अनादिनिधनाय नमः

३०३ ॐ व्यक्तेतराय नमः
३०४ ,, व्यक्ताय नमः
३०५ ,, परमाणवे नमः
३०६ ,, लघुस्थूलस्वरूपाय नमः
३०७ ,, परशुधारिणे नमः
३०८ ,, खट्वाङ्गहस्ताय नमः
३०९ ,, नागहस्ताय नमः
३१० ,, वरदाभयहस्ताय नमः
३११ ,, घण्टाहस्ताय नमः
३ .२ ,, घस्मराय नमः
३१३ , अजिताय नमः
३१४ ,, अणिमादिगुणेशाय नमः
३१५ , पञ्चब्रह्ममयाय नमः
३१६ ,, पुरातनाय नमः
३१७ ,, शुद्धाय मनः
३१८ ,, बलप्रमथनाय नमः
३१९ , पुण्योदयाय नमः
३२० ,, पद्माय नमः
३-१ , विरक्ताय नमः
३२२ ,, उदराय नमः
३२३ ,, विचित्राय नमः
३२४ ,, विचित्रगतये नमः
३२५ ,, वाग्विशुद्धाय नमः
३२६ ,, चितये नमः
३२७ , निर्गुणाय नमः
३२८ ,, परमेशाय नमः
३२९ , शेषाय नमः
३३० ,, पद्मवराय नमः
३३१ ,, महेन्द्राय नमः
३३२ ,, सुशीलाय नमः
३३३ ,, करवीरप्रियाय नमः
३३४ ,, महापराक्रमाय नमः
३३५ ॐ कालरूपिणे नमः
३३६ ,, विष्टरश्रवसे नमः
३३७ ,, लोकचूडारत्नाय नमः
३३८ , साम्राज्यकल्पवृक्षाय नमः
३३९ ,, करुणाय नमः
३४० ,, नटाय नमः
३४१ ,, अनर्घ्याय नमः
३४२ , वरेण्याय नमः
३४३ , वज्ररूपाय नमः
३४४ ,, परमज्योतिषे नम
३४५ , पद्मगर्भाय नमः
३४६ ,, सलिलाय नमः
३४७ ,, तत्त्वाधिकाय नमः
३४८ , सर्गाय नमः
३४९ ,, दीर्घाय नमः
३५० ,, स्रग्विणे नमः
३५१ ,, पाण्डराङ्गाय नमः
३५२ , घोराय नमः
३५३ ,, ब्रह्मरूपिणे नमः
३५४ ,, निष्कलाय नमः
३५५ , प्रपथ्याय नमः
३५६ ,, सामगानप्रियाय नमः
३५७ , जयाय नमः
३५८ , क्षेत्राय नमः
३५९ ,, क्षेत्राणां पतये नमः
३६० ,, कलाधराय नमः
३६१ ,, पूताय नमः
३६२ ,, पञ्चभूतात्मने नमः
३६३ ,, अनिर्विण्णाय नमः
३६४ ,, तथ्याय नमः
३६५ ,, पापनाशकराय नमः
३६६ ,, विश्वतश्चक्षुषे नमः

३६७ ॐ मन्त्रिणे नमः
३६८ ,, अनन्तरूपिणे नमः
३६९ ,, सिद्धसाधकरूपाय नमः
३७० ,, मेदिनीरूपिणे नमः
३७१ ,, अगण्यप्रतापाय नमः
३७२ ,, सुधाहस्ताय नमः
३७३ ,, श्रीवल्लभाय नमः
३७४ ,, ईड्याय नमः
३७५ ,, मधुराय नमः
३७६ ,, उपाधिरहिताय नमः
३७७ ,, सुकृतराशये नमः
३७८ ,, मुनीश्वराय नमः
३७९ ,, शिवानन्दाय नमः
३८० ,, रिपुघ्नाय नमः
३८१ ,, तेजोराशये नमः
३८२ ,, अनुत्तमाय नमः
३८३ ,, चतुर्विंवपुःस्थाय नमः
३८४ ,, बुद्धीन्द्रियात्मने नमः
३८५ ,, उपद्रवहराय नमः
३८६ ,, प्रियसंदर्शनाय नमः
३८७ ,, भूतनाथाय नमः
३८८ ,, मूलाय नमः
३८९ ,, वीतरागाय नमः
३९० ,, नैष्कर्म्याय नमः
३९१ ,, विरूपाय नमः
३९२ ,, षट्चक्राय नमः
३९३ ,, विशुद्धये नमः
३९४ ,, कूलेशाय नमः
३९५ ,, अवनिभर्त्रे नमः
३९६ ,, भुवनेशाय नमः
३९७ ,, हिरण्यबाहवे नमः
३९८ ,, जीववरदाय नमः
३९९ ॐ आदिदेवाय नमः
४०० ,, भाग्याय नमः
४०१ ,, चन्द्रसञ्जीवनाय नमः
४०२ ,, हराय नमः
४०३ ,, बहुरूपाय नमः
४०४ ,, प्रसन्नाय नमः
४०५ ,, आनन्दपूरिताय नमः
४०६ ,, कूटस्थाय नमः
४०७ ,, मोक्षफलाय नमः
४०८ ,, शाश्वताय नमः
४०९ ,, विरागिणे नमः
४१० ,, यज्ञभोक्त्रे नमः
४११ ,, सुषेणाय नमः
४१२ ,, दक्षयज्ञविघातिने नमः
४१३ ,, सर्वात्मने नमः
४१४ ,, विश्वपालाय नमः
४१५ ,, विश्वगर्भाय नमः
४१६ ,, गर्भाय नमः
४१७ ,, देवगर्भाय नमः
४१८ ,, संसारार्णवमग्नानां समुद्धरणहेतवे नमः
४१९ ,, मुनिप्रियाय नमः
४२० ,, खल्ल्याय नमः
४२१ ,, मूलप्रकृतये नमः
४२२ ,, समस्तसिद्धये नमः
४२३ ,, तेजोमूर्तये नमः
४२४ ,, आश्रमस्थापकाय नमः
४२५ ,, वर्णिने नमः
४२६ ,, सुन्दराय नमः
४२७ ,, मृगबाणार्पणाय नमः
४२८ ,, शारदावल्लभाय नमः
४२९ ,, विचित्रमायिने नमः

४३० ॐ अलङ्करिष्णवे नमः
४३१ ,, वहिर्मुखमहादर्पमथनाय नमः
४३२ ,, अष्टमूर्तये नमः
४३३ ,, निष्कलाय नमः
४३४ ,, हव्यभोज्याय नमः
४३५ ,, यज्ञनाथाय नमः
४३६ ,, मेध्याय नमः
४३७ ,, मुख्याय नमः
४३८ ,, विशिष्टाय नमः
४३९ ,, अम्बिकापतये नमः
४४० ,, महादान्ताय नमः
४४१ ,, सत्यप्रियाय नमः
४४२ ,, सत्याय नमः
४४३ ,, प्रियनित्याय नमः
४४४ ,, नित्यतृप्ताय नमः
४४५ ,, वेदित्रे नमः
४४६ ,, मृदुहस्ताय नमः
४४७ ,, अर्धनारीश्वराय नमः
४४८ ,, कुठारायुधपाणये नमः
४४९ ,, वराहभेदिने नमः
४५० ,, कङ्कालधारिणे नमः
४५१ ,, महार्थाय नमः
४५२ ,, सुसत्त्वाय नमः
४५३ ,, कीर्तिस्तम्भाय नमः
४५४ ,, कृतागमाय नमः
४५५ ,, वेदान्तपठिताय नमः
४५६ ,, अश्रोत्राय नमः
४५७ ,, श्रुतिमते नमः
४५८ ,, बहुश्रुतिधराय नमः
४५९ ,, अघ्राणाय नमः
४६० ,, गन्धावघ्राणकारिणे नमः
४६१ ॐ पादहीनाय नमः
४६२ ,, वोढ्रे नमः
४६३ ,, सर्वत्र गतये नमः
४६४ ,, व्यक्ताय नमः
४६५ ,, जननेत्राय नमः
४६६ ,, चिदात्मने नमः
४६७ ,, रसज्ञाय नमः
४६८ ,, रसनारहिताय नमः
४६९ ,, अमूर्ताय नमः
४७० ,, मूर्ताय नमः
४७१ ,, सदसस्पतये नमः
४७२ ,, जितेन्द्रियाय नमः
४७३ ,, तथ्याय नमः
४७४ ,, परंज्योतिःस्वरूपिणे नमः
४७५ ,, सर्वमर्त्यानामादिकर्त्रे नमः
४७६ ,, भुवन्तये नमः
४७७ ,, सर्गस्थितिविनाशानां कर्त्रे नमः
४७८ ,, प्रेरकाय नमः
४७९ ,, अन्तर्यामिणे नमः
४८० ,, सर्वहृदिस्थाय नमः
४८१ ,, चक्रभ्रमणकर्त्रे नमः
४८२ ,, पुराणाय नमः
४८३ ,, वामदक्षिणहस्तोत्थ-लोकेशहरिशालिने नमः
४८४ ,, सकलकल्याणदायिने नमः
४८५ ,, प्रसवाय नमः
४८६ ,, स्वभावोदारधीराय नमः
४८७ ,, सूत्रकाराय नमः
४८८ ,, विषयार्णवमग्नानां समुद्धरणसेतवे नमः

४८९ ॐ अस्नेहस्नेहरूपाय नमः
४९० ,, वार्तातिक्रान्तवर्तिने नमः
४९१ ,, यत्र सर्वं यतः सर्वं सर्वं यत्र तस्मै नमः
४९२ ,, महार्णवाय नमः
४९३ ,, भास्कराय नमः
४९४ ,, भक्तिगम्याय नमः
४९५ ,, भक्तानां सुलभाय नमः
४९६ ,, दुष्टानां दुष्प्रधर्षाय नमः
४९७ ,, विवेकिनां विजयाय नमः
४९८ ,, अतर्किताय नमः
४९९ ,, लोकाय नमः
५०० ,, सुलोकाय नमः
५०१ ,, पूरयित्रे नमः
५०२ ,, विशेषाय नमः
५०३ ,, कुशलाय नमः
५०४ ,, शुभाय नमः
५०५ ,, कर्पूरदेहाय नमः
५०६ ,, सर्पहाराय नमः
५०७ ,, संसारपाराय नमः
५०८ ,, कमनीयाय नमः
५०९ ,, वह्निदर्पविघाताय नमः
५१० ,, वायुदर्पविघातिने नमः
५११ ,, जरातिगाय नमः
५१२ ,, वीर्याय नमः
५१३ ,, विश्वव्यापिने नमः
५१४ ,, प्रकाशाय नमः
५१५ ,, निष्क्रियाय नमः
५१६ ,, चन्द्रकोटीसुशीताय नमः
५१७ ,, विमलाय नमः
५१८ ,, गूढस्वरूपाय नमः
५१९ ,, दिशां पतये नमः
५२० ॐ पराय नमः
५२१ ,, सत्यप्रतिज्ञाय नमः
५२२ ,, समस्ताय नमः
५२३ ,, समाधये नमः
५२४ ,, एकरूपाय नमः
५२५ ,, शून्याय नमः
५२६ ,, विश्वनाभिहृदाय नमः
५२७ ,, सर्वोत्तमाय नमः
५२८ ,, कूल्याय नमः
५२९ ,, प्राणिनां सुहृदे नमः
५३० ,, अन्नानां पतये नमः
५३१ ,, चिन्मात्राय नमः
५३२ ,, ध्येयाय नमः
५३३ ,, ध्यानगम्याय नमः
५३४ ,, ध्यानरूपाय नमः
५३५ ,, शाश्वतैश्वर्यविभवाय नमः
५३६ ,, प्राणेश्वराय नमः
५३७ ,, सर्वशक्तिधराय नमः
५३८ ,, धर्माधाराय नमः
५३९ ,, धन्याय नमः
५४० ,, पुष्कलाय नमः
५४१ ,, वरिष्ठाय नमः
५४२ ,, धर्मगोप्त्रे नमः
५४३ ,, निधानाय नमः
५४४ ,, अग्रजाय नमः
५४५ ,, योगीश्वराय नमः
५४६ ,, योगाय नमः
५४७ ,, योगगम्याय नमः
५४८ ,, महेन्द्रोपेन्द्रचन्द्रार्कनमिताय नमः
५४९ ,, महर्षिवन्दिताय नमः
५५० ,, प्रकाशाय नमः

५५१ ॐ सुधर्मिष्ठे नमः
५५२ ,, हिरण्यगर्भाय नमः
५५३ ,, हिरण्मयाय नमः
५५४ ,, जगद्बीजाय नमः
५५५ ,, हरये नमः
५५६ ,, सेव्याय नमः
५५७ ,, क्रतवे नमः
५५८ ,, आधिपत्याय नमः
५५९ ,, कामाय नमः
५६० ,, स्वराय नमः
५६१ ,, यशसे नमः
५६२ ,, प्रचेतसे नमः
५६३ ,, ब्रह्ममयाय नमः
५६४ ,, सकलाय नमः
५६५ ,, रुक्मवर्णाय नमः
५६६ ,, ब्रह्मयोनये नमः
५६७ ,, योगात्मने नमः
५६८ ,, अभीताय नमः
५६९ ,, दिव्यनृत्याय नमः
५७० ,, जगतामेकबीजाय नमः
५७१ ,, मायाबीजाय नमः
५७२ ,, सर्वहृत्सन्निविष्टाय नमः
५७३ ,, ब्रह्मचक्रभ्रमाय नमः
५७४ ,, ब्रह्मानन्दाय नमः
५७५ ,, महते नमः
५७६ ,, ब्रह्मण्याय नमः
५७७ ,, भूरिभारार्तिसंहर्त्रे नमः
५७८ ,, विधिसारथये नमः
५७९ ,, हिरण्यगर्भपुत्राणां प्राणसंरक्षणाय नमः
५८० ,, दुर्वाससे नमः
५८१ ,, षड्विकाररहिताय नमः
५८२ ॐ देहार्धकान्ताय नमः
५८३ ,, षडूर्मिरहिताय नमः
५८४ ,, प्रकृत्यै नमः
५८५ ,, भवनाशाय नमः
५८६ ,, ताम्राय नमः
५८७ ,, परमेष्ठिने नमः
५८८ ,, अनतन्कोटिब्रह्माण्ड-नायकाय नमः
५८९ ,, एकाकिने नमः
५९० ,, निर्मलाय नमः
५९१ ,, द्रविणाय नमः
५९२ ,, दमाय नमः
५९३ ,, त्रिलोचनाय नमः
५९४ ,, शिपिविष्टाय नमः
५९५ ,, त्रिविष्टपेश्वराय नमः
५९६ ,, व्याघ्रेश्वराय नमः
५९७ ,, विश्वेश्वराय नमः
५९८ ,, दात्रे नमः
५९९ ,, चन्द्रेश्वराय नमः
६०० ,, व्यासेश्वराय नमः
६०१ ,, युधिने नमः
६०२ ,, यज्ञकेशाय नमः
६०३ ,, जैगीषव्येश्वराय नमः
६०४ ,, दिवोदासेश्वराय नमः
६०५ ,, नागेश्वराय नमः
६०६ ,, न्यायाय नमः
६०७ ,, न्यायनिर्वाहकाय नमः
६०८ ,, शरण्याय नमः
६०९ ,, सुपात्राय नमः
६१० ,, कालचक्रप्रवर्तिने नमः
६११ ,, विचक्षणाय नमः
६१२ ,, दंष्ट्राय नमः

६१३ ॐ वेदाश्वाय नमः
६१४ ,, नीलजीमूतदेहाय नमः
६१५ ,, परात्मज्योतिषे नमः
६१६ ,, शरणागतपालाय नमः
६१७ ,, महाबलपराय नमः
६१८ ,, सर्वपापहराय नमः
६१९ ,, महानादाय नमः
६२० ,, कृष्णस्य जयदात्रे नमः
६२१ ,, बिल्वकेशाय नमः
६२२ ,, दिव्यभोगाय नम
६२३ ,, दूताय नमः
६२४ ,, कोविदाय नमः
६२५ ,, कामपाशाय नमः
६२६ ,, चित्राय नमः
६२७ ,, चित्राङ्गाय नमः
६२८ ,, मातामहाय नमः
६२९ ,, मातरिश्वने नमः
६३० ,, निस्सङ्गाय नमः
६३१ ,, सुनेत्राय नमः
६३२ ,, विद्येशाय नमः
६३३ ,, जयाय नमः
६३४ ,, व्याजसंमर्दनाय नमः
६३५ ,, मध्यस्थाय नमः
६३६ ,, अङ्गुष्ठशिरसा लङ्का-
नाथदर्पहराय नमः
६३७ ,, वैयाघ्रपुरवासाय नमः
६३८ ,, सर्वेश्वराय नमः
६३९ ,, परावरेशाय नमः
६४० ,, जगत्स्थावरमूर्तये नमः
६४१ ,, अनुपमेशाय नमः
६४२ ,, शार्ङ्गिणे नमः
६४३ ,, विष्णुमूर्तये नमः

६४४ ॐ नारायणाय नमः
६४५ ,, रामाय नमः
६४६ ,, सुदीप्ताय नमः
६४७ ,, ब्रह्माण्डमालाय नमः
६४८ ,, गोधराय नमः
६४९ ,, वरूथिने नमः
६५० ,, सोमाय नमः
६५१ ,, कूप्याय नमः
६५२ ,, पातालवासिने नमः
६५३ ,, ताराधिनाथाय नमः
६५४ ,, वागीशाय नमः
६५५ ,, सदाचाराय नमः
६५६ ,, गौराय नमः
६५७ ,, स्वायुधाय नमः
६५८ ,, संसारमोचकाय नमः
६५९ ,, वर्णिने नमः
६६० ,, लिङ्गरूपिणे नमः
६६१ ,, सच्चिदानन्दरूपाय नमः
६६२ ,, पापराशिहराय नमः
६६३ ,, अतर्क्याय नमः
६६४ ,, अप्रमेयाय नमः
६६५ ,, प्रमाणाय नमः
६६६ ,, कलिग्रासाय नमः
६६७ ,, भक्तानां भुक्तिमुक्ति-
प्रदायिने नमः
६६८ ,, गजारये नमः
६६९ ,, विदेहाय नमः
६७० ,, त्रिलिङ्गरहिताय नमः
६७१ ,, अचिन्त्यशक्तये नमः
६७२ ,, अलङ्घ्यशासनाय नमः
६७३ ,, अच्युताय नमः
६७४ ,, राजाधिराजाय नमः

६७५ ॐ चैतन्यविषयाय नमः
६७६ ,, शुद्धात्मने नमः
६७७ ,, ब्रह्मज्योतिषे नमः
६७८ ,, स्वस्तिदाय नमः
६७९ ,, मयोभवे नमः
६८० ,, दुर्ज्ञेयसामर्थ्याय नमः
६८१ ,, यज्वने नमः
६८२ ,, चक्रेश्वराय नमः
६८३ ,, रुचये नमः
६८४ ,, नक्षत्रमालिने नमः
६८५ ,, अनर्थनाशनाय नमः
६८६ ,, भस्मलेपकराय नमः
६८७ ,, सदानन्दाय नमः
६८८ ,, विदुषे नमः
६८९ ,, सगुणाय नमः
६९० ,, विरोधिने नमः
६९१ ,, दुर्गमाय नमः
६९२ ,, शुभाङ्गाय नमः
६९३ ,, मृगव्याधाय नमः
६९४ ,, प्रियाय नमः
६९५ ,, धर्मधाम्ने नमः
६९६ ,, प्रयोगाय नमः
६९७ ,, विभागिने नमः
६९८ ,, नाद्याय नमः
६९९ ,, अमृतपानाय नमः
७०० ,, सोमपाय नमः
७०१ ,, तपस्विने नमः
७०२ ,, विचित्रवेषाय नमः
७०३ ,, पुष्टिसंवर्धनाय नमः
७०४ ,, चिरन्तनाय नमः
७०५ ,, धनुषे नमः
७०६ ,, वृक्षाणां पतये नमः
७०७ ॐ निर्मायाय नमः
७०८ ,, अग्रगण्याय नमः
७०९ ,, व्योमातीताय नमः
७१० ,, संवत्सराय नमः
७११ ,, लोप्याय नमः
७१२ ,, स्थानदाय नमः
७१३ ,, स्थविष्णवे नमः
७१४ ,, व्यवसायफलान्ताय नमः
७१५ ,, महाकर्तृप्रियाय नमः
७१६ ,, गुणत्रयस्वरूपाय नमः
७१७ ,, सिद्धिस्वरूपिणे नमः
७१८ ,, स्वरूपरूपरूपाय नमः
७१९ ,, स्वेच्छाय नमः
७२० ,, पूरुषाय नमः
७२१ ,, कालात्पराय नमः
७२२ ,, वेद्याय नमः
७२३ ,, ब्रह्माण्डरूपिणे नमः
७२४ ,, अनित्यनित्यरूपाय नमः
७२५ ,, तदन्तर्वर्तिने नमः
७२६ ,, तीर्थ्याय नमः
७२७ ,, कूल्याय नमः
७२८ ,, पूर्णाय नमः
७२९ ,, बटवे नमः
७३० ,, पञ्चतन्मात्ररूपाय नमः
७३१ ,, पञ्चकर्मेन्द्रियात्मने नमः
७३२ ,, विश्रृङ्खलाय नमः
७३३ ,, दर्पाय नमः
७३४ ,, विषयात्मने नमः
७३५ ,, अनवद्याय नमः
७३६ ,, शास्त्राय नमः
७३७ ,, स्वतन्त्राय नमः
७३८ ,, अमृताय नमः

७३९ ॐ प्रौढाय नमः
७४० ,, प्रज्ञाय नमः
७४१ ,, योगारूढाय नमः
७४२ ,, मन्त्रज्ञाय नमः
७४३ ,, प्रगल्भाय नमः
७४४ ,, प्रदीपविमलाय नमः
७४५ ,, विश्वावासाय नमः
७४६ ,, दक्षाय नमः
७४७ ,, वेदनिःश्वसिताय नमः
७४८ ,, यज्ञाङ्गाय नमः
७४९ ,, सुवीराय नमः
७५० ,, नागचूडाय नमः
७५१ ,, व्याघ्राय नमः
७५२ ,, बाणहस्ताय नमः
७५३ ,, स्कन्दाय नमः
७५४ ,, दक्षिणे नमः
७५५ ,, क्षेत्रज्ञाय नमः
७५६ ,, रहस्याय नमः
७५७ ,, स्वस्थानाय नमः
७५८ ,, वरीयसे नमः
७५९ ,, गहनाय नमः
७६० ,, विरामाय नमः
७६१ ,, सिद्धान्ताय नमः
७६२ ,, महीधराय नमः
७६३ ,, गुह्याय नमः
७६४ ,, वटवृक्षाय नमः
७६५ ,, ज्ञानदीपाय नमः
७६६ ,, दुर्गाय नमः
७६७ ,, सिद्धान्तैर्निश्चिताय नमः
७६८ ,, श्रीमते नमः
७६९ ,, मुक्तिबीजाय नमः
७७० ,, कुशलाय नमः
७७१ ॐ विवासिने नमः
७७२ ,, प्रेरक्षाय नमः
७७३ ,, विशोकाय नमः
७७४ ,, हविर्धानाय नमः
७७५ ,, गम्भीराय नमः
७७६ ,, सहायाय नमः
७७७ ,, भोजनाय नमः
७७८ ,, सुभोगिने नमः
७७९ ,, महायज्ञाय नमः
७८० ,, तीक्ष्णाय नमः
७८१ ,, भूतचारिणे नमः
७८२ ,, प्रतिष्ठिताय नमः
७८३ ,, महोत्साहाय नमः
७८४ ,, परमार्थाय नमः
७८५ ,, शिशवे नमः
७८६ ,, प्रांशवे नमः
७८७ ,, कपालिने नमः
७८८ ,, सहजाय गृहस्थाय नमः
७८९ ,, सन्ध्यानाथाय नमः
७९० ,, विष्णवे नमः
७९१ ,, सद्भिः सम्पूजिताय नमः
७९२ ,, वितलासुरघातिने नमः
७९३ ,, जनाधिपाय नमः
७९४ ,, योग्याय नमः
७९५ ,, कामेशाय नमः
७९६ ,, किरीटिने नमः
७९७ ,, अमोघविक्रमाय नमः
७९८ ,, नग्नाय नमः
७९९ ,, दलघातिने नमः
८०० ,, संग्रामाय नमः
८०१ ,, नरेशाय नमः
८०२ ,, शुचिभस्मने नमः

८०३ ॐ भूतिप्रियाय नमः
८०४ ,, भूम्ने नमः
८०५ ,, सेनाय नमः
८०६ ,, चतुराय नमः
८०७ ,, मनुष्यबाह्यगतये नमः
८०८ ,, कृतज्ञाय नमः
८०९ ,, शिखण्डिने नमः
८१० ,, निर्लेपाय नमः
८११ ,, जटार्द्राय नमः
८१२ ,, महाकालाय नमः
८१३ ,, मेरवे नमः
८१४ ,, विरूपरूपाय नमः
८१५ ,, शक्तिगम्याय नमः
८१६ ,, सर्वाय नमः
८१७ ,, सदसत्सत्याय नमः
८१८ ,, सुव्रताय नमः
८१९ ,, भक्तप्रियाय नमः
८२० ,, श्वेतरक्षापराय नमः
८२१ ,, सुकुमारमहापापहराय नमः
८२२ ,, रथिने नमः
८२३ ,, धर्मराजाय नमः
८२४ ,, धनाध्यक्षाय नमः
८२५ ,, सिद्धये नमः
८२६ ,, महाभूताय नमः
८२७ ,, कल्पाय नमः
८२८ ,, कल्पनारहिताय नमः
८२९ ,, ख्याताय नमः
८३० ,, जितविश्वाय नमः
८३१ ,, गोकर्णाय नमः
८३२ ,, सुचारवे नमः
८३३ ,, श्रोत्रियाय नमः
८३४ ॐ वदान्याय नमः
८३५ ,, दुर्लभाय नमः
८३६ ,, कुटुम्बिने नमः
८३७ ,, विरजाय नमः
८३८ ,, सुगन्धाय नमः
८३९ ,, विश्वम्भराय नमः
८४० ,, भवातीताय नमः
८४१ ,, तिष्याय नमः
८४२ ,, सामगाय नमः
८४३ ,, अद्वैताय नमः
८४४ ,, द्वितीयाय नमः
८४५ ,, कल्पराजाय नमः
८४६ ,, भोगिने नमः
८४७ ,, चिन्मयाय नमः
८४८ ,, शुक्लज्योतिषे नमः
८४९ ,, क्षेत्रगाय नमः
८५० ,, सर्वभोगसमृद्धाय नमः
८५१ ,, साम्परायाय नमः
८५२ ,, स्वप्रकाशाय नमः
८५३ ,, स्वच्छन्दाय नमः
८५४ ,, सुतन्तवे नमः
८५५ ,, सर्वज्ञमूर्तये नमः
८५६ ,, गुह्येशाय नमः
८५७ ,, सुशान्तये नमः
८५८ ,, शारदाय नमः
८५९ ,, सुशीलाय नमः
८६० ,, कौशिकाय नमः
८६१ ,, धनाय नमः
८६२ ,, अभिरामाय नमः
८६३ ,, तत्त्वाय नमः
८६४ ,, व्यालकल्पाय नमः
८६५ ,, अरिष्टमथनाय नमः

| | |
|---|---|
| ८६६ ॐ सुप्रतीकाय नमः | ८९८ ॐ उदारकीर्तये नमः |
| ८६७ ,, आशवे नमः | ८९९ ,, शश्वत्प्रसन्नवदनाय नमः |
| ८६८ ,, ब्रह्मगर्भाय नमः | ९०० ,, वसवे नमः |
| ८६९ ,, वरुणाय नमः | ९०१ ,, वेदकाराय नमः |
| ८७० ,, अद्रये नमः | ९०२ ,, भ्राजिष्णुजिष्णवे नमः |
| ८७१ ,, कालाग्निरुद्राय नमः | ९०३ ,, चक्रिणे नमः |
| ८७२ ,, श्यामाय नमः | ९०४ ,, देवदेवाय नमः |
| ८७३ ,, सुजनाय नमः | ९०५ ,, गदाहस्ताय नमः |
| ८७४ ,, अहिर्बुध्न्याय नमः | ९०६ ,, पुत्रिणे नमः |
| ८७५ ,, जाराय नमः | ९०७ ,, पारिजातसुपुष्पाय नमः |
| ८७६ ,, दुष्टानां पतये नमः | ९०८ ,, गणाधिपतये नमः |
| ८७७ ,, समयनाथाय नमः | ९०९ ,, सर्वशाखाधिपतये नमः |
| ८७८ ,, समयाय नमः | ९१० ,, प्रजनेशाय नमः |
| ८७९ ,, गुहाय नमः | ९११ ,, सूक्ष्मप्रमाणभूताय नमः |
| ८८० ,, दुर्लङ्घ्याय नमः | ९१२ ,, सुरपार्श्वगताय नमः |
| ८८१ ,, छन्दःसाराय नमः | ९१३ ,, अशरीरशरीराय नमः |
| ८८२ ,, दंष्ट्रिणे नमः | ९१४ ,, अपगल्भाय नमः |
| ८८३ ,, ज्योतिर्लिङ्गाय नमः | ९१५ ,, सुकेशाय नमः |
| ८८४ ,, मित्राय नमः | ९१६ ,, सुपुष्पाय नमः |
| ८८५ ,, जगतां हितकारिणे नमः | ९१७ ,, श्रुतये नमः |
| ८८६ ,, कारुण्यनिधये नमः | ९१८ ,, पुष्पमालिने नमः |
| ८८७ ,, श्लोकाय नमः | ९१९ ,, मुनिध्येयाय नमः |
| ८८८ ,, जयशालिने नमः | ९२० ,, मुनये नमः |
| ८८९ ,, ज्ञानोदयाय नमः | ९२१ ,, बीजसंस्थमरीचये नमः |
| ८९० ,, बीजाय नमः | ९२२ ,, चामुण्डाजनकाय नमः |
| ८९१ ,, जगद्विभ्रमहेतवे नमः | ९२३ ,, कृत्तिवाससे नमः |
| ८९२ ,, अवधूताय नमः | ९२४ ,, व्युप्तकेशाय नमः |
| ८९३ ,, शिष्टाय नमः | ९२५ ,, योग्याय नमः |
| ८९४ ,, छन्दसां पतये नमः | ९२६ ,, धर्मपीठाय नमः |
| ८९५ ,, फेन्याय नमः | ९२७ ,, महावीर्याय नमः |
| ८९६ ,, गुह्याय नमः | ९२८ ,, दीप्ताय नमः |
| ८९७ ,, सर्वबन्धविमोचिने नमः | ९२९ ,, बुद्धाय नमः |

६३० ॐ अशनये नमः
६३१ „ विशिष्टेष्टाय नमः
६३२ „ सेनान्ये नमः
६३३ „ द्विपदे नमः
६३४ „ कारणाय नमः
६३५ „ भगवते नमः
६३६ „ बाणदर्पहराय नमः
६३७ „ अतीन्द्रियाय नमः
६३८ „ रम्याय नमः
६३९ „ जनानन्दकराय नमः
६४० „ सदाशिवाय नमः
६४१ „ सौम्याय नमः
६४२ „ चिन्त्याय नमः
६४३ „ शशिमौलिने नमः
६४४ „ जातुकर्ण्याय नमः
६४५ „ सूर्याध्यक्षाय नमः
६४६ „ ज्योतिषे नमः
६४७ „ कुण्डलीशस्य वरदाय नमः
६४८ „ अभयाय नमः
६४९ „ वसन्ताय नमः
६५० „ सुरभये नमः
६५१ „ जयारिमथनाय नमः
६५२ „ प्रेम्णे नमः
६५३ „ पुरञ्जयाय नमः
६५४ „ पृषदश्वाय नमः
६५५ „ रोचिष्णवे नमः
६५६ „ असुरजिते नमः
६५७ „ श्वेतपीताय नमः
६५८ „ चञ्चरीकाय नमः
६५९ „ तमिस्रमथनाप नमः
६६० „ प्रमाथिने नमः
६६१ ॐ निदाघाय नमः
६६२ „ चित्रगर्भाय नमः
६६३ „ शिवालयाय नमः
६६४ „ स्तुत्याय नमः
६६५ „ तीर्थदेवाय नमः
६६६ „ पत्तीनां पतये नमः
६६७ „ विचित्रशक्तये नमः
६६८ „ निस्तुलरूपाय नमः
६६९ „ सवित्रे नमः
६७० „ तपसे नमः
६७१ „ अहङ्कारस्वरूपाय नमः
६७२ „ मेघाधिपतये नमः
६७३ „ अपाराय नमः
६७४ „ तत्त्वविदे नमः
६७५ „ क्षयद्विराय नमः
६७६ „ पञ्चास्याय नमः
६७७ „ अग्रगण्याय नमः
६७८ „ विष्णुप्राणेश्वराय नमः
६७९ „ अगोचराय नमः
६८० „ याम्याय नमः
६८१ „ क्षेम्याय नमः
६८२ „ वडवाग्नये नमः
६८३ „ विक्रमाय नमः
६८४ „ स्वतन्त्राय नमः
६८५ „ स्वतन्त्रगतये नमः
६८६ „ अनावृताय नमः
६८७ „ मुक्ताय नमः
६८८ „ मातृकापतये नमः
६८९ „ बीजकोशाय नमः
६९० „ दिव्यानन्दाय नमः
६९१ „ मुक्तये नमः
६९२ „ विश्वदेवाय नमः

९९३ ,, शान्तरागाय नमः
९९४ ,, सुदेवाय नमः
९९५ ,, हेमगर्भाय नमः
९९६ ,, अनाद्यन्ताय नमः
९९७ ,, चण्डाय मनोनाथाय नमः
९९८ ,, ज्ञानस्कन्दाय नमः
९९९ ,, तुष्टाय नमः
१००० ,, कपिलाय महर्षये नमः
१००१ ,, त्रिकाग्निकालाय नमः
१००२ ,, देवसिंहाय नमः
१००३ ,, मणिपूराय नमः
१००४ ,, चतुर्वेदाय नमः
१००५ ,, स्वरूपाणां स्वभावाय नमः
१००६ ,, अन्तर्यागाय नमः
१००७ ,, श्लोकाय नमः
१००८ ,, वन्याय नमः
१००९ ,, महाधर्माय नमः
१०१० ,, प्रसन्नाय नमः
१०११ ,, सर्वात्मज्योतिषे नमः
१०१२ ,, स्वयंभुवे नमः
१०१३ ,, अध्वातीताय नमः
१०१४ ,, यक्षराक्षसमन्महे नमः



विश्वानि देवसविर्दुरितानि परासुव ।
यद्भद्रं तन्न आसुव

# श्लोकानामकाराद्यनुक्रमणिका



श्रीमहागणपतये नमः

वेदसाराख्यं

# शिवसहस्रनामस्तोत्रम्

[ भाष्यसहितम् ]

उपोद्धातप्रकरणम्

व्यास उवाच—

एकदा मुनयः सर्वे द्वारकां द्रष्टुमागताः ।
वासुदेवं च सोत्कण्ठाः कृष्णदर्शनलालसाः ॥ १ ॥

---

हरिः ॐ

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥ १ ॥
ऐश्वरं परमं तत्त्वमादिमध्यान्तवर्जितम् ।
आधारं सर्वभूतानामनाधारमविक्रियम् ॥ २ ॥
अनन्तानन्तबोधाम्बुनिधिमद्भुतविग्रहम् ।
अम्बिकापतिमीशानमनिशं प्रणमाम्यहम् ॥ ३ ॥
ऐशमाद्यन्तनिर्मुक्तमतिशोभनमादरात् ।
नमामि विग्रहं साम्बं संसारामयभेषजम् ॥ ४ ॥
महदादिविशेषान्तं जगद्यस्याः समुत्थितम् ।
यस्यामेव लयं याति वन्दे तामम्बिकामहम् ॥ ५ ॥
गुरुमूर्तिधरां गुह्यां गुह्यविज्ञानदायिनीम् ।
गुह्यभक्तजनप्रीतां गुहायां निहितां नुमः ॥ ६ ॥

**ततः स भगवान् प्रीतः पूजां चक्रे यथाविधि ।**
**तेषामाशीस्ततो गृह्य बहुमानपुरःसरम् ॥ २ ॥**

---

नत्वा गणेश्वरं स्कन्दं साम्बं सद्गुरुमेव च ।
वेदसारसहस्रस्य व्याख्या सम्यग् विरच्यते ॥ ७ ॥

काशीखण्डे विष्णुवचनम्—

कृत्वाऽपि सुमहत्पापं त्वां यः स्मरति भावतः ।
आधारं जगतामीशं तस्य पापं विलीयते ॥
तव नामानुरक्ता वाक् पुंसो यस्य जगत्पते ।
अप्यद्रिकूटतुलितं नैनस्तमनुबाधते ॥

आदित्यपुराणे—

नामानि च महेशस्य गृणन्त्यज्ञानतोऽपि ये ।
तेषामपि शिवो मुक्तिं ददाति किमतः परम् ॥
ये स्मरन्ति महादेवं यदि पापरता अपि ।
ते विज्ञेया महात्मान इति सत्यं ब्रवीम्यहम् ॥

ईशानसंहितायां यमं प्रति शिवः—

महादेवादिशब्दस्तु जिह्वाग्रे यस्य वर्तते ।
मम प्रियतमो ह्येष पूज्यः सर्वस्त्वया यम ॥

शिवगीतायाम्—

आश्चर्ये वा भये शोके क्षुते वा मम नाम यः ।
व्याजेन वा स्मरेद्यस्तु स याति परमां गतिम् ॥
अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यः स्मरेत् शिवमीशानं स बाह्याभ्यन्तरः शुचिः ॥

शिवरहस्ये सप्तमांशे—

शिवनामामृतप्लुष्टरसनाः शिवपूजकाः ।
शिवनामरता नित्यं सन्ति धन्याः क्वचित् क्वचित् ॥
यन्नामसङ्कीर्तनमेकमेव विनाशयत्याशु महाघसङ्घम् ।
तं देवमीड्यं शरणं व्रजामि ब्रह्मेन्द्रविष्ण्वादिसुरैकवन्द्यम् ॥

तैः पृष्टः कथयामास कुमारप्रभवं च यत् ।
चरितं भूमिभारघ्नं लोकानन्दकरं परम् ॥ ३ ॥
मार्कण्डेयमुखाः सर्वे माध्याह्निकक्रियोत्थिताः ।
कृष्णः स्नानमथो चक्रे मृदक्षतकुशादिभिः ॥ ४ ॥

---

यन्नाममात्रोच्चरणेन नित्यं धन्या भवन्त्येव हि पापिनोऽपि ।
तं देवमीड्यं शरणं व्रजामि ब्रह्मेन्द्रविष्ण्वादिसुरैकवन्द्यम् ॥१।२॥

कुमारप्रभवं तपःकारणशिवप्रसादपूर्वकं साम्बोत्पत्त्यादिप्रकारम् । भूमिभारघ्नं भूमिभाररूपकंसजरासन्धदुर्योधनादिसंहाराङ्कितम्, अत एव लोकानन्दकरं चरितं च पृष्टः सन् कथयामासेति सम्बन्धः ।

उक्तं च—

जातः कंसवधार्थाय भूभारोद्धरणाय च ।
कौरवाणां विनाशाय दैत्यानां निधनाय च ॥ इति ॥३॥

माध्याह्निकक्रियानुष्ठानार्थमुत्थिताः । अथो अथ, ऋषिगमनानन्तरम् । मृदक्षतकुशादिभिः स्नानादियोग्यद्रव्यादिभिः, आदिशब्देन गोमयगोशृङ्गपलाशपत्रादिकं मन्त्रक्रियादिकं च गृह्यते ।

उक्तं च वायव्यसंहितायां कृष्णं प्रत्युपमन्युना—

श्रीकृष्णः—

भगवन् श्रोतुमिच्छामि शिवाश्रमनिषेविणाम् ।
शिवशास्त्रोदितं कर्म नित्यनैमित्तिकं तथा ।

उपमन्युः 'प्रातरुत्थाय शयनाद्'इति प्रस्तुत्य—

नद्यां वा देवखाते वा ह्रदे वाऽपि गृहेऽपि वा ।
स्नानद्रव्याणि तीरे तु स्थापयित्वा बहिर्जले ॥

पीताम्बरं त्रिपुण्ड्रं च धृत्वा रुद्राक्षमालिकाम् ।
सूर्योपस्थानसन्ध्यां च स्मृतिधर्ममनुस्मरन् ॥५॥
शिवपूजां ततः कृष्णो गन्धपुष्पाक्षतादिभिः ।
चकार विधिवद्भक्त्या नमस्कारयुतां शुभाम् ॥६॥

---

व्यपोह्य मृदमालिप्य स्नात्वा गोमयमालिपेत् ।
स्नात्वा पुनः पुनर्वस्त्रं त्यक्त्वा वाऽथ विशोध्य च ॥ इति ।

अवगाह्य समाचान्तो जले न्यस्येत् त्रिमण्डलम् ।
सौम्ये मग्नः पुनर्मन्त्रं जपेत् शक्त्या शिवं स्मरेत् ॥
उत्थायाऽऽचम्य तेनैव स्वात्मानमभिषेचयेत् ।
गोशृङ्गेण सदर्भेण पालाशेन दलेन वा ॥
पाद्मेन वाऽथ पाणिभ्यां पञ्चकृत्वस्त्रिरेव वा ॥ इति ।

तर्पयेदथ देवेभ्य ऋषिभ्यश्च विशेषतः ।
भूतेभ्यश्च पितृभ्यश्च दद्यादर्घ्यं यथाविधि ॥
रक्तचन्दनतोयेन हस्तमात्रेण मण्डलम् ।
सुवृत्तं कल्पयेद्भूमौ रक्तपुष्पाद्यलङ्कृतम् ॥
तत्रस्थं हेमपात्रार्घ्यं मागधप्रस्थसम्मितम् ।
पूरयेद् गन्धतोयेन रक्तचन्दनयोजितैः ॥
रक्तपुष्पैस्तिलैश्चैव कुशाक्षतसमन्वितैः ।
दूर्वापामार्गगन्धैश्च केवलेन जलेन वा ॥
जानुभ्यां धरणीं गत्वा नत्वा देवं च मण्डले ।
कृत्वा शिरसि तत्पात्रं दत्वा चाऽर्घ्यं शिवाय तत् ॥ इति च ॥४।५॥
गन्धपुष्पाक्षतादिभिरित्यादिशब्देन धूपदीपादिकं गृह्यते ॥६॥

जय शङ्कर सोमेश रक्ष रक्षेति चाऽब्रवीत् ।
जजाप शिवसाहस्रं भुक्तिमुक्तिप्रदं विभोः ॥७॥
अनन्यमानसः शान्तः पद्मासनगतः शुचिः ।
ततस्ते विस्मयापन्ना दृष्ट्वा कृष्णविचेष्टितम् ।
मार्कण्डेयोऽवदत् कृष्णं बहुशो मुनिसम्मितम् ॥८॥

मार्कण्डेय उवाच—

त्वं कृष्णः कमलाकान्तः परमात्मा जगद्गुरुः ।
भवत्पूज्यः कथं शम्भुरेतत् सर्वं वदस्व मे ॥९॥

व्यास उवाच—

अथ ते मुनयः सर्वे मार्कण्डेयं समर्चयन् ।
वचोभिर्वासुदेवश्च पृष्टः साधु त्वयेति च ॥१०॥

कृष्ण उवाच—

साधु साधु मुने पृष्टं हिताय सकलस्य च ।
अज्ञातं तव नाऽस्त्येव तथापि च वदाम्यहम् ॥११॥
दैवतं सर्वदेवानां सर्वकारणकारणम् ।
ज्योतिर्यत् परमानन्दं सावधानमतिः शृणु ॥१२॥

---

शिवसाहस्रं वेदसाराख्यम् । अनन्यमानसः शिवैकमानसः । मुनिसम्मितं मुनिसम्मितविषयम्, मुनिध्येयमिति यावत् ॥७।८॥

कमलाकान्त इत्यादिना विशेषणत्रयेण ऐश्वर्यमोक्षविद्यार्थं शिवपूजा न कर्तव्येत्यभिप्रायः ॥९॥

समर्चयन् स्तुतिं कृतवन्तः ॥१०॥

सकलस्य जनस्य ॥११॥

दैवतमित्यादिविशेषणचतुष्टयम् 'तमीश्वराणां परमं महे-

विश्वसाधनमीशानं गुणातीतमजं परम् ।
जगतस्तस्थुषो ह्यात्मा मम मूलं महामुने ॥१३॥
यो देवः सर्वदेवानां ध्येयः पूज्यः सदाशिवः ।
स शिवः स महादेवः शङ्करश्च निरञ्जनः ॥१४॥
तस्मान्नाऽन्यः परो देवस्त्रिषु लोकेषु विद्यते ।
सर्वज्ञः सर्वगः शक्तः सर्वात्मा सर्वतोमुखः ॥१५॥
पठ्यते सर्वसिद्धान्ते वेदान्ते यो मुनीश्वरैः ।
तस्मिन् भक्तिर्महादेवे मम धातुश्च निर्मला ॥१६॥
महेशः परमं ब्रह्म शान्तः सूक्ष्मः परात्परः ।
सर्वान्तरः सर्वसाक्षी चिन्मयस्तमसः परः ॥१७॥
निर्विकल्पो निराभासो निःसङ्गो निरुपद्रवः ।
निर्लेपः सकलाध्यक्षो महापुरुष ईश्वरः ॥१८॥

---

श्वरम्', 'तं देवतानां परमं च दैवतम्', 'तद् देवा ज्योतिषां ज्योतिः', 'एषोऽस्य परम आनन्दः' इत्येवमादिश्रुतिसिद्धम् । सावधानमतिरिति । यद्यपि ममैश्वर्यादिकमस्ति, तथापि सर्वं परमेश्वराधीनमिति श्लोकस्य तात्पर्यम् । अमुमेवाऽर्थमुत्तरत्र बहुभिः श्लोकैः स्फुटीकरिष्यामि, अतश्चित्तैकाग्र्येण भवितव्यमिति निष्कृष्टार्थः ॥१२॥

जगतः जङ्गमस्य, तस्थुषः स्थावरस्य, मूलं कारणम् ॥१३॥

सर्वदेवानां देव इत्यादिनाम्नां व्याख्यानमुत्तरत्र नामसहस्रव्याख्यायां स्फुटीभविष्यति ॥१४।१५।१६।१७॥

निराभासः जन्यज्ञानाविषयः, स्वयंप्रकाशरूपत्वात् । अज्ञाननिवृत्त्यर्थं तत्त्वमस्यादिमहावाक्यजन्यवृत्तिव्याप्तिमात्रमपेक्ष्यते ॥१८॥

तस्य चेच्छाऽभवत् पूर्वं जगत्स्थित्यन्तकारिणी ।
वामाङ्गादभवं तस्य सोऽहं विष्णुरिति स्मृतः ॥१९॥
जनयामास धातारं दक्षिणाङ्गात् सदाशिवः ।
मध्यतो रुद्रमीशानं कालात्मा परमेश्वरः ।
तपस्तपन्तु भो वत्सा अब्रवीदिति तान् शिवः ॥२०॥
ततस्ते शिवमात्मानं प्रोचुः संयतमानसाः ।
स्तुत्वा तु विधिवत्स्तोत्रैः प्रणम्य च पुनः पुनः ॥२१॥

ब्रह्मविष्णुमहेश्वरा ऊचुः—

तपः केन प्रकारेण कर्तव्यं परमेश्वर ।
ब्रूहि सर्वमशेषेण स्वात्मानं वेत्सि नाऽपरः ॥२२॥

---

पूर्वं वियदादिसृष्टिसमये । स्थित्यन्तकारिणीत्युत्पत्तेरुपलक्षणम् । तथा च परमेश्वरस्य सर्गादौ जगदुत्पत्तिस्थितिसंहारकारिणी मायावृत्तिरभूत् । तदर्थम् ॥१९॥

भो वत्साः तपस्तपन्त्विति तान्प्रति अब्रवीदित्यन्वयः ॥२०॥

ते ब्रह्मविष्णुरुद्राः, संयतमानसाः सावधानचित्ताः सन्तः, विधिवत् शिरसि अञ्जलिं निधाय प्रदक्षिणत्रयपुरःसरं पुनः पुनः प्रणम्य द्वादशनमस्कारान् कृत्वा स्तोत्रैः लौकिकवैदिकस्तोत्रैः स्तुत्वा आत्मानं प्रत्यगात्मभूतं शिवं प्रोचुरित्यन्वयः ॥२१॥

किं तपःशब्दवाच्यम् ? केन प्रकारेण इतिकर्तव्यताविशेषेण तपः कर्तव्यम् ? इति त्वमेव ब्रूहि । तत्र हेतुमाह—स्वात्मानं वेत्सीति । तपसस्त्वदात्मरूपत्वात् त्वमेव वेत्सि नाऽपर इत्यर्थः । तदुक्तं श्रुत्याम्—'त्रयं वा इदं नाम रूपं कर्म' इति प्रस्तुत्य 'तदेतत्त्रयं सदेकमयमात्मा' इति ॥२२॥

शिव उवाच—

कायेन मनसा वाचा ध्यानपूजाजपादिभिः ।
कामक्रोधादिरहितं तपः कुर्वन्तु भो सुराः ॥२३॥

देवा ऊचुः—

त्वया यत्कथितं शम्भो दुर्ज्ञेयमजितात्मभिः ।
सौम्योपायमतो ब्रह्मन् वद कारुण्यवारिधे ॥२४॥

शिव उवाच—

शृणुध्वं सर्वपापघ्नं भुक्तिमुक्तिप्रदं नृणाम् ।
सहस्रनामसद्विद्यां जपन्तु मम सुव्रताः ॥२५॥
यया संसारमग्नानां मुक्तिर्भवति शाश्वती ।
शृण्वन्तु तद्विधानं तु महापातकनाशनम् ॥२६॥

---

कायेन मनसा वाचा ध्यानपूजाजपादिभिरित्यादिशब्देन प्रदक्षिणानमस्कारस्तोत्रादिकं गृह्यते । कामक्रोधादीत्यादिशब्देन लोभमोहादिकं गृह्यते ॥२३॥

दुर्ज्ञेयं ज्ञातुमयोग्यं किमुत कर्तुम् । अजितात्मभिः अजितबाह्यान्तःकरणैः ॥२४॥

'सर्वपापघ्नं भुक्तिमुक्तिकरं नृणाम्' इत्युक्तवतः शिवस्याऽयमभिप्रायः—यद्यपि यूयमीश्वराः निरवधिकभोगसंपन्ना मुक्ताश्च; तथापि लोकानुग्रहार्थमिदं कर्तव्यम् 'यद्यदाचरति श्रेष्ठः' इति न्यायेन इति । सद्विद्यां सदात्मविषयिणीम् ॥२५॥

यया सद्विद्यया वक्ष्यमाणध्यानपूर्वकया तत्तन्नामार्थज्ञानपुरःसरया च । तद्विधानं विद्याङ्गभूतऋषिच्छन्दोदेवताऽङ्गन्यासध्यानादिपुरःसरं जपानुष्ठानप्रकारम् ॥२६॥

पठतां शृण्वतां सद्यो मुक्तिः स्यादनपायिनी ।
ब्रह्मचारी कृतस्नानः शुक्लवासा जितेन्द्रियः ॥२७॥
भस्मधारी मुनिर्मौनी पद्मासनसमन्वितः ।
ध्यात्वा मां सकलाधीशं निराकारं निरीश्वरम् ॥२८॥
पार्वतीसहितं शम्भुं जटामुकुटमण्डितम् ।
वसानं चर्म वैयाघ्रं चन्द्रार्धकृतशेखरम् ॥२९॥
त्र्यम्बकं वृषभारूढं कृत्तिवाससमुज्ज्वलम् ।
सुरार्चितपदद्वन्द्वं दिव्यभोगं सुसुन्दरम् ॥३०॥
बिभ्राणं सुप्रसन्नं च कुठारवरदाभयम् ।
दुरन्तं कमलासीनं नागयज्ञोपवीतिनम् ॥३१॥
विश्वकायं चिदानन्दं शुद्धमक्षरमव्ययम् ।
सहस्रशिरसं शम्भुमनन्तकरसंयुतम् ॥३२॥
सहस्रचरणं दिव्यं सोमसूर्याग्निलोचनम् ।
जगद्योनिमजं ब्रह्म शिवमाद्यं सनातनम् ॥३३॥

---

मुक्तिः पापान्मुक्तिः । भक्तिरिति पाठान्तरम् । अनपायिनी दृढा । ब्रह्मचारी आश्रमोचितब्रह्मचर्यवान् । शुक्लवासाः धौतवासाः । जितेन्द्रियः विषयपराङ्मुखः ॥२७॥

मुनिः वक्ष्यमाणध्यानपरः । मौनी अनुचितव्यापाररहितः । ननु शिवनामसहस्रकं 'हिरण्यबाहुः' इति नामादिकमन्यदपि बहु वर्तते, किमिति वेदसारसहस्रव्याख्याप्रतिज्ञा ? उच्यते—

दंष्ट्राकरालदुष्प्रेक्ष्यं सूर्यकोटिसमप्रभम् ।
निशाकरकराकारं भेषजं भवरोगिणाम् ॥३४॥
पिनाकिनं विशालाक्षं पशूनां पतिमीश्वरम् ।
कालात्मानं कालकालं देवदेवं महेश्वरम् ॥३५॥
ज्ञानवैराग्यसम्पन्नं योगानन्दमयं परम् ।
शाश्वतैश्वर्यसम्पूर्णं महायोगीश्वरेश्वरम् ॥३६॥
समस्तशक्तिसंयुक्तं पुण्यकायं दुरासदम् ।
तारकं ब्रह्मसम्पूर्णमणीयांसं महत्तरम् ॥३७॥
यतीनां परमं ब्रह्म व्रतिनां तपसः फलम् ।
संयमिहृत्समासीनं तपस्विजनसंवृतम् ॥३८॥
विधीन्द्राविष्णुनमितं मुनिसिद्धनिषेवितम् ।
महादेवं महानन्दं देवानामपि दैवतम् ॥३९॥
शान्तं पवित्रमोङ्कारं ज्योतिषां ज्योतिरुत्तमम् ।
इति ध्यात्वा शिवं चित्ते रक्षार्थं कवचं न्यसेत् ॥४०॥

---

अस्मिन्नामसहस्रेऽतिशयबाहुल्यस्य विद्यमानत्वात् । तथाहि—अस्मिन्नेव पाद्मे पुराणे शिवगीतायां तृतीयाध्याये शिवप्रसादसिध्यर्थं श्रीरामं प्रति पाशुपतव्रतोपदेशपुरःसरमगस्त्यवचनम्—

'एवं कुरु महाभाग शिवनामसहस्रकम् ।
इदं गुह्यं प्रदास्यामि तेन सर्वमवाप्स्यसि ॥
इत्युक्त्वा प्रददौ तस्मै शिवनामसहस्रकम् ।
वेदसारमयं नित्यं शिवप्रत्यक्षकारकम् ॥' इति

अनन्तरं चतुर्थाध्याये 'एवमुक्त्वा मुनिश्रेष्ठे गते तस्मिन् निजाश्रमम् । अथ रामगिरौ रामः पुण्ये गोदावरीतटे ॥ शिवलिङ्गं प्रतिष्ठाप्य' इत्यारभ्य 'व्याघ्रचर्मासने स्थितः'

शङ्करो मे शिरः पातु ललाटं भाललोचनः ।
विश्वचक्षुर्दृशौ पातु रुद्रः पातु भ्रुवौ मम ॥४१॥
गण्डौ पातु महेशानः श्रुती रक्षतु पूर्वजः ।
कपोलौ मे महादेवः पातु नासां सदाशिवः ।
मुखं पातु हविर्भोक्ता ओष्ठौ पातु महेश्वरः ॥४२॥
दन्तान् रक्षतु देवेशस्तालु सोमकलाधरः ।
रसनां परमानन्दः पातु शङ्खं शिवाप्रियः ॥४३॥
चिबुकं पातु मे शम्भुः श्मश्रु शत्रुविनाशनः ।
कूर्चं पातु भवः कण्ठं नीलकण्ठोऽवतु ध्रुवम् ॥४४॥
स्कन्धौ स्कन्दपतिः पातु बाहू पातु महाभुजः ।
उपबाहू महावीर्यः करौ विबुधसत्तमः ॥४५॥
अङ्गुलीः पातु पञ्चास्यः पर्वाणि च सहस्रपात् ।
हृदयं पातु सर्वात्मा स्तनौ पातु पितामहः ॥४६॥

---

इत्यन्तेन ग्रन्थेन शिवलिङ्गप्रतिष्ठापनविभूतिधारणशिवार्चनादिकं कृतमित्युक्त्वा अनन्तरम् 'नाम्नां सहस्रं प्रजपन्नक्तंदिवमनन्यधीः' इत्यादिना 'गतं मासचतुष्टयम्' इत्यन्तेन तपोध्याननिष्ठापूर्वकं श्रीरामेण नामजपः कृत इति प्रदर्शितम्। अनन्तरं च शिवाविर्भावात् पूर्वम् 'स्वरेणाऽप्युच्चयन्नुच्चैः शम्भोर्नामसहस्रकम्' इत्यादिना नामसहस्रेण स्तोत्रादिकं श्रीरामेण कृतमिति च प्रसिद्धम् । अनन्तरं विष्णुब्रह्मदिक्पालादिपरिवारादिसहितवृषभारूढाम्बासमेतशिवाविर्भावकालेऽपि—

उदरं हुतभुक् पातु मध्यं पातु महेश्वरः ।
कुक्षिं पातु भवानीशः पृष्ठं पातु कुलेश्वरः ॥४७॥
प्राणान्मे प्राणदः पातु नाभिं भीमः कटिं विभुः ।
सक्थिनी पातु मे भर्गो जानुनी भुवनाधिपः ॥४८॥
जङ्घे पुररिपुः पातु चरणौ भवनाशनः ।
शरीरं पातु मे शर्वो बाह्यमाभ्यन्तरं शिवः ॥४९॥
इन्द्रियाणि हरः पातु सर्वत्र जयवर्धनः ।
प्राच्यां दिशि मृडः पातु दक्षिणे यमसूदनः ॥५०॥
वारुण्यां सलिलाधीश उदीच्यां मे महीधरः ।
ईशान्यां पातु भूतेश आग्नेय्यां रविलोचनः ॥५१॥
नैर्ऋत्यां भूतभृत् पातु वायव्यां बलवर्धनः ।
ऊर्ध्वं पातु मखद्वेषी ह्यधः संसारनाशनः ॥५२॥

---

'एवं देवसभां दृष्ट्वा कृतार्थो रघुनन्दनः ।
हर्षगद्गदया वाचा स्तुवन् देवं महेश्वरम् ॥
दिव्यनामसहस्रेण प्रणनाम पुनः पुनः ।'

इत्यन्तेन ग्रन्थेन नमस्कारादिकं कृतमिति प्रसिद्धम् ।

किञ्च, षष्ठाध्यायेऽपि—'पुरा ब्रह्मादयो देवा द्रष्टुकामा ममाऽऽकृतिम् ।' इत्यारभ्य 'श्रुत्वेति देवा मद्वाक्यं कैवल्यज्ञानमुत्तमम् । जपन्तो मम नामानि मम ध्यानपरायणाः ॥ सर्वे ते स्वस्वदेहान्ते मत्सायुज्यं गताः सुराः ।' इत्यन्तेन ग्रन्थेन श्रीरामं प्रति शिवेन ब्रह्मादिसमस्तदेवैरपि शिवध्यानपुरःसरं नामसहस्रं जप्तं तत्फलं कैवल्यं च प्राप्तमित्युक्तम् ।

सर्वतः सुखदः पातु बुद्धिं पातु सुलोचनः ।
एवं न्यासादिकं कृत्वा साक्षाच्छिवमयो भवेत् ॥५३॥
नमो हिरण्यबाहव इति पठेन्मन्त्रं तु भक्तिमान् ।
सद्योजातादिभिर्मन्त्रैर्नमस्कुर्यात् सदाशिवम् ॥५४॥
ततः सहस्रनामेदं पठितव्यं मुमुक्षुभिः ।
सर्वकार्यकरं पुण्यं महापातकनाशनम् ॥५५॥
सर्वगुह्यतमं दिव्यं सर्वलोकहितप्रदम् ।
मन्त्राणां परमो मन्त्रो भवदुःखषडूर्मिहृत् ॥५६॥

ॐ नमः शम्भवे चेति षड्भिर्मन्त्रैः षडङ्गन्यासः ।

ॐ अस्य श्रीपरमदिव्यवेदसारशिवसहस्रनामस्तोत्रमन्त्रस्य श्रीभगवान् नारायणऋषिः । अनुष्टुप् छन्दः । परमात्मा श्रीमहादेवो देवता । नम इति बीजम् । शिवायेति शक्तिः । चैतन्यमिति कीलकम् । श्रीमहादेवप्रीत्यर्थे वेदसारसहस्रनामजपे

---

किञ्च, अत्रैव प्रथमाध्याये पुरुषार्थचतुष्टयमीप्सता पुरुषेण विरजादीक्षादिपूर्वकविभूतिधारणरुद्राक्षधारणपुरःसरमेतन्नामसहस्रकजपः कर्तव्यः इति ऋषीन् प्रति सूतेनोक्तम्—

'धर्मार्थकाममोक्षाणां पारं यास्यथ येन वै ।
मुनयस्तत्प्रवक्ष्यामि व्रतं पाशुपताभिधम् ॥
कृत्वा तु विरजादीक्षां भूतिरुद्राक्षधारिणः ।
जपन्तो वेदसाराख्यं शिवनामसहस्रकम् ॥

विनियोगः । ॐ नमः शम्भवे च अङ्गुष्ठाभ्यां नमः । ॐ मयोभवे च तर्जनीभ्यां नमः । ॐ नमः शङ्कराय च मध्यमाभ्यां नमः । ॐ मयस्कराय च अनामिकाभ्यां नमः । ॐनमः शिवाय च कनिष्ठिकाभ्यां नमः । ॐ शिवतराय च करतलकरपृष्ठाभ्यां नमः । एवं हृदयादि न्यसेत् । भूर्भुवस्सुवरोमिति दिग्बन्धः । अथ ध्यानम्—

कैलासाद्रिनिभं शशाङ्ककलया स्फूर्जज्जटामण्डलं
नासालोकनतत्परं त्रिनयनं वीरासनाध्यासितम् ।
मुद्राटङ्ककुरङ्गजानुविलसद्बाहुं प्रसन्नाननं
कक्ष्याबद्धभुजङ्गमं मुनिवृतं वन्दे महेशं परम् ॥

---

सन्त्यज्य तेन मर्त्यत्वं शैवीं तनुमवाप्स्यथ ।
ततः प्रसन्नो भगवान् शङ्करो लोकशङ्करः ॥
भवतां दृश्यतामेत्य कैवल्यं च प्रदास्यति ।'

—इत्यनेन ग्रन्थेन ।

किञ्च, अत्रैव षोडशाध्याये—'नामसङ्कीर्तने ध्याने सर्व एवाऽधिकारिणः' इति, 'आश्चर्ये वा भये शोके क्षुते वा मम नाम यः । व्याजेन वा स्मरेद्यस्तु स याति परमां गतिम्' इति, 'अन्यानि शैवकर्माणि करोतु न करोतु वा । शिवनाम जपेद्यस्तु मुच्यते नाऽत्र संशयः ।' इति श्रीरामं प्रति श्रीशिवेनोक्तम् ।

शुद्धस्फटिकसङ्काशं त्रिनेत्रं चेन्दुशेखरम् ।
पञ्चवक्त्रं महाबाहुं दशबाहुसमन्वितम् ॥
भस्मोद्धूलितसर्वाङ्गं नागाभरणभूषितम् ।
परिपूर्णं परानन्दं परं ज्योतिः परात्परम् ॥
पराशक्त्या श्रिया सार्धं परमानन्दविग्रहम् ।
सूर्यकोटिप्रतीकाशं चन्द्रकोटिसुशीतलम् ।
श्रीरुद्रं सच्चिदानन्दं ध्यायेत् सर्वात्मसिद्धये ॥
—इति ध्यायेत् ।

---

यद्यपि भारतादित्यपुराणेषु शिवविषयकनामसहस्राणि बहूनि सन्ति, तथापि श्रुतिमूलकत्वादिदमुत्कृष्टम् । अत एव वेदसाराख्यत्वेन प्रसिद्धम् । श्रुतिमूलत्वञ्च तत्तन्नामव्याख्यानान्ते केषाञ्चिन्नाम्नां प्रदर्शयिष्यते ॥२८-५६॥

इत्युपोद्घातप्रकरणम् ।

अथ स्तोत्रप्रारम्भः

ॐ नमः पराय देवाय शङ्कराय महात्मने ।
कामिने नीलकण्ठाय निर्मलाय कपर्दिने ॥ १ ॥

---

तत्राऽऽदौ 'नमः' इति । पराय देवायेति सविशेषणमेकं नाम । तत्र परायेति विशेषणम् । देवायेति विशेष्यम् । परः उत्कृष्टः । देवो द्योतनात्मकः, स्वयं प्रकाशः । तथाच सत्यज्ञानानन्दस्वरूपः परः शिव इत्यर्थः । परमेश्वरस्यैवोत्कृष्टत्वं पुराणेषु प्रसिद्धम् । तथाहि कालिकाखण्डे अष्टाचत्वारिंशाध्याये तृणबिन्दुना 'को देवो भोगमोक्षदः' इति पृष्टः शिलादः स्ववृत्तान्तकथनपुरःसरमुक्तवान्—

'एतस्मात् कारणात् वत्स नाऽस्त्यन्योऽभ्यधिकः शिवात् ।
सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ॥'

ब्रह्माण्डपुराणे—

अष्टाविंशाध्याये शिष्यैः सह काशीं गत्वा प्रसङ्गादृषिगणमध्ये—

सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।
वेदशास्त्रात्परं नाऽस्ति न दैवं केशवात्परम् ॥

इति व्यासेनोक्ते अनन्तरं तस्य भुजे नन्दिना स्तम्भिते सति करुणामूर्त्या देव्या प्रार्थितेन शिवेन ज्ञानदर्शने दत्ते व्यासस्य स्वभुजस्तम्भकारणं शिवद्रोह एवेति ज्ञानमभूत् । अनन्तरं च भुजस्तम्भनिवृत्त्यर्थं विघ्नेश्वरद्वारपालकनन्दिकेश्वरवृषभसप्तमातृगणकार्तिकेयरूपपरिवारदेवान् स्तुत्वा, अनन्तरं शिवोत्कर्षस्तोत्रं व्यासेन कृतम् ।

व्यासः—

एको रुद्रो न द्वितीयोऽवतस्थे
ब्रह्मैवैकं नेह नानाऽस्ति किञ्चित् ।

यद्यस्त्यन्यः कोऽपि वा कुत्रचिद्वा
व्याचष्टां तं यस्य शक्तिः समग्रा ॥
यः क्षीराब्धेर्मन्दराघातजातो
ज्वालामालः कालकूटोऽतिभीमः ।
तं सोढुं वा कोऽपरोऽभून् महेशाद्
यत्कीलाभिः कृष्णतामाप विष्णुः ॥
यद्बाणोऽभूच्छ्रीपतिर्यस्य यन्ता
लोकेशो यत्स्यन्दनं भूः समस्ता ।
वाहा वेदा यस्य येनेषुपाता-
द्दग्धाः ग्रामास्त्रैपुरास्तत्समः कः ॥
यं कन्दर्पो वीक्षमाणः समानं
देवैरन्यैर्भस्म जातः स्वयं हि ।
पौष्पैर्बाणैः सर्वविश्वैकजेता
को वा तुल्यः कामजेतुस्ततोऽन्यः ॥
यः शूलाग्रप्रोतगात्रः स हेति
विष्वक्सेनस्कन्धपार्श्वेऽवलम्बन् ।
हा हा चक्रेऽलङ्कृतिं वा विदेहः
को वा तस्माच्छूलिनः शाश्वतोऽन्यः ॥
भित्वा स्तम्भं शीघ्रमुत्खाय दैत्यं
हत्वा लोकान् ध्वंसयन्तं नृसिंहम् ।
चक्रे शान्तं शारभोग्राकृतिर्यः
सत्यं तुल्यस्तस्य शम्भोर्न चाऽन्यः ॥
ब्रह्माविष्ण्वोस्तुल्यतावादशान्त्यै
योऽभूल्लिङ्गं हंसकोलेन्द्रमृग्यम् ।
विश्वध्येयो यस्तयोर्जन्यशान्त्यै
श्रेष्ठस्तस्मादीश्वरान्नाऽपरोऽन्यः ॥

यस्याऽऽद्यन्तौ नाऽऽपतुर्धातृविष्णू
दिव्यैरब्दैरप्यसङ्ख्यैः सवेगौ ।
यं वै भूयो प्रापतुः शान्तमानौ
तुल्यो नाऽन्यो विश्वनाथस्य तस्य ॥
द्वेधा चक्रे यः स्वपादाग्ररेखा-
शक्त्या दैत्यं भ्रान्तलोकामरौघम् ।
दोर्भ्यां वेगादुग्रजालन्धराख्यं
तस्मात्तुल्यो नाऽधिको वा वृषाङ्कात् ॥
ध्वस्तो यज्ञो दक्षमूर्धा च कृत्तः
सर्वे देवाः शासितास्तत्क्षणेन ।
जातेनैतद्वीरभद्रेण कोपात्
सत्यं सत्यं तत्समो नाऽधिकोऽन्यः ॥
वायोर्वह्नेर्वज्रपाणेर्बलं च
दन्तान् पूष्णोर्यो भगाक्षं बभञ्ज ।
यत्कोपांशादुत्थितो वीरभद्रः
तस्याऽधीशस्याऽपरः कोऽस्ति तुल्यः ॥
लोकान् कृत्वा यः पशून् तत्पतिः सन्
संहारेषु स्वैरमेकस्तनोति ।
पाशान् छिन्दन् संसृतेर्ज्योतिरेषां
तुल्यो मुख्यस्तेन वा कोऽपि नाऽस्ति ॥
यं वै वेधा वेद नो नैव विष्णु-
र्नो वै वेदा नो मनो नैव वाणी ।
तं वै देवं मादृशः कोऽल्पमेधा
याथार्थ्याद्वै वेत्त्यहो विश्वनाथम् ॥
यस्मिन् सर्वं यस्तु सर्वत्र विश्वे
यो वै कर्ता यो पिता योऽपहर्ता ।

नो यस्याऽऽदिर्यः समस्तादिरेको
नो यस्याऽन्तो योऽन्तकृत्तं नतोऽस्मि ॥
यस्यैकाऽऽख्या वाजिमेधैर्न तुल्या
यस्याऽऽनत्या चैकया चेन्द्रलक्ष्मीः ।
यस्य स्तुत्या लभ्यते सत्यलोको
यस्याऽर्चातो मोक्षलक्ष्मीरुदारा ॥
नाऽन्यं देवं वेद्म्यहं श्रीमहेशान्
नाऽन्यं देवं स्तौमि शम्भोर्ऋतेऽहम् ।
नाऽन्यं देवं वा नमामि त्रिनेत्रात्
सत्यं सत्यं सत्यमेतन्मृषा न ॥
नाऽहं स्तोष्ये साम्बमूर्तेर्ऋतेऽन्यं
सायं प्रातर्नक्तमन्यत्र काले ।
तत् त्वं प्रीतो मह्यमीशान भूया
विष्णोः स्रष्टा त्वं हि विश्वस्य हेतुः ॥
इत्थं यावत् स्तौति शम्भुं महर्षि–
स्तावच्छम्भोः सत्प्रसादाद्विधेऽहम् ।
तद्दोस्तम्भं त्यक्तवानस्मि नन्दी
दृष्ट्वा तावद्व्यासशिष्या ननन्दुः ॥
तावन्नेदुर्दिव्यवाद्यानि खस्था
पौष्पी वृष्टिः काशिकान्तः पपात ।
वाचश्चाऽऽसन् साधु साध्वित्युदग्राः
सद्यो ब्रह्मन् सिद्धयक्षोगणानाम् ॥
नाऽन्यं दैवं केशवादस्ति किञ्चित्
सत्यं वच्मीत्यूर्ध्वमुद्धृत्य बाहू ।
व्यासेनोक्ते स्तम्भितौ तस्य बाहू
मुक्तौ स्तोत्रेणाऽमुनेशप्रसादात् ॥

यो वाऽप्यत्रादीशतुष्टिं विधास्यन्
लक्ष्मीं वाञ्छन् ज्ञानविज्ञानसिद्धिम् ।
तेनैवैतत् स्तोत्रमीशस्य नित्यं
श्रद्धाभक्तिप्रेमभावेन जप्यम् ॥
यद्वच्छम्भुर्मुक्तभेदेषु मुख्यो
यद्वच्छ्रेष्ठः सर्वदेवेषु विष्णुः ।
रक्षाकृद्यो मन्त्रविज्ञश्च तद्वत्
शम्भूत्कर्षस्तोत्रजापी च मुख्यः ॥
पुत्रावाप्तिः शत्रुसंहारवृद्धिः
लक्ष्मीवृद्धिः सौख्यमायुष्यवृद्धिः ।
सर्वं शम्भूत्कर्षपाठेन सिद्ध्येत्
सिद्ध्येन्मोक्षः स्तोत्रजापेन जातु ॥
शम्भूत्कर्षस्तोत्रमेतत्तु गुह्यं
ब्रह्मघ्नञ्च स्तेयिनं तल्पगञ्च ।
शुद्धं कुर्याज्जप्तमात्रेण सद्यो
मिथ्या नैतन्नन्दिकेशोऽभिवच्मि ॥
इत्युत्कर्षस्तोत्रजापी स रुद्रः
चित्ते तस्य स्वैरमीशो सदास्ते ।
तस्याऽसाध्यं नाऽस्ति मुक्तिः करस्था
किञ्चाऽप्यन्याः सिद्धयश्चिन्तितार्थाः ॥
तस्मादेकं शाङ्करं स्तोत्रराजं
भक्त्या युक्तो यः पठेत्स त्रिसन्ध्यम् ।
मुक्ताघौघो राजसूयात्तपुण्यः
सम्प्राप्तश्रीरीशसायुज्यमेति ॥ इति ।

एवमादित्यपुराणे—द्वितीयाध्याये मनुं प्रति भानुवचनम्—

'स एवाऽऽत्मा महादेवः सर्वेषामेव देहिनाम् ।

ज्ञानेन भक्तियुक्तेन ज्ञातव्यः परमेश्वरः ।
न पश्यामि महादेवादधिकं देवतान्तरम् ॥' इति ।

तत्रैव वेदा ऊचुः—

'यं प्रपश्यन्ति विद्वांसो योगेन क्षपिताशयाः ।
नियम्य करणग्रामं स एवाऽऽत्मा महेश्वरः ॥
ब्रह्मविष्ण्विन्द्रचन्द्राद्या यस्य देवस्य किङ्कराः ।
यस्य प्रसादाज्जीवन्ति स देवः पार्वतीपतिः ॥
न जानन्ति परं भावं यस्य ब्रह्मादयः सुराः ।
अद्यापि न वयं विद्मः स देवस्त्रिपुरान्तकः ॥
शृण्वन्तु देवताः सर्वाः सत्यमस्मद्वचः परम् ।
नाऽस्ति रुद्रान्महादेवादधिकं दैवतं परम् ॥' इति ।

वायव्यसंहितायाम्—

'यस्य पादरजःस्पर्शात् ब्रह्मत्वं प्राप्तवानजः ।
शार्ङ्गिणाऽपि तथा मूर्ध्ना धार्यते कः शिवात् परः ॥' इति ।

शैवे—एकादशरुद्रसंहितायां हेमसभानाथमाहात्म्ये प्रथमाध्याये वसिष्ठं प्रति ऋषीणां प्रश्नः—

'शिवक्षेत्रेषु पुण्येषु सर्वकल्मषनाशनम्
भोगमोक्षप्रदं ब्रूहि क्षेत्रं क्षेत्रविदां वर ।
यस्योपासनया सद्यः फलन्त्यभिमताः क्रियाः ।
तमाचक्ष्व परं देवं वेदविद्भिरुपासितम् ॥'

वसिष्ठः—

'सन्ति क्षेत्राणि पुण्यानि शाम्भवानि मुनीश्वराः ।
पुण्डरीकपुरं तेषु भोगमोक्षप्रदं शुभम् ॥
पुण्डरीकपुरे पुण्ये नियतानन्दताण्डवः ।
चिदम्बरेश्वरो देवो शिवः परमकारणम् ॥
हृत्पुण्डरीके यद्गूढं वेदान्तैः प्रतिपाद्यते ।
तज्ज्योतिः शक्यते द्रष्टुं पुण्डरीकपुरे द्विजाः ॥' इति ।

अत्र मूलभूता श्रुतिस्तु 'तमः परे देव एकीभवति इति, 'तेजः परस्यां देवतायाम्' इति च।

ननु परमेश्वरः सर्वोत्कृष्टः, तथापि भक्तानां लोकस्य किमायातमत आह—**शङ्कराय**-शं सुखं करोतीति शङ्करः। अत्र भक्तानां भक्त्यनुसारेण इहैव सुखकरः। सर्वलोकस्य तु आध्यात्मिकादितापत्रयनिवृत्तिपूर्वकं प्रलये काले महानन्दकरः।

उक्तञ्च शिवरहस्ये—

'स्मर्तव्यः शङ्करो नित्यं शङ्करोतीति शङ्करः।
शन्नामाऽनल्पमानन्दमनिर्वाच्यमनामयम् ॥
सततं नाम जिह्वाग्रे शङ्करेत्यस्ति यस्य सः।
दुःखभाक् न भवत्येव सत्यं सत्यं न संशयः ॥' इति।

द्रोणपर्वणि—

त्र्युत्तरद्विशततमाध्याये परमेश्वरस्य भक्तिं प्रति शङ्करत्वं स्फुटीकृतम्।

तत्र अर्जुनः—

'संग्रामे शात्रवान् निघ्नन् शरौघैर्विमलैरहम्।
अग्रतो लक्षये यान्तं पुरुषं पावकप्रभम् ॥
ज्वलन्तं शूलमुद्यम्य यां दिशं प्रतिपद्यते।
तस्यां दिशि विशीर्यन्ते शत्रवो मे महामते ॥
पद्भ्यां न स्पृशते भूमिं न च शूलं च मुञ्चति।
शूलाच्छूलसहस्राणि निष्पतन्त्यस्य तेजसा ॥
तेन भग्नानरीन् सर्वान् मद्भग्नान् मन्यते जनः।
तेन दग्धानि सैन्यानि पृष्ठतो न दहाम्यहम् ॥
भगवंस्त्वं ममाऽऽचक्ष्व को वा स पुरुषोत्तमः।
शूलपाणिर्मया दृष्टस्तेजसा सूर्यसन्निभः ॥'

व्यासः—

'प्रजापतीनां प्रथमं तेजसां प्रवरं प्रभुम् ।
भुवनं भूर्भुवं देवं सर्वलोकमहेश्वरम् ॥
ईशानमीश्वरं देवं दृष्टवानसि शङ्करम् ॥' इति ।

'नमः शङ्कराय' इति श्रुतिः । सुखकृत्त्वे निमित्तमाह—महात्मने—महांश्चाऽसावात्मा च महात्मा । स वै प्रत्यगात्मेत्यर्थः ।

पद्मपुराणे गौतमातिथ्ये शिवं प्रति हनुमान् स्तौति—

'नमो देवाय महते शङ्कराय महात्मने । योगिने योगदात्रे च योगानां गुरवे नमः ॥' इति । 'एष देवो विश्वकर्मा महात्मा' इति श्रुतिः । परमेश्वरस्य भक्तानां प्रति दुःखनिवृत्तिकरत्वे सुखकरत्वे च हेतुमाह—कामिने—कामः इच्छा, भक्तविषयदुःखनिवृत्तौ तत्सुखे च यस्य स तथा, न तु स्वस्य दुःखनिवृत्तौ सुखे च, असङ्गत्वादाप्तकामत्वाच्च । अथवा—निरन्तरं लोकोत्तरशालिदेवीसहितत्वात् । 'उमासहायं परमेश्वरं प्रभुम्'इति श्रुतिः । परमेश्वरस्य भक्तदुःखनिवृत्तिकरत्वं प्रसिद्धमिति द्योतयितुं स्तौति—नीलकण्ठाय—नीलः कण्ठो यस्य सः नीलकण्ठः । शिवस्य कण्ठे नैल्यं विष्ण्वादिसकलप्राण्यर्तिकरहालाहलविषधारणप्रयुक्तम् । तथाहि—पाद्मे पुराणे प्रथमाध्यायादौ श्रीशिवेन हालाहलविषपानं किमर्थं कृतमिति सनकादिना पृष्टः सन् नन्दिकेश्वर आह—

'ॐ नमो नीलकण्ठायेति ब्रुवन्नाम मैश्वरम् ।
संसारविषदष्टानामुत्तमं परमौषधम् ॥
ध्यायमानो महादेवं नीलकण्ठं चतुर्भुजम् ।
प्रणम्य गिरिजाधीशं प्रणतार्तिहरं परम् ॥
प्राह तेषामृषीणां तां कथां श्रीनन्दिकेश्वरः ।
श्रोतृणामपि वक्तृणामपि कैवल्यदायिनीम् ॥'

—इति श्लोकत्रयेण स्तुतिनमस्कारपुरःसरम् 'पुरा देवैर्हता दैत्या युद्धे तैस्तैर्हताः पुनः' इत्यारभ्य—

'उवाच पुण्डरीकाक्षं शम्भोः पार्श्वे स्थितं सदा ।
कालकूटमिदं पश्य कण्ठभूषणमीशितुः ॥
सुराङ्गनानां सर्वासां कण्ठमङ्गलदायकम् ।
हैमवत्या विशालाक्ष्याः कटाक्षैरमृतोपमैः ॥
शीतलीकृतमीशस्य कण्ठभूषाऽभवद्विभोः ।
श्रुत्वेति ब्रह्मणो वाक्यं देवासुरवचांसि च ॥
स्थापयित्वा विषं कण्ठे नीलकण्ठोऽभवत्तदा ॥' इत्यन्तेन ।

तत्र खलु देवासुराणां संग्रामः, अनन्तरं परस्परनाशनम्, अनन्तरमुभयेषां ब्रह्माणं प्रति गमनपुरःसरं नाशाभावोपायप्रश्नः, तदनु तैः सह विष्णुं प्रति गमनं ब्रह्मणः, अनन्तरं विष्णुना 'नाशाभावोपायः क्षीराब्धिमथनपुरःसरममृतोत्पादनम्'इत्युक्ते सर्वेषामङ्गीकारः, अनन्तरं मन्दरपर्वतं मन्थानं कृत्वा वासुकिं च योक्त्रं कृत्वा मथने कृते वासुकिमुखादुत्पन्नविषज्वालया विष्ण्वादिपरिपीडने तन्निवृत्त्यर्थं विष्ण्वादिना कैलासगमनशिवस्तोत्रशिवदर्शनस्वकृत्यकथनानन्तरं शिवं प्रति विषोपसंहारप्रार्थना कृता । तेनाऽपि तथैव कृतमिति । तदनु—

'ॐ नमो नीलकण्ठाय महादेवाय ते नमः ।
नमः शिवाय सोमाय शाश्वताय नमो नमः ॥' इति ।

एवं स्कान्दे सनत्कुमारसंहितायां काशिकवनमाहात्म्ये चतुर्थाध्यायादौ कालकूटविषनिबर्हणलीला प्रसिद्धा । 'त्रिलोचनं नीलकण्ठं प्रशान्तम्' इति श्रुतिः । ननु कामित्वे विषास्वादने च विकारित्वं शिवस्य ? नेत्याह—निर्मलाय । निर्गतानि मलानि स्वाभाविकागन्तुकरूपाणि अण्वादीनि कामक्रोधादीनि च यस्मात् स निर्मलः, सर्वदा मुक्त इत्यर्थः ।

तदुक्तं कौर्मे—'यद्ध्यानं निर्मलं शुद्धं निर्विकल्पं निरञ्जनम्। ममाऽऽत्माऽसौ तदेवेदमिति प्राहुर्विपश्चितः ॥' इति। 'निरवद्यं निरञ्जनम्' इति श्रुतिः।

लोकानां परमेश्वरस्य कामित्वादिकं वास्तवं न भवति, किन्तु लीलामात्रमिति द्योतयितुमाह—कपर्दिने—कपर्दः जटानां ग्रन्थिविशेषः, सोऽस्याऽस्तीति कपर्दी। अनेन तपोनिष्ठापुरःसरं स्वात्मारामत्वं सूचितम्। 'नमः कपर्दिने च व्युप्तकेशाय च' इति श्रुतिः ॥ १ ॥

**निर्विकल्पाय शान्ताय निरहङ्कारिणे नमः।**
**अनर्घ्याय विशालाय शालहस्ताय ते नमः ॥२॥**

स्वात्मारामत्वे हेतुमाह नामपञ्चकेन—निर्विकल्पाय—निर्गता विकल्पाः कोटिद्वयात्मका वस्तुशून्या वा प्रत्यया यस्मात् स निर्विकल्पः। अनेन निश्चयज्ञानवत्त्वेन सर्वज्ञत्वं सूचितम्। तदुक्तं स्कान्दे—'विकल्परहितं तत्त्वं ज्ञानमानन्दमव्ययम्। ये पश्यन्ति विमुक्तास्ते जीवन्तोऽपि न संशयः' इति। 'निर्विकल्पो··· निराख्यातः शुद्धो देवः' इति श्रुतिः। शान्ताय—शान्तः सर्वविकारशून्यः। तदुक्तं सूतसंहितायाम्—'शब्दहीनाय शान्ताय शब्दलभ्याय साक्षिणे। सर्वोपाधिविहीनाय स्वयं भानाय वै नमः ॥' इति। तथा पाराशरोपपुराणेऽपि—'अप्रमेयाय शान्ताय स्वप्रकाशाय साक्षिणे। स्वस्वरूपैकनिष्ठानां मुक्तिदाय नमो नमः ॥' इति। 'यत्तच्छान्तमजरममृतमभयं परं च' इति श्रुतिः। निरहङ्कारिणे—निर्गतः अहङ्कारोऽस्याऽस्तीति निरहङ्कारी। तथा च परिच्छिन्नाहङ्काररहित इत्यर्थः। 'सर्वात्मकोऽहम्' इत्यहङ्कारस्य विद्यमानत्वात्। इदञ्च ब्रह्मगीतायां पञ्चमाध्याये समस्तदेवान् प्रति परमेश्वरेण 'अहं हि सर्वम्'इत्यारभ्य 'सर्वस्वरूपेण सुसंस्थितोऽ-

हम्' इत्यन्तेनोक्तम् । शिवगीतायामपि—'पुरा ब्रह्मादयो देवाः' इत्यारभ्य 'नित्योऽनित्योऽहम्' इत्यादिना सर्वात्मकाहंभावः प्रकटीकृतः । श्रुतिस्तु 'अहमेव' इति । अत्र एवकारः परिच्छिन्नाहङ्कारादिद्वैतनिषेधार्थः । अनर्घ्याय—वस्त्वन्तरतौल्यरहितोऽनर्घ्यः । विशालाय—विशालो विस्तीर्णः, विशालः प्रदेश इत्युपपदाभावाद्देशतः परिच्छेदरहितः पूर्ण इत्यर्थः । 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्युभयत्र श्रुतिः । इदानीं भक्तान् प्रति सुखकरणे दुःखनिवृत्तिकरणे च सामर्थ्यमस्तीति द्योतयितुं स्तौति—शालहस्ताय—शालो नाम वृक्षविशेषः, स च दीर्घवृत्तः श्लक्ष्णः कठिनश्च, तद्वद्धस्तौ हस्ता वा यस्य सः शालहस्तः । एभिर्विशेषणैः परमेश्वरस्य दातृत्वं सौन्दर्यं बलवत्त्वञ्च प्रतिपादितम् । 'तुविग्रीवो वपोदरः सुबाहुरंधसो मदे' इति, 'नमो हिरण्यबाहवे' इति च श्रुतिः ।

ननु 'तुविग्रीवो वपोदरः सुबाहुः' इत्यादिना मघवाऽध्वरराज इन्द्र एव स्तूयते, न, परमेश्वरस्यैवेन्द्रत्वात् । 'तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण' इति श्रुतेः । अध्वरराजत्वञ्च परमेश्वरस्यैव , 'आवो राजानमध्वरस्य रुद्रम्' इति श्रुतेः । वज्रहस्तादिशब्देनाऽपि इन्द्ररूपी परमेश्वर एव स्तूयते । एवं परमेश्वरः क्वचिन्निर्गुणपरशिवरूपत्वेन क्वचित्सगुणत्वेन सर्वात्मकत्वरूपेण क्वचिल्लीलाविग्रह उमासहायादिस्वरूपेण क्वचिद्भक्तानुग्रहार्थं व्याधादिरूपेण क्वचिन्निग्राहकवीरभद्रशरभादिरूपेण स्तूयते ॥ २ ॥

निरञ्जनाय शर्वाय श्रुताय च परात्मने ।
नमः शिवाय भर्गाय गुणातीताय वेधसे ॥३॥

निरञ्जनाय—निरञ्जनः निर्लेपः । तदुक्तं स्कान्दे—'निर्भेदे निर्मले नित्ये निराधारे निरञ्जने । इत्यात्मन्येतत्कथं भवेदिति ।

देवदेवश्च देवश्च जगन्नाथो निरञ्जनः । निर्भयो निर्गुणो नित्यो नित्यानन्दो निरामयः' इति । 'निरवद्यं निरञ्जनम्' इति श्रुतिः । शर्वाय—शृणाति हिनस्ति सर्वाः प्रजा अन्तकाल इति शर्वः । शृणाति दुष्टदैत्यादीन् भक्तानां पापमिति वा । 'सर्वेभ्यः सर्वशर्वेभ्यः' इति श्रुतिः । श्रुताय—श्रुतः विश्रुतः प्रख्यातः वेदान्तादिषु । 'नमः श्रुताय श्रुतसेनाय च' इति श्रुतिः । परात्मने—परश्चाऽसावात्मा च परात्मा । ननु आत्मनः परविशेषणं व्यर्थम्, 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यादिनाऽऽत्मशब्देनैव परशिवस्वरूपस्योक्तत्वात्, इति चेत्? देहेन्द्रियादिविशिष्टजीवात्मनिवृत्त्यर्थं परमात्मग्रहणम् । 'तत्सर्वं पर आत्मनि प्रतिष्ठितम्' इति श्रुतिः । शिवाय—शिवो मङ्गलस्वरूपः । निर्मृष्ट-निखिल-दुःखानुषङ्गपरमानन्दरूप इत्यर्थः । तथाच शिवरहस्ये देवीं प्रति शिवः—

'सर्वाणि शिवनामानि मोक्षदान्येव सर्वदा ।
तेष्वप्यत्युत्तमं नाम शिवेति ब्रह्मसंज्ञितम् ॥
शिवनामसमं वस्तु न दृष्टं क्वाऽपि न श्रुतम् ।
रत्नरत्नमिदं नूनं नामरत्नमनुत्तमम् ॥
नित्यं कण्ठे धृतो येन शिवनाममहामणिः ।
स नीलकण्ठो भूत्वाऽन्ते नीलकण्ठे विलीयते ॥
सादरं भस्मदिग्धाङ्गो वदेच्छिव शिवेति यः ।
स संसारविनिर्मुक्तो भवत्येव न संशयः ॥
अनेकजन्मभिर्नित्यं बहुपुण्यं बहुकृतम् ।
यदि तदा शिव-शिवेति सादरं निःसरिष्यति ॥
शिवेति नाम विमलं येनोच्चारितमादरात् ।
तेन भूयो न संसार-सागरः समवाप्यते ॥
परं ब्रह्मेति विज्ञेयं शिव इत्यक्षरद्वयम् ।
तद्ब्रह्मेति विदित्वैव तदुपास्यं मुमुक्षुभिः ॥

तद्धि ब्रह्मेत्युपासीत भवति ब्रह्मवांस्ततः ।
ब्रह्मवान् ब्रह्मविद् भूत्वा ब्रह्मभूतो हि जायते ॥
अव्यक्तं परमं ब्रह्म शिव इत्यक्षरद्वयम् ।
तदेव सर्ववेदान्तप्रतिपाद्यं न संशयः ॥
शिव इत्यस्ति यन्नाम तद्धि नामोत्तमोत्तमम् ।
तदेव परमं ब्रह्म तदेवाऽहं वरानने ॥
शिवनामस्वरूपेण व्यक्तं ब्रह्माऽहमेव हि ।
शिवनामाऽहमेवेति विजानीहि यथार्थतः ॥
यदप्युक्तं परं ब्रह्म वेदान्तप्रतिपादितम् ।
तदेवेदं विजानीहि शिव इत्यक्षरद्वयम् ॥
इदमुत्पत्तिरहितं शिवनाम निरञ्जनम् ।
निराकारं परं ब्रह्म नैतस्मात् ब्रह्म विद्यते ॥
उपासितव्यमेतद्धि ब्रह्मेत्यन्वहमादरात् ।
शिव इत्यक्षराकारमक्षरं ब्रह्म शाश्वतम् ॥
तारकं ब्रह्म परमं शिव इत्यक्षरद्वयम् ।
नैतस्मादपरं किञ्चित् तारकं ब्रह्म सर्वथा ॥
इदं यत्तारकं ब्रह्म शिवनामाभिधं शिवम् ।
एतस्मिन् ब्रह्मणि श्रद्धा न विना मदनुग्रहम् ॥
नित्यं शिवेति मन्त्रेण पूजयस्व सदाशिवम् ।
नैतस्मादुत्तमो मन्त्रः श्रेष्ठो वेदेष्वपि ध्रुवम् ॥
शिवेति यः परो मन्त्रस्तत्परं ब्रह्म उच्यते ।
परं ब्रह्मस्वरूपं तत् ज्ञातुमेव न शक्यते ॥
तत्त्वं तु शिवमन्त्रस्य येन ज्ञातं भविष्यति ।
तेन तीर्ण इति ज्ञेयो घोरसंसारसागरः ॥
ततस्तेनैव मन्त्रेण पूजनीयः सदाशिवः ।' इति ।

'नमः शिवाय शिवतराय च' इति श्रुतिः। भर्गाय—भर्ज्यन्ते पच्यन्ते दह्यन्ते पापान्यनेन इति भर्गः। सर्वपापनिवर्तकत्वं शिवस्य शिवधर्मोत्तरेषु प्रसिद्धम्। तथाहि—

'छित्त्वा भित्त्वा च भूतानि हत्वा सर्वमिदं जगत्।
गच्छेदेकं विरूपाक्षं न स पापैर्विलिप्यते॥' इति।

भर्जति पचति दहति स्वसाक्षात्कारेणाऽविद्यां तत्कार्यभूतं संसारं चेति वा भर्गः। 'भर्गो देवस्य धीमहि' इति श्रुतिः। गुणातीताय—गुणैः सत्त्वरजस्तमोरूपैरतीतः निर्गुण इत्यर्थः। 'साक्षी चेता केवलो निर्गुणश्च' इति श्रुतिः। वेधसे—वेधाः विधाता जगन्निर्माता इत्यर्थः। तदुक्तं सूतसंहितायाम्—शिवं प्रस्तुत्य—

'अनेनेदं जगत्सर्वं विना न भवति क्वचित्।
एष धाता विधाता च स सर्वं सर्वदेहिनाम्॥' इति।

'स नो बन्धुर्जनिता स विधाता', 'अषाढाय सहमानाय वेधसे' इति वा श्रुतिः॥ ३॥

**महादेवाय पीताय पार्वतीपतये नमः।**
**कैवल्याय महेशाय विशुद्धाय बुधात्मने॥४॥**

महादेवाय—महांश्चाऽसौ देवश्च महादेवः। महत्त्वञ्च सकलपूज्यत्वाद् विभुत्वेन प्रमाणतो महत्त्वाद्वा। यथोक्तं साम्बपुराणे—

'पूज्यते यः सुरैः सर्वैर्महांश्चैव प्रमाणतः।
द्युतिमर्हति पूजायां महादेवस्ततः स्मृतः'॥ इति

अथर्वशिरसि च 'अथ कस्मादुच्यते महादेवः (महेश्वरः) यः सर्वान् भावान् परित्यज्याऽऽत्मज्ञानयोगैश्वर्ये महति महीयते। तस्मादुच्यते महेश्वरः' इति। अस्याऽर्थः—सर्वान् भावान् सकल-

पदार्थान् परित्यज्य समन्तात् त्यक्त्वा, आत्मज्ञानयोगैश्वर्ये 'अहं ब्रह्माऽस्मि' इति आत्मज्ञानम्, देवयोगैश्वर्यम्, तस्मिन् महति प्रौढे निष्ठां लब्ध्वा परमानन्दरूपस्वात्मतत्त्वस्फूर्तिवशात् महीयते। अथवा सर्वान् भावान् परित्यज्य बाह्यविषयासक्तिं परित्यज्य, आत्मज्ञानयोगैश्वर्ये विषयीकृतः सन् योगिभिर्महीयते पूज्यते। योगिनां यो वेदान्तमहावाक्यजन्यसाक्षात्कारस्तस्य विषयो भवति। योगिभिर्ज्ञानेन सर्वदा पूज्यत इत्यर्थः, 'ज्ञानमेव शिवार्चनमिष्यते' इति स्मरणात्। यद्वा महान् त्रिविधपरिच्छेदरहितो दीप्यत इति देवः स्वप्रकाशः, नित्यपरिपूर्णसर्वचैतन्यस्वरूप इत्यर्थः। शिवरहस्ये—

'त्रिपुण्ड्रधारणं कृत्वा महादेवमनुस्मरन्।
यो याति यत्र तत्रैव महादेवोऽधितिष्ठति॥
महादेव महादेव महादेवेत्ययं ध्वनिः।
अपमृत्युहरो नूनं कालमृत्योश्च नाशकः॥
महादेव महादेव महादेवेत्ययं ध्वनिः।
संसारबीजदावाग्निः सत्यं सत्यं न संशयः॥
महादेव महादेव महादेवेत्ययं ध्वनिः।
संसारसर्पदष्टानां दिव्यौषधमनुत्तमम्॥
महादेव महादेवेत्यरण्ये सञ्चरन् जनः।
वशीकरोति व्याघ्रादीनपि सत्यं मयोच्यते॥
महादेव महादेवेत्युच्चरन् नियतेन्द्रियः।
मृत्युं न गणयत्येव सत्यं सत्यं मयोच्यते॥
कोटयो ब्रह्महत्यानां अगम्यागमकोटयः।
सद्यः प्रलयमायान्ति महादेवेति कीर्तनात्॥
महादेवेति नामेदं यः शृणोति वदिष्यति।
न तस्य नरकावासः सत्यं सत्यं न संशयः॥

महादेव महादेव महादेवेति वादिनम् ।
वत्सं गौरिव गौरीशो धावन्तमनुधावति ॥
महादेव महादेव महादेवेति यो वदेत् ।
एक एव भवेन्मुक्तिर्द्वाभ्यां शम्भुर्ऋणी भवेत् ॥
महादेव महादेव महादेवेत्ययं ध्वनिः ।
मोक्षलक्ष्मीगृहद्वार - कपाटोद्घाटनध्वनिः ॥
महादेवः परं मित्रं महादेवः परं धनम् ।
महादेवः परा विद्या महादेवः परा गतिः ॥
महादेवेति वक्तारं दृष्ट्वा तु यमकिङ्कराः ।
पलायन्ते महाभीताः स्मरन्तो यमशासनम् ॥'

—इति । श्रुतिरुक्ता । पीताय—पीतः आच्छादितः मायादिना अथवा सितः, परित्यक्तः सर्वदोषैः । 'मायिनं तु महेश्वरम्' इति, 'नित्यः शुद्धो बुद्धो मुक्तः' इति च श्रुतिः । पार्वतीपतये—पर्वतः हिमवान्, तस्य पुत्री पार्वती । तदुक्तं सूतसंहितायाम्—'सा शिवा करुणामूर्तिर्जगन्माता त्रयीमयी । शिवभिन्ना परानन्दा शङ्करस्याऽपि शङ्करी ॥ स्वेच्छया हिमवत्-पुत्री स्वभक्तजनवत्सला ॥' इति । तस्याः पतिः प्रियः परमेश्वरः । 'अम्बिकापतये उमापतये नमो नमः' इति श्रुतिः । केवलाय—केवलो निरुपाधिकः । 'केवलो निर्गुणश्च' इति श्रुतिः । महेशाय—महांश्चाऽसावीशश्च महेशः । आनुशासनिके पर्वणि श्रीकृष्णं प्रत्युपमन्युः—

'यावच्छशाङ्कशकलामलबद्धमौलिः
न प्रीयते पशुपतिर्भगवान् महेशः ।
तावज्जरामरणजन्मशताभिघातैः
दुःखानि देहविहितानि समुद्वहामि ॥' इति ।

'क्रमेण लभ्यतेऽन्येषां मुक्तिराराधनाद् द्विज ।
आराधनान्महेशस्य तस्मिन् जन्मनि मुच्यते ॥' इति ।

'यः परः स महेश्वरः' इति श्रुतिः । विशुद्धाय—विशेषेण शुद्धो विशुद्धः । सदा सत्त्वादिमलरहितः इत्यर्थः । तदुक्तं सूतसंहितायाम्—

'एवमात्मानमद्वन्द्वं निर्विकारं निरञ्जनम् ।
नित्यशुद्धं निराभासं संविन्मात्रं परामृतम् ॥
यो विजानाति वेदान्तैः स्वानुभूत्या च निश्चितम् ।
सोऽतिवर्णाश्रमी नाऽन्यः स एव गुरुरुत्तमः ॥' इति ।

'शुद्धमपापविद्धम्' इति श्रुतिः । बुधात्मने—बुधश्चाऽसावात्मा च बुधात्मा । बुधः ज्ञानवान्, सर्वज्ञस्वरूप इत्यर्थः । 'यः सर्वज्ञः स सर्वविद्' इति श्रुतिः ॥ ४ ॥

**कैवल्याय सुदेशाय निःस्पृहाय स्वरूपिणे ।**
**नमः सोमविभूषाय कालायाऽमिततेजसे ॥५॥**

कैवल्याय—कैवल्यो मोक्षस्वरूपः । 'कैवल्यं पदमश्नुते' इति श्रुतिः । सुदेशाय—सुदेशः शोभनो देशः, कैलासवासी इत्यर्थः । 'शिवां गिरित्र तां कुरु' इति श्रुतिः ।

'चापं चाऽथ महीधरं विरचयंश्चापं गुणं वासुकिम्
काण्डं कंसरिपुं रथं वसुमतिं यन्तारमब्जोद्भवम् ।
तूणीरं जलधिं विधाय कृतवान् दग्धं पुराणां त्रयं
तस्मै चन्द्रकलाधराय विनतिं कुर्मो वयं शर्मणे ॥' इति ।

'चन्द्रललाटाय कृत्तिवाससे नमः' इति श्रुतिः । निःस्पृहाय स्वरूपिणे—इदं सविशेषणं नाम । 'निःस्पृहाय' इति विशेषणम् । निर्गता स्पृहा विषयेच्छा यस्मात् स निःस्पृहः । स्वरूपमस्याऽस्तीति स्वरूपी इत्यर्थः । 'योऽकामो निष्कामः' इति श्रुतिः ।

**सोमविभूषाय**—विशिष्टा भूषा विभूषा, सोमः विभूषा भूषणं यस्य सः सोमविभूषः। **कालाय**—विश्वं कलयति जानाति इति कालः। 'रुद्राय नमः कालाय नमः' इति श्रुतिः। **अमिततेजसे**--अमितम् अपरिच्छिन्नम्, तेजः चैतन्यम्, तदेव स्वरूपं यस्य सः अमिततेजाः। 'प्राणो ब्रह्मैव तेज एव' इति श्रुतिः ॥ ५ ॥

**अजिराय जगत्पित्रे जनकाय पिनाकिने।**
**निराधाराय सिंहाय मायातीताय ते नमः ॥६॥**

**अजिराय**--अजिरो गमनकुशलः, 'अज' गतिक्षेपणयोः इति स्मरणात्। 'नम आशवे चाऽजिराय च' इति श्रुतिः। **जगत्पित्रे**--जगत्पिता जगन्निर्माता। 'इदं सर्वमसृजत' इति श्रुतिः। **जनकाय**--सङ्कोचविशेषणाद्यभावात् लोकत्रयस्य मूर्तित्रयस्य च जनकः। 'त्रयाणां जनकं विभुम्' इति ब्रह्मजाबालश्रुतिः। **पिनाकिने**—पिनाकः अस्याऽस्तीति पिनाकी, तदुक्तं महाभारते उपमन्यूपाख्याने—

'इन्द्रायुधसहस्राभं धनुस्तस्य महात्मनः।
पिनाकमिति विख्यातं स च चैवं नगो महान् ॥
सप्तशीर्षो महाकायस्तीक्ष्णदंष्ट्रो विषोल्बणः।
ज्यावेष्टितमहाग्रीवस्ततः पुरुषविग्रहः ॥
शरश्च सूर्यसङ्काशो दृष्टः पाशुपतश्च यः।
येन च त्रिपुरं दग्धं सर्वदेवमयः शरः ॥' इति।

स च तपस्यतः कण्वस्य शिरःप्रदेशोद्भूताद्वल्मीकादुत्पन्नेन वेणुना शिवविष्णुसोमानुद्दिश्य ब्रह्मणा प्रणीतेषु त्रिषु चापेषु प्रथमः। यथोक्तम् उमामहेश्वरसंवादे—

'युगान्तरे महादेवि कण्वो नाम महामुनिः।
स हि दिव्यां तपश्चर्यां कर्तुमेवोपचक्रमे ॥'

—इत्यारभ्य—

'पिनाकं नाम मे चापं शार्ङ्गं नाम हरेर्धनुः ।
तृतीयमवशेषेण गाण्डीवमभवद्धनुः ॥
तच्च सोमाय निर्दिश्य ब्रह्मलोकगतः पुनः ।' इति ।
'पिनाकपाणिं भूतेशमुद्यत्सूर्यायुतप्रभम् ।
भूषितं भुजगैर्ध्यायेत् कण्ठे कालं कपर्दिनम् ॥'

इति रहस्यम्। 'कृत्तिवासाः पिनाकी' इति श्रुतिः। **निराधाराय**—निर्गतः आधारः यस्य सः निराधारः, स्वस्यैव सर्वाधारत्वात्। 'स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि' इति श्रुतिः। **सिंहाय**—'पिङ्' बन्धने इति धातो रूपम्। सिः इति कार्यकारण-सम्बन्धः स्वस्य सर्वदृश्यसम्बन्धो वा, तं सम्बन्धं तत्त्वमस्यादि-वाक्यजन्यप्रत्ययारूढः सन्नसौ परमेश्वरः हन्ति नाशयतीति सिंह इत्युच्यते। 'हन' हिंसागत्योरित्येतस्य रूपम्। अत्र पृषोदरा-दित्वात् साधुः। 'सिंहोऽसौ परमेश्वरः' इति श्रुतिः। **मायातीताय**—मायायाः अतीतः, सत्त्वादिगुणसामान्यरूपप्रकृति-वर्जित इत्यर्थः। 'अतमस्कममायम्' इति श्रुतिः ॥ ६ ॥

**बीजाय सर्पभूषाय पशूनां पतये नमः ।**
**पुरन्दराय भद्राय पुरुषाय महीयसे ॥७॥**

**बीजाय**—बीजं कारणम्। 'स कारणं करणाधिपाधिपः' इति श्रुतिः। **सर्पभूषाय**—सर्पाः भुजगाः भूषणानि यस्य स सर्पभूषः। ननु भूषणत्वायोग्यसर्पधारणं शिवस्याऽनुचितम्, अत्यल्पमिदमुक्तम्; अस्थ्यादिभूषणम्, श्मशानवासस्तद्भस्मानुलेपनम्, व्याघ्रहस्त्यादिचर्मवसनम्, मृग-डमरुकादिधारणम्, अपस्मारस्य पादुकात्वेन स्वीकारः इत्येवमादि बह्वस्ति, तर्हि कथं परिहारः? उच्यते—एतदेवाऽगस्त्येन पृष्टं

स्कन्दं प्रति स्कान्दे एकोनविंशाध्याये 'भगवन् सर्वधर्मज्ञ' इति प्रस्तुत्य—

'भीषणान् दंशनपरान् बीभत्सान् विषभूषितान् ।
फणीन्द्रान् भूषणत्वेन कुतो धत्ते महेश्वरः ॥'

—इत्यादिना । एतस्य सर्वस्याऽपि स्कन्देनोत्तरं दत्तम्—

'अतीव शिवभक्तस्त्वं कर्मणा मनसा गिरा ।
तेन ते निखिलं वक्ष्ये रहस्यं शम्भुचेष्टितम् ॥'

—इत्यादिना । पुनश्च तत्रैव 'पुरा हिमवता पृष्टः' इत्यादिना ऋषीणां तपश्चरणसमये तत्परीक्षार्थं दारुकावनेऽतिसुन्दररूपेण नग्नवेषेण शिव आगते ऋषिपत्नीनां क्षोभे जातेऽनन्तरं शिवं प्रति ऋषिभिः शापो दत्तः, स व्यर्थो जातः । अनन्तरं चाऽभिचारे कृतेऽग्निकुण्डादुत्पन्नेऽपस्मारे शिवेन गृहीते पादेन, अनन्तरं शिवनिग्रहार्थमागते मृगे शिवेन निगृह्य करे धृते, अनन्तरं व्याघ्रेऽपि निगृहीते, अनन्तरं शिवपीडनार्थमागते टङ्काद्यायुधसमूहे शिवेन पुष्पवद्धृते, तदनु कुण्डाच्छिवस्य मोहार्थं निर्गतभूत-प्रेत-पिशाचादयस्तन्नमस्कारपूर्वकं तस्यैव भृत्यरूपा जाताः—

'ततः पञ्चफणा नागा निःश्वसन्तो विषोल्बणाः ।
शीघ्रमुत्थाय कुण्डेभ्यः समाजग्मुर्महेश्वरम् ॥
ऋषीणामनभिज्ञानां शिवं कोपाग्नयो यथा ।
तानुपादाय नागेन्द्रान् ज्वलितान् रूपशोभितान् ॥
दधाराऽऽभरणत्वेन तेनाऽऽसीन्नागभूषणः ।
अपरैरपि नागेन्द्रैर्वासुकिप्रमुखैः शिवः ॥
वैनतेयाद्भयोद्विग्नैरलञ्चक्रे तनुर्निजाम् ।'

—इति । एवमतिभीषणसर्पवत्त्वेनाऽतिप्रहरणायुधवत्त्वेन च तापत्रयनिवृत्त्या यतिभिः परमेश्वरो ध्येय इत्यत्र इदं रहस्यम्—

'उद्यद्भास्करकोटिप्रकाशमादीप्तदहनमूर्धानम् ।
भीषणभुजङ्गभूषं ध्यायेद्विविधायुधं रुद्रम् ॥' इति ।

'अहींश्च सर्वान् जम्भयन् सर्वाश्च यातुधान्यः' इति श्रुतिः । **पशूनां पतये**—पशूनां ब्रह्मादीनां द्विपदां चतुष्पदां च पतिः नायकः ।

'ब्रह्माद्याः स्थावरान्ताश्च पशवः परिकीर्तिताः ।
तेषां पतित्वाद्विश्वेशो भवः पशुपतिः स्मृतः ॥'

—इति पुराणम् ।

'सर्वदा यत्पशून् पाति तेषु यद्रमते पुनः ।
तेषामधिपतिर्यच्च तस्मात्पशुपतिः स्मृतः ॥'

—इति महाभारतम् । 'हरिकेशेभ्यः पशूनां पतये नमः' इति श्रुतिः । **पुरन्दराय**—सुरशत्रूणां पुराणां दारणात् पुरन्दरः । 'वाचंयमपुरन्दरौ च' इति निपातनात् । 'स तिस्रः पुरो हित्वा' इति श्रुतिः । **भद्राय**—भद्रः मङ्गलस्वरूपः, परमानन्दरूपत्वात् । 'एष एव भद्रः' इति श्रुतिः । **पुरुषाय**—सर्वस्य कार्यप्रपञ्चस्य स्वरूपेण पूरयिता । यद्वा सर्वासु पूर्षु शेते इति पुरुषः । तदुक्तं ब्रह्मगीतायाम्—

'पुरुषो नाम सम्पूर्णः शिवः सत्यादिलक्षणः ।
साम्बमूर्तिधरो नाऽन्यो रुद्रो विष्णुरजोऽपि वा ॥'

—इति । 'अव्यक्तात्पुरुषः परः' इति श्रुतिः । **महीयसे**—महीयान् महत्तरः, अपरिच्छिन्न इत्यर्थः । 'महतो महीयान्' इति श्रुतिः ॥७॥

**महासन्तोषरूपाय ज्ञानिने शुद्धबुद्धये ।**
**वृद्धरूपाय तपसे नमस्ते परमात्मने ॥ ८ ॥**

**महासन्तोषरूपाय**—महासन्तोषः निरतिशयानन्दः । 'विज्ञानमानन्दं ब्रह्म' इति श्रुतिः । **ज्ञानिने**—ज्ञानी सर्वज्ञ

इत्यर्थः । 'यः सर्वज्ञः' इति श्रुतिः । शुद्धबुद्धये—शुद्धा विशेषतः सर्वापरोक्षरूपा बुद्धिर्ज्ञानं यस्य सः शुद्धबुद्धिः । 'यः सर्वज्ञः स सर्ववित्' इति श्रुतिः । वृद्धरूपाय—पूर्णस्वरूपाय । 'नमो वृद्धाय च' इति श्रुतिः । तपसे—तपः सर्वदोषविनिर्मुक्तं स्वयंप्रकाशमानं ब्रह्मेत्यर्थः । 'तपसोऽध्यजायत' इति श्रुतिः । परमात्मने—परमश्चाऽसावात्मा च परमात्मा कार्यकारणविलक्षणो नित्यशुद्धबुद्धमुक्तस्वभावः । गीतासु स्मर्यते—

'उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः ।
परमात्मेति चाऽप्युक्तो देहेऽस्मिन् पुरुषः परः ॥' इति ।

उक्तश्च वासिष्ठे—

'चितेर्जीवस्वभावाया यदा चेत्त्योन्मुखं वपुः ।
चिन्मात्रं निर्मलं शान्तं तद्रूपं परमात्मनः ॥' इति ।

'यः सर्वान् प्राणान् परमात्मनि' इति श्रुतिः ॥ ८ ॥

**पूर्वजाय सुरेशाय ब्रह्मणेऽनन्तमूर्तये ।**
**निरक्षराय सूक्ष्माय कैलासपतये नमः ॥ ९ ॥**

पूर्वजाय—सर्वप्राण्यपेक्षं यदस्य पूर्वकालावस्थायित्वं तदेव पूर्वत्वं जननेन यस्येति पूर्वजायेत्यालक्ष्यते, मुख्यजन्मनोऽभावात् । 'नमः पूर्वजाय' इति श्रुतिः । सुरेशाय—सुराणां ब्रह्मादीनामीशः सुरेशः । 'तं दैवतानां परमं च दैवतम्' इति श्रुतिः । ब्रह्मणे—ब्रह्म चैतन्यं परिपूर्णं सर्वाधिष्ठानं प्रत्यगभिन्नम् । प्रत्यगभिन्नत्वं च स्फुटीकृतमभियुक्तैः—

'अहमस्मि यदाभामि कदाचिन्नाऽहमप्रियः ।
ब्रह्मैवाऽहमतः सिद्धः सच्चिदानन्दलक्षणम् ॥'

—इति । भाष्यकारैरप्युक्तम्—

'यल्लाभान्नाऽपरो लाभो यत्सुखान्नाऽपरं सुखम् ।
यज्ज्ञानान्नाऽपरं ज्ञानं तद्ब्रह्मेत्यवधारयेत् ॥' इति ।

वासिष्ठेऽपि—

'ब्रह्म चिद्‌ब्रह्म भुवनं ब्रह्म भूतपरम्पराः ।
ब्रह्माऽहं ब्रह्म मच्छत्रुर्ब्रह्म सन्मित्रबान्धवाः ॥' इति ।

उक्तश्च सूत्रकारैः ब्रह्मणः सर्वात्मकत्वं सूत्रैकदेशेन—'दाशकितवादित्वमधीयत एके' इति । विवृतं च भाष्यकारैः श्रुत्युदाहरणपुरःसरम्—'ब्रह्म दाशा ब्रह्म दासा ब्रह्मैवेमे कितवाः' इत्यादिना । 'ब्रह्म ह देवेभ्यो विजिग्ये' इति श्रुतिः । **अनन्तमूर्तये**—अनन्ताः ब्रह्मादिस्थावरान्ताः मूर्तयः शरीराणि यस्य सोऽनन्तमूर्तिः । 'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी । त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतो मुखः ॥' इति श्रुतिः, 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते ।' इति च श्रुत्यैव अनन्तमूर्तित्वं स्पष्टम् । **निरक्षराय**—निर्गतान्यक्षराण्यभिधानरूपाणि यस्मात् स निरक्षरः । 'यतो वाचो निवर्तन्ते' इति श्रुतिः । **सूक्ष्माय**—सूक्ष्मः सर्वान्तर इन्द्रियाद्यगम्यः, न तु परमाणुतुल्य इत्यर्थः । 'महतो महीयान्' इति श्रुतिः । महाभारते—

'चैतन्यं सर्वतो नित्यं सर्वप्राणिहृदि स्थितम् ।
सर्वातीतं च सूक्ष्मं च तस्मै सूक्ष्मात्मने नमः ॥' इति ।

'सूक्ष्मं सौम्यं पुरुषम्' इति श्रुतिः । **कैलासपतये**—कैलासस्य कैलासपर्वतस्य पतिरधिष्ठाता । 'गिरिशन्ताभिचाकशीहि' इति 'कैलासशिखरे रम्ये शङ्करस्य शिवालये । देवतास्तत्र मोदन्ते तन्मे मनः शिवसङ्कल्पमस्तु ॥' इति च श्रुतिः ॥९॥

## निरामयाय कान्ताय निरातङ्काय ते नमः ।
## निरालम्बाय विश्वाय नित्याय यतये नमः ॥१०॥

**निरामयाय**—निर्गताः आमयाः रोगाः यस्मात् स निरामयः । 'शोकं मोहजरामृत्युमत्येति' इति श्रुतिः । **कान्ताय**—

अभिमतरूपं देहं वहन् कान्तः। 'कामाय कामरूपिणे' इति श्रुतिः। **निरातङ्काय**—'आतङ्के सज्वरे रोगे साध्वसे मुरजध्वनौ' इति रत्नमाला, 'रुक्तापशङ्कास्वातङ्कः' इत्यमरश्च। तथा च साध्वसरूपादातङ्कान्निष्क्रान्तो निरातङ्कः निर्भय इत्यर्थः। 'अजरोऽमरोऽमृतोऽभयो ब्रह्म' इति श्रुतिः। **निरालम्बाय**—आलम्बादालम्बनात् अधिष्ठानस्वरूपेण विद्यमानान्निर्गतो निरालम्बः। 'सर्वाधिष्ठानसन्मात्र' इति श्रुतिः। **विश्वाय**—विश्वस्य जगतः कारणत्वेन विश्वं ब्रह्म इत्युच्यते। यद्वा परमात्मनो न भिन्नमिदं विश्वं परमार्थतः, तेन विश्वमित्यभिधीयते ब्रह्म; 'ब्रह्मैवेदं विश्वमिदं वरिष्ठम्', 'पुरुष एवेदं विश्वम्' इति श्रुतेः तद्भिन्नं न किञ्चित् परमार्थतः सदस्ति। अथवा विशतीति विश्वम्—ब्रह्म, 'तत्सृष्ट्वा तदेवानु प्राविशत्' इति श्रुतेः। किञ्च संहृतौ विशन्ति विश्वानि भूतानि ब्रह्मणि, 'यत्प्रयन्त्यभिसंविशन्ति' इति श्रुतेः। तदुक्तं सूतसंहितायाम्—

'विश्वक्सेनाय विश्वाय विश्वोत्पत्त्यादिहेतवे।
विश्वविज्ञानरूपाय विमलाय नमो नमः॥' इति।

'विश्वं पुराणं तमसः परस्तात्' इति श्रुतिः। **नित्याय यतये**—इदं पदद्वयविशिष्टमेकं नाम। यतिः विषयाभिलाषं विना आत्मज्ञाने यतनशीलः। नित्य इति विशेषणेन सर्वदा यतनशीलः। उक्तं च श्रुत्या—'यः सर्वान् भावान् परित्यज्यात्मज्ञानयोगैश्वर्ये महति महीयते तस्मादुच्यते महादेवः' इति। अस्याऽयमर्थः—सर्वान् भावान् सकलान् पदार्थान् परित्यज्य समन्तात् त्यक्त्वा आत्मज्ञानयोगैश्वर्ये 'अहं ब्रह्मास्मि' इत्यात्मज्ञानं तदेव योगैश्वर्यं तस्मिन् महति प्रौढे निष्ठां लब्ध्वा परमानन्दरूपस्वात्मतत्त्वस्फूर्तिविशेषात् महीयते इति॥ १०॥

**आत्मारामाय भव्याय पूज्याय परमेष्ठिने ।**
**विकर्तनाय सूर्म्याय शम्भवे विश्वरूपिणे ॥११॥**

**आत्मारामाय**—आत्मारामः आत्मन्येव आरामः आरमणं—क्रीडादि न तु विषयेषु—यस्य स आत्मारामः। 'न हि स्वात्मारामं विषयमृगतृष्णा भ्रमयति' इति शिवरहस्ये सप्तमांशे। श्रुतिस्तु पूर्वनामन्युक्तैव। **भव्याय**—भव्यं कुशलम्, 'भव्यगेय' इत्यादिना भवतीति भव्यम् इति कर्तरि यत्प्रत्ययान्तत्वेन निपातनात् साधुता, तदस्याऽस्तीति भव्यः, अर्शाद्यच् प्रत्ययः। **पूज्याय**—पूजायोग्यः पूज्यः सर्ववन्द्य इत्यर्थः। तदुक्तं पाराशरोपपुराणे—

'जन्मना लब्धजातीनामाश्रमाणां तथैव च।
प्रधानेन महादेवः पूज्यो नान्योऽस्ति सिद्धये ॥' इति।

'ब्रह्म ह देवेभ्यः' इति प्रस्तुत्य 'किमिदं यक्षम्' इति श्रुतिः। **परमेष्ठिने**—परमे जगद्रक्षणाभावे स्थितः स परमेष्ठी। 'स परमेष्ठी ब्रह्मा' इति श्रुतिः। **विकर्तनाय**—विशेषेण कृन्तति तत्त्वमस्यादिमहावाक्यजन्यप्रत्ययारूढः सन्नज्ञानं तत्कार्यं च सर्वं छिनत्तीति विकर्तनः सर्वसंहारसमर्थ इत्यर्थः। 'परिभावा सह' इति श्रुतिः। **सूर्म्याय**—शोभना ऊर्मयो यस्याः सा सूर्मिः, 'गङ्गादिनदी सूर्मिः कल्याणोर्मिस्रोत' इति निरुक्तम्, तत्र भवः सूर्म्यः। 'नम उर्व्याय च सूर्म्याय च', 'योऽप्सु तिष्ठन्' इत्यादिश्च श्रुतिः। **शम्भवे**—शं सुखं भक्तानां भावयतीति शम्भुः। तदाहुरागमिकाः—

'भुक्तिं मुक्तिमणूनां स्वव्यापारे समर्थताऽऽधानम्।
जडवर्गस्य विधत्तेसर्वानुग्राहकः शम्भुः ॥' इति।

सूतसंहितायाम्—

'ज्ञात्वा यः कीर्तयेच्छम्भोर्नामान्यमिततेजसः।
मुक्तिः करतले तस्य स्थितेति मुनयो जगुः ॥' इति।

वायव्यसंहितायामपि—

'सर्वैश्वर्येण सम्पन्नो नाम्नां सर्वेश्वरः स्वयम् ।
सर्वैर्मुमुक्षुभिर्ध्येयः शम्भुराकाशमध्यगः ॥' इति ।

'शम्भुराकाशमध्यः' इति श्रुतिः । **विश्वरूपिणे**—विश्वानि सर्वाणि चेतनाचेतनात्मकानि रूपाणि अस्य सन्तीति विश्वरूपी । परमेश्वरस्य विश्वरूपित्वं श्रीरुद्राथर्वशीर्षादिषु बहुधा प्रपञ्चितम् । उक्तञ्च पाराशरोपपुराणे—

'विग्रहो देवदेवस्य विश्वमेतच्चराचरम् ।'—इति ।

सूतसंहितायामपि—

'विश्वरूपाय विश्वासलभ्यायाऽविदितात्मने ।
विश्वोत्तीर्णाय विश्वस्य साक्षिभूताय ते नमः ॥'—इति ।

'विश्वरूपाय वै नमः' इति श्रुतिः ॥११॥

## तारा य हंसनाथाय प्रतिसर्याय ते नमः ।
## परावरेशरुद्राय भवायाऽलङ्घ्यशक्तये ॥१२॥

**ताराय**—गर्भ-जन्म-जरा-मरण-संसारमहाभयात्तारयतीति तारः । 'नमस्ताराय नमः शम्भवे च' इति श्रुतिः । **हंसनाथाय**—हन्ति शीघ्रं गच्छतीति हंसः, 'मनसो जवीयः' इति श्रुतेः ; अविद्यां तत्कार्यं च विनाशयतीति वा हंसः, स चाऽसौ नाथश्चेति हंसनाथः, ईशत्वात् । अथवा हन्ति ध्वान्तमिति हंसः—सूर्यस्तस्य नाथः, 'तदक्षरं तत्सवितुर्वरेण्यम्' इति श्रुतिः, स हंसनाथ इति । **प्रतिसर्याय**—मनसो बाह्यविषयानुसरणात् प्रतिकूलं सरणम्—मनसो बाह्यविषयानुसरणनिरोधपूर्वकं प्रत्यगात्मनि सरणम्—प्रतिसरः, तद्रागानुग्राहकत्वेन भवः प्रतिसर्यः, 'ईश्वरानुग्रहादेव पुंसामद्वैतवासना' इति स्मरणात् । 'नमः सोभ्याय च प्रतिसर्याय च' इति श्रुतिः । **परावरेशरुद्राय**—परावरश्चाऽसावीशश्च स

चाऽसौ रुद्रश्च स परावरेशरुद्रः। ननु परावरेश इत्येवाऽलम्, रुद्र इत्यधिकम्—अत्यल्पमित्युक्तम्; ईश इत्यप्यधिकः, परावरशब्देनैव परशिवस्य प्रतिपादनात्, 'तस्मिन् दृष्टे परावरे' इति श्रुतेः। किञ्च अवर इत्यंशोऽप्यधिकः, परः इत्यनेनैव तस्याऽभिधानात्; 'यत्तच्छान्तमजरममृतमभयं परञ्च' इति श्रुतेः,—कथं तर्हि? शृणु; परशिवस्य इन्द्रसूर्यवह्निब्रह्मविष्णुरुद्रेश्वराद्यपेक्षया निरतिशयोत्कर्षादिप्रतिपादनपरं नाम। तथाहि—'विश्वस्मादिन्द्र उत्तरः', अग्निरग्रे प्रथमः। 'सूर्य आत्मा जगतस्तस्थुषश्च, 'ब्रह्मा देवानां प्रथमः', 'विष्णुः··· परमः', 'विश्वाधिको रुद्रो महर्षिः' इत्यादिश्रुतिवशात् परशिवे केषाञ्चिदुत्कृष्टत्वसन्देहः स्यात्, तन्निवृत्त्यर्थमिदं प्रवृत्तम्। तथाहि 'परः' इत्युक्ते इन्द्रादेरुक्तिः स्यात्, तन्निवृत्त्यर्थं परावरेति। यद्यपि ब्रह्मा इतरदेवापेक्षया उत्कृष्टः; तथापि पितामहस्वरूपकमलासनापेक्षया निकृष्टः। तथा च अस्मदाद्यपेक्षया इतरदेवाद्यपेक्षया च परः इन्द्रादिः यस्मादवरः स ब्रह्मा परावरः। एवञ्च परावरस्य कमलासनस्य उत्कृष्टत्वनिवृत्त्यर्थमीश इति पदप्रवृत्तिः। तथा च परावरस्य कमलासनस्य ईशः पद्मनाभ उक्तः स्यात्। ननु ईशशब्दस्य परमेश्वरे रूढत्वात् कथमनेन विष्णुरुक्तः? परावरप्रतियोगिमहिम्ना 'लोकेशो हृषीकेशः' इत्यादिवदुपपत्तेः, अत उक्तम्—'रुद्रः' इति। ननु सर्वदुःखनिवारकत्वात् विष्णोः तेनाऽपि स एवोक्तः? न; 'रूढिर्योगमपहरति' इति न्यायात्। एवञ्च अस्मदाद्यपेक्षया परावरशब्दवाच्या इन्द्रादिब्रह्मविष्णुरुद्रेश्वरसदाशिवपर्यन्ता अवरा निकृष्टा यस्मात्स परावरः परशिव एव। एवञ्च पूर्वोक्त एव समासः। तथा च सर्वोत्कृष्टः सर्वैश्वर्यसम्पन्नः सर्वदुःखप्रहर्ता निर्मृष्टनिखिलदुःखानुषङ्गपरमानन्दरूपः परशिव एवाऽनेन नाम्ना उक्तः। तथा चोक्तमभियुक्तैः—

'इन्द्रं मित्रं वरुणमनिलं पद्मजं विष्णुमीशं
प्राहुस्ते ते परमशिव ते मायया मोहितास्त्वाम् ।
एतैः साकं सकलमपि यच्छक्तिलेशे समाप्तं
स त्वं देवः श्रुतिषु विदितः शम्भुरित्यादिदेवः ॥'—इति ।

भवाय—भवत्यस्मात् सर्वमिदं जगदिति भवः । महाभारते द्रोणपर्वणि व्यासः—

'देवदेवस्त्वचिन्त्यात्मा अजय्यो विष्णुरव्ययः ।
सर्वरूपं भवं ज्ञात्वा लिङ्गेऽर्चयति तं प्रभुम् ॥'—इति ।

'नमो भवाय च' इति श्रुतिः । अलङ्घ्यशक्तये—अलङ्घ्या अनिवार्या—यस्य यस्य यद्यत् कार्यं नियमितं तत्तत्तेनाऽवश्यं कर्तव्यमित्येवमाज्ञा, 'भीषाऽस्माद्वातः पवते' इत्यादिश्रुतेः ; सा—शक्तिः यस्य सोऽलङ्घ्यशक्तिः । वायव्यसंहितायाम्—उपरिभागे श्रीकृष्णोपमन्युसंवादे तृतीयाध्याये—

'अत्याश्चर्यमिदं कृष्ण शम्भोरमितकर्मणः ।
आज्ञाकृतं शृणुष्वैतच्छ्रुतं श्रुतिमुखे मया ॥'

—इत्यारभ्य देवासुरसंग्रामे प्राप्ते असुरेषु पराजितेषु, अनन्तरं दिक्पालेषु प्रत्येकं प्रत्येकं मयैव जिता इत्येवं विवदमानेषु, अनन्तरं तान्निगृह्याऽस्माभिरेव जिता इति ब्रह्मविष्ण्वादिषु उत्थितेषु, तेषां गर्वनिवृत्त्यर्थं परमेश्वरेण तृणे स्थापिते, तद्विकारासमर्थेषु विष्ण्वादिष्वतीवखिन्नेषु परमेश्वरे अन्तर्हिते 'करुणामूर्तिरूपा या वचनं साऽब्रवीत्' इत्यारभ्य—

'यस्य शक्तिरमोघाऽपि मायाव्याप्तिं वितन्वती ।
मोचयत्येव यद्भक्तं स युष्माकमगोचरः ॥'—इति ॥१२॥

इन्द्रध्वंसनिधीशाय कालहन्त्रे मनस्विने ।
विश्वमात्रे जगद्धात्रे जगन्नेत्रे नमो नमः ॥१३॥

इन्द्रध्वंसनिधीशाय—इन्द्रस्य ध्वंसो येन स इन्द्रध्वंसः, स चाऽसौ निधीशश्च इन्द्रध्वंसनिधीशः । ननु शिवस्येन्द्रध्वंसकरत्वमप्रसिद्धं निधीशत्वं च ? उच्यते—इन्द्राभिमानध्वंसकरत्वात् । इदञ्च तलवकारश्रुतिप्रसिद्धम् । तथा हि—'ब्रह्म ह देवेभ्यो विजिग्ये' इत्यारभ्य, 'मघवन्नेतद् विजानीहि किमेतद्यक्ष्यमिति । तथेति तदभ्यद्रवत्तस्मात्तिरोदधे' इत्यन्तेन । तत्र हि देवासुरसंग्रामः, सुराणामीशानुग्रहाज्जयः, तेषां तदज्ञानम्, अस्माकमेव जयः इत्यभिमानस्तन्निवृत्त्यर्थमीशाविर्भावः, तदनु तेन स्थापिततृणदाहादानासामर्थ्यकथनमग्निवाय्वोः, अनन्तरं यक्षरूपमीशं प्रतीन्द्रगमनम्, तत्राऽग्निवायुभ्यामीशस्य संवादः, इन्द्रं प्रति तु संवादमकृत्वैवाऽन्तर्दधे परमेश्वरः, इतीन्द्रस्याऽभिमानभङ्गः । किञ्चैतत् उपब्रह्मगीतायाम्—'इन्द्रोऽतीव विषण्णः' इत्यादिना इन्द्रस्य विषादः प्रपञ्चितः । 'सम्भावितस्य चाऽकीर्तिर्मरणादतिरिच्यते' इति न्यायः । निधीशत्वं च प्रसिद्धम्—निधीनां हिरण्यप्रधानत्वात् हिरण्यस्य च परमेश्वरायत्तत्वात्, 'नमो हिरण्यबाहवे', 'हिरण्यपतये' इति श्रुतेः । किञ्च यक्षराजस्याऽपि निधीशत्वं परमेश्वरानुग्रहाल्लब्धमिति काशीखण्डादौ प्रसिद्धम् । शिवपुराणेऽपि—

'तदा शतमखस्याऽपि सवज्रो दक्षिणः करः ।
सिसृक्षुरिव तद्वज्रं चित्रे कृत इवाऽभवत् ॥'—इति—

दक्षाध्वरध्वंसवेलायां इन्द्रस्य हस्तः सवज्रो वीरभद्रेण स्तम्भित इति प्रसिद्धम् । ननु आदित्यपुराणे द्विषष्टितमाध्याये स्कन्देन इन्द्रस्य गर्वनिरोधः कृत इति प्रसिद्धम्—'शरेणैरावतं विद्ध्वा' इत्यादिना, तत्कथं पर उच्यते ?

यद्यपि स्कन्दस्य इन्द्रध्वंसकरत्वमस्ति; तथापि निधीशत्व-मप्रसिद्धम् । निधीशाय इत्येव उक्ते कुबेरस्याऽपि [ग्रहणं] स्यात्, अत उक्तम्—'इन्द्रध्वंसनिधीश' इति । इदश्च नाम—'इन्द्रो अपामिन्द्र इत् पर्वतानाम् ।', 'इन्द्रो वृत्राणि जिघ्नते ।', 'इन्द्रं गच्छन्' इति वा इति इन्द्रस्यैव स्तुतिः यज्ञसम्बन्धितया बहुधा दृश्यते, अत इन्द्रः उत्कृष्ट इति—श्रीमदाशङ्कानिवृत्त्यर्थम् । कालहन्त्रे—कालस्य मृत्योर्हन्ता । 'मृत्युर्यस्योपसेचनम्' इति श्रुतिः । मनस्विने—भक्तापेक्षितदानशीलः । 'तमीशानं वरदं देवम्' इति श्रुतिः । विश्वमात्रे—'विश्वस्य माता व्यापी ज्ञाता वा । 'सर्वज्ञः' इति श्रुतिः । जगद्धात्रे—जगतां कर्ता । जगन्नेत्रे—जगतां नियन्ता जगन्नेतृनियमनकर्ता वा जगन्नेता । 'सर्वं तत् प्रज्ञानेत्रम्' इति श्रुतिः उभयत्राऽपि ॥ १३ ॥

जटिलाय विरागाय पवित्राय मृडाय च ।
निरवद्याय पात्राय स्तेनानां पतये नमः ।
नादाय रविनेत्राय व्योमकेशाय ते नमः ॥१४॥

जटिलाय—जटा अस्य सन्तीति जटिलः, अनेन [शिवेन] लोकस्तपःप्रधानो भवेदिति लोकानुग्रहार्थतया तपस्वित्वं स्वीकृतम्, तदनेन नाम्ना सूचितम्, 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः' इति न्यायात् । 'कपर्दिने' इत्यत्र श्रुतिरुक्ता । एवमुत्तरत्राऽपि पूर्वोदाहृता [श्रुतिः] न प्रदर्शयिष्यते । विरागाय—विगतो रागो यस्य विरागः । 'कथमनेनेदृशेनानिच्छन्' इति श्रुतिः । पवित्राय—पवित्रः पावनः, परमस्तु पुमान् ध्यातः दृष्टः कीर्तितः श्रुतः पूजितः स्मृतः प्रणतश्च सर्वान् पापान् उन्मूलयतीति । आदित्यपुराणे मानवसंहितायां त्रिपञ्चाशदध्याये गौरी—

'आद्यक्षरं निर्गुणमप्रमेयं
ज्योतिःस्वरूपं प्रवदन्ति सूरयः ।
दूरं गतं देवमनन्तमूर्तिं
नमामि सूक्ष्मं परमं पवित्रम् ॥' —इति ।

'पुष्करमहं पवित्रमहम्' इति श्रुतिः । **मृडाय**—मृडति सुखयतीति मृडः रुद्रः । 'मृडा नो रुद्रोत नो 'इति श्रुतिः । **निरवद्याय**—निरवद्यः अगर्हणीयः । 'निरवद्यं निरञ्जनम्' इति श्रुतिः । **पात्राय**—बदरस्य कुण्डमिव जगत आधारभूतत्वात् पात्रत्वमीश्वरस्य ।

'दलं किञ्चित्समादाय चुलकं जलमेव वा ।
यो दत्ते नियमेनाऽसौ तस्मै दत्ते जगत्त्रयम् ॥' —इति—

चुलकजलैकदानमात्रेण महाफलजनकत्वात् 'तं देवेषु ब्राह्मणाः' इति श्रुत्या महाब्राह्मणत्वेन उक्तत्वाच्च शिवस्य दानपात्रत्वं सत्यभामा भामेतिवत् । **स्तेनानां पतये**—स्तेनाः चोराः तेषां पतिः परिवृढः—तेषां पापनाशको वा । 'स्तेनानां पतये नमः' इति श्रुतिः । **नादाय**—नादोऽस्यास्तीति नादः । ब्रह्मविष्ण्वादिस्तोत्ररूपाणाम् 'नमो ब्रह्मणे नमो अस्त्वग्नये' इत्यारभ्य 'नमो विष्णवे महते करोमि' इत्यन्तानाम् 'नम इन्द्राय नमो वरुणाय' इत्येवमादीनां श्रुत्या परमेश्वरे अर्पितत्वात् । 'स्तोमं वो अद्य रुद्राय शिक्वसे क्षयद्वीराय नमसा दिदिष्टन' इति च श्रुतिः । अस्या अयमर्थः—हे देवाः वः युष्माकं स्तोमं स्तोत्रं ब्रह्मादिभिः कृतम्, अद्य इदानीं नमसा नमस्कारेण रुद्राय शिक्वसे शिक्षकाय क्षयद्वीराय क्षयं गच्छन्ति वीराः वीरभद्रप्रभृतयः यं प्राप्य स क्षयद्वीरः तस्मै क्षयद्वीराय—दिदिष्टन प्रयच्छतेति । **रविनेत्राय**—रविः सूर्यः स नेत्रं लोचनं यस्य स रविनेत्रः, त्रिलोककर्मसाक्षिभूताक्ष इति भावः । 'सर्वस्य

साक्षी' इति श्रुतिः । व्योमकेशाय—गङ्गाधारणसमये व्योमवद्विशालजटावलयरूपः केशोऽस्येति व्योमकेशः ॥१४॥

चतुर्भोगाय साराय योगिनेऽनन्तमायिने ।
धर्मिष्ठाय वरिष्ठाय पुरत्रयविघातिने ॥ १५ ॥

चतुर्भोगाय—चत्वारो भोगाः—जाग्रत्-स्वप्न-सुषुप्ति-तुरीय-रूपावस्थासु वैश्वानर-तैजस-प्राज्ञ-शुद्धचैतन्यतुरीयस्वरूपेण अनुभूयमानाः स्थूलप्रविविक्तसौषुप्तानन्दस्वरूपानन्दाः—यस्य स चतुर्भोगः। 'जागरितस्थानो बहिःप्रज्ञः' इत्यादिश्रुतिः । साराय—पञ्चकोशेष्वन्तःसारत्वेन विद्वद्भिरुपलभ्यमानपरमानन्दस्वरूपः परशिवः सारः। 'रसो वै सः। रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' इति श्रुतिः। यथोक्तं शिवगीतायाम्—

'उद्घाट्योद्घाट्यैकमेकं यथैव कदलीतरोः ।
वल्कलानि ततः पश्चाल्लभते सारमुत्तमम् ॥
तथैव पञ्चकोशेषु मनः सङ्क्रामयेत् क्षणात् ।
तेषां मध्ये ततः सारमात्मानमपि विन्दति ॥'—इति।

योगिने—बाह्यविषयव्यापारपूर्वकमात्मज्ञानयोगैश्वर्यं सर्वदा अस्ति इति योगी ।

'क्वेदं वेदमयं नामसहस्रं काऽहमल्पधीः ।
तथापि शम्भोर्नामार्थमाहात्म्यस्य विचेष्टितम् ॥'—इति।

## इति प्रथमशतकभाष्यम्

# अथ द्वितीयशतकभाष्यम्

ॐ **अनन्तमायिने**—अनन्तमाया अस्य सन्तीति अनन्तमायी । तथाहि—महाप्रलये प्रपञ्चतिरोधानम् । व्यवहारकाले आकाशादिभूतभौतिकसर्वप्रपञ्चदर्शनम् , तत्रैव स्वर्गनरकाद्यवान्तरभेददर्शनम् पुनश्च महाप्रलये सर्वादर्शनम्, किञ्च व्यवहारकाल एव जीवानां जाग्रद्दशायां सर्वविषयप्रदर्शनम्, स्वप्नदशायां जाग्रद्विषयतिरोधानम्, अपूर्वप्रपञ्चविभावनम् , पुनश्च सुषुप्तिकाले सर्वाच्छादनम्, एतत्सर्वमैन्द्रजालिकवन्मायावीव वा करोति । उक्तश्च भाष्यकारैः—

'बीजस्यान्तरिवाऽङ्कुरो जगदिदं प्राङ्निर्विकल्पं पुन-
र्मायाकल्पितदेशकालकलनावैचित्र्यचित्रीकृतम् ।
मायावीव विजृम्भयत्यपि महायोगीव यः स्वेच्छया
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥'—इति ।

'इन्द्रो मायाभिः पुरुरूप ईयते' इति श्रुतिः । **धर्मिष्ठाय**—अतिशयितधर्मवान् धर्मिष्ठः । धर्माधर्मविहीनोऽपि पुण्यपापकृतां नियमेन उत्कर्ष-निकर्ष-प्रापणरूपमर्यादापालने स्थितत्वात् । 'एष ह्येव साधु कर्म कारयति' इत्यादिश्रुतिः । **वरिष्ठाय**—वरिष्ठः श्रेष्ठः 'परं विज्ञानाद्यद्वरिष्ठम्' इति श्रुतिः । **पुरत्रयविघातिने**—पुरत्रयं विहन्ति इति पुरत्रयविघाती । आदित्यपुराणे द्विसप्ततितमाध्याये—

'अस्य रुद्रस्य देवस्य निर्मितो विश्वकर्मणा ॥
सर्वलोकमयो दिव्यो रथो यत्नेन सादरम् ॥'

—इति प्रस्तुत्य, सर्वलोकभूतदेववेदमयचन्द्रसूर्यमयचक्रद्वयेत्यादिविशिष्टरथनिर्माणानन्तरं तदारूढे परमेश्वरे, मेरौ चापे, विष्ण्वादौ बाणादिरूपे, ब्रह्मणा रथे प्रेरिते, अनन्तरं देवानामनादिसिद्धतया विद्यमान एव पशुत्वे पणविनोदेन दृढीकृते,

तदनु देवैर्विनायके पूजिते, अनन्तरम् इन्द्रस्कन्दादिभिश्च परिवृते, तदनु पुरत्रयस्यैकत्र समागमने ऋष्यादिभिश्च सन्तोषपुरःसरं जयशब्दे कृते ब्रह्मणा जय इत्युक्ते—

'अथ देवो महादेवः सवज्रं तमवैक्षत ।
पुरत्रयं विरूपाक्षस्तत्क्षणाद्भस्मसादभूत् ॥'

इत्यादि प्रसिद्धम् । उक्तञ्च शिवरहस्ये सप्तमांशे—'रथः क्षोणी यन्ता शतधृतिरगेन्द्रो धनुरथो' इति । इदमपि रहस्यान्तरम्—

'साङ्ग्रामिकेण वपुषा प्रविराजमानं
दृप्यत्पुरत्रयतृणाशनमन्दहासम् ।
दैत्यान् दिधक्षुमचलेश्वरचापपाणिं
ध्यायेत् पुरारिममरौघरथाधिरूढम् ॥'—इति ।

'तेषामसुराणां तिस्रः' इत्यारभ्य 'स तिस्रः पुरो भित्त्वा' इत्येवमन्ता श्रुतिः ॥१५॥

**गरिष्ठाय गिरीशाय वरदाय नमो नमः ।**
**व्याघ्रचर्माम्बरायाऽथ दिशावस्त्राय ते नमः ॥१६॥**

गरिष्ठाय—गरिष्ठो गुरुतमः । 'ईशानः सर्वविद्यानाम्' इति श्रुतिः । गिरीशाय—गिरेः कैलासस्य ईशः । वरदाय—वरदः भक्तानामिष्टप्रदः । 'वरदं देवमीड्यम्' इति श्रुतिः । व्याघ्रचर्माम्बराय—व्याघ्रचर्म अम्बरं यस्य स तथा । 'पिनाकहस्तः कृत्तिवासाः' इति श्रुतिः । दिशावस्त्राय—दिशा आशा वस्त्रं यस्य स तथोक्तः, 'यथा वाचा निशा दिशा' इति स्मरणात् । इदञ्च दारुकावने मुनिवधूपरीक्षार्थमुपात्ताया मूर्तेर्नाम । एतेन सर्वसंमोहकत्वमुक्तम्, ईश्वरत्व-वृषारूढत्वोमासहायत्वादिरूपाच्छादनेन वेषान्तरस्वीकारात् । 'कृत्स्नवीताय धावते' इति श्रुतिः ॥१६॥

**परमप्रेममन्त्राय प्रथमाय सुचक्षुषे ।**
**आद्याय शूलहस्ताय शितिकण्ठाय तेजसे ।।१७।।**

**परमप्रेममन्त्राय**—उत्कृष्टप्रेमास्पदो मन्त्रः–पञ्चाक्षर्यादि-रूपः—यस्य स तथा, तत्रैव शिवस्य सर्वदा स्थितत्वात्। तद्यथोक्तं वायवीयसंहितायाम्— उपरिभागे द्वादशाध्याये—

'मन्त्रे षडक्षरे सूक्ष्मः पञ्चब्रह्मतनुः शिवः ।
वाच्यवाचकभावेन स्थितः साक्षात् स्वभावतः ।।
वाच्यः शिवः प्रमेयत्वान्मन्त्रस्तद्वाचकः स्मृतः ।'—इति ।

'मन्त्रिणे वाणिजाय' इति श्रुतिः। **प्रथमाय**—देवानां प्रधानभूतः आद्यो वा प्रथमः । 'प्रथमो देवः' इति श्रुतिः । **सुचक्षुषे**—शोभनानि चक्षूंषि सूर्यचन्द्रवह्निरूपाणि यस्य स सुचक्षुः । 'तस्य यथाकप्यासं पुण्डरीकमेवमक्षिणी' इति श्रुतिः । मदननिग्रह-वेलायाम् 'अक्षीणि' इति बहुवचनं प्रदर्शितम् ; उदाहृतश्रुतौ तु अक्षिद्वयं प्रतीयते ? नैष दोषः ; व्यवहारदशायां नेत्रद्वयेनैव व्यवहारः, न तु वह्निस्वरूपनिटिलनेत्रेण। तेन तु कदाचिदेव मदन-दहनादिकाले व्यवहारः । उक्तञ्चाऽभियुक्तैः—

'दग्धं यदा मदनमेकमनेकधा ते
मुग्धः कटाक्षविधिरङ्कुरयाञ्चकार ।
यत्ते तदा प्रभृति देवि ललाटनेत्रं
सत्यं ह्रियैव मुकुलीकृतमिन्दुमौलेः ।।'—इति ।

अत एव श्रुत्यन्तरेऽपि लोचनद्वयस्यैवाऽभिधानम्—'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ' इति। **आद्याय**—आदौ भवः आद्यः, सर्वेषामादिकारणमित्यर्थः । 'आदिः स संयोगनिमित्तहेतुः' इति श्रुतिः । **शूलहस्ताय**—शूलं हस्ते यस्य स तथा । 'तिग्म-

मेको बिभर्ति हस्त आयुधं शुचिरुग्रो' इति श्रुतिः। शितिकण्ठाय—शितिः श्वेतवर्णेन विशिष्टः कण्ठप्रदेशो यस्याऽसौ शितिकण्ठः। 'नीलग्रीवाय च शितिकण्ठाय च' इति श्रुतिः ॥१७॥

उग्राय वामदेवाय श्रीकण्ठाय च ते नमः।
विश्वेश्वराय सूर्याय गौरीशाय वराय च ॥१८॥

उग्राय—पापरोगादिभिः स्वयमनभिभवनीयः, विरोधिनो नाशयितुं क्रोधयुक्तो वा सर्वसंहारसमर्थो वा उग्रः। 'नम उग्राय च' इति श्रुतिः। वामदेवाय—वामः सुन्दरः 'मङ्गलायतनं देवं युवानमतिसुन्दरम्' इत्यागमवचनात्, स चाऽसौ देवश्चेति वामदेवः। वामः उद्गीर्यः यः सम्भजनीयः, स चाऽसौ देव इति वा, मुमुक्षुभिः प्रत्यगात्मत्वेन सेव्य इति यावत्। 'वामदेवाय नमो ज्येष्ठाय च' इति श्रुतिः। श्रीकण्ठाय—श्रीः कालकूटजनिता शोभा तद्वान् कण्ठो यस्य स तथा। कालकूटजनितं मालिन्यमपि शोभैव परमेश्वरस्य, 'विकारोऽपि श्लाघ्यो भुवनभयभङ्गव्यसनिनः' इति न्यायात्। अथवा श्रीर्विषमेव, 'श्रीर्वेषरचना शोभा सम्पत्सरलशाखिषु। पाणिलक्ष्मीलवङ्गेषु विषे बिल्वेऽपि' इति नानार्थरत्नमाला, तद्वान् कण्ठोऽस्येति। विश्वेश्वराय—विश्वेषामीश्वरो विश्वेश्वरः। 'पतिं विश्वस्याऽऽत्मेश्वरम्' इति श्रुतिः। सूर्याय—सुवति प्रेरयति कर्मणि लोकान् इति सूर्यः, तद्रूपत्वात्। तदुक्तं कौर्मे सूर्यहृदये— 'नमः सूर्याय रुद्राय' इति। 'कपर्दिने नमो नमः सूर्याय' इति श्रुतिः। गौरीशाय—गौरीशः अम्बिकापतिः। वराय—वरः श्रेष्ठः सर्वोत्कृष्टः, सर्वेश्वर इति यावत्। 'श्रेष्ठोऽहं वरिष्ठोऽहम्' इति श्रुतिः ॥ १८ ॥

मृत्युञ्जयाय वीराय वीरभद्राय ते नमः ।
कामनाशाय गुरवे मुक्तिनाथाय ते नमः ॥१९॥

**मृत्युञ्जयाय**—मृत्युर्मरणम्, स्वभक्तानां मृत्युं जयति स्वोपासनादिना परिहरतीति मृत्युञ्जयः। 'तमेव विदित्वाऽतिमृत्युमेति' इति श्रुतिः। **वीराय**—विक्रान्त्यर्थं व्यापारा यस्य स वीरः। विक्रमशालित्वाद्वा, परैरनभिभवनीय इति वा। 'अभि नो वीरो अर्वति क्षमेत प्रजायेमहि रुद्र प्रजाभिः' इति श्रुतिः। **वीरभद्राय**—वीरश्चाऽसौ भद्रश्च वीरभद्रः। वीरभद्रो नाम दक्षक्रतुनिषूदनार्थं रुद्रेण सृष्टो गणेश्वरः। तदुत्पत्तिश्च कल्पभेदेन क्वचित् रुद्रस्वेदबिन्दुरूपात्, क्वचिद् रुद्रदेहोत्पन्नतेजसः, क्वचित् तद्देहोत्पन्नवह्नेः, क्वचित्तज्जटायाः, क्वचित् तेनैवेति ईर्यते। तथाहि ब्रह्माण्डपुराणे

उत्तरभागे--

'अथ देवो महादेवो ललाटतटसम्भवम् ।
एकं स्वेदपयोबिन्दुं नखाग्रेणाऽक्षिपत् क्षितौ ॥
तदा उत्पन्नवानेको लोकघस्मरविग्रहः ।
कालाग्निरिव दीप्ताङ्गो वीरभद्रो गणेश्वरः ॥'—इति ।

वामनपुराणे—

'तच्छ्रुत्वा वचनं रौद्रं रुद्रः कोपान्वितोऽभवत् ।
क्रुद्धस्य सर्वगात्रेभ्यो निश्चेरुः सहसाऽर्चिषः ॥
सहक्रोधास्त्रिनेत्रस्य गात्ररोमान्तरोद्भवाः ।
गणाः संख्यातिगा जाताः वीरभद्रपुरोगमाः ॥'—इति ।

काशीखण्डे—

'ततस्तत्क्रोधजाद्वह्नेराविरासीन्महाद्युतिः ।
भद्रस्तु प्रतिभाकारः कालमृत्युप्रकम्पनः ॥'—इति ।

तत्र भवः—

'महावीरोऽसि हे भद्र मम सर्वगणेष्विह ।
नाम्ना त्वं वीरभद्रेति भव लोकेषु विश्रुतः ॥'—इति ।

पाद्मे शिवं प्रति राक्षसः—

'त्वज्जटोद्घाटनेनैकः पुरुषः संभविष्यति ।
तेनैव मरणं नाऽन्यैरिदमेव व्रतं शिवम् ॥'

शिवः—

'भविष्यत्येवमेवैतदित्युक्त्वाऽन्तरधीयत ।'

इति प्रस्तुत्य राक्षसवधानन्तरं वीरभद्रं प्रति सुरगणानां स्तुतिः—

'निपत्य दण्डवद्भूमौ वीरभद्रमथाब्रुवन् ।' —इति ।

कौर्मे—

ससर्ज सहसा रुद्रो दक्षयज्ञजिघांसया ।
सहस्रशिरसं क्रुद्धं सहस्राक्षं महाभुजम् ॥
सहस्रपाणिं दुर्धर्षं युगान्तानलसन्निभम् ।
दंष्ट्राकरालं दुष्प्रेक्षं शङ्खचक्रगदाधरम् ॥
दण्डहस्तं महानादं शार्ङ्गिणं भूतिभूषणम् ।
वीरभद्र इति ख्यातं देवदेवसमन्वितम् ।' —इति ।

तद्धेतुत्वाद्वीरभद्रः । श्रुतिः पूर्वनाम्न्युक्ता । **कामनाशाय**— कामः मन्मथः तं नाशयतीति कामनाशः । कामनाशकरत्वं च शिवस्य स्मृतीतिहासपुराणादिषु प्रसिद्धम् । तेन 'ज्ञानं विरागमैश्वर्यम्' इति श्लोकोक्तं वैराग्याख्यं द्वितीयमव्ययं सूचितम् । मुमुक्षूणां कामं नाशयतीति वा । पाद्मे—शिवं प्रस्तुत्य—

'कामं दृष्टिनिपातेन त्रैलोक्यविजयोर्जितम् ।
निनायाऽनङ्गपदवीं वीक्षमाणेष्वजादिषु ॥' —इति ।

'अकामगं रूपं शोकान्तरम्' इति श्रुतिः । **गुरवे**— सर्वेषां ब्रह्मादीनां समस्तविद्यानामुपदेष्टृत्वात् जनकत्वाच्च

गुरुः । 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये' इति श्रुतिः । **मुक्तिनाथाय**—मुक्तेः कैवल्यरूपायाः नाथः, परमेश्वरप्रसादतज्ज्ञानायत्तत्वात् तस्याः ।

'तमहंप्रत्ययव्याजात् सर्वे जानन्ति जन्तवः ।
तथापि शिवरूपेण न जानन्ति विमोहिताः ॥'
'प्रसादादेव रुद्रस्य श्रुत्युत्पन्नात्मविद्यया ।
बहूनां जन्मनामन्ते जानन्त्येव शिवं बुधाः ॥'

—इति सूतसंहितायाम् । 'ज्ञात्वा देवं सर्वपाशापहानिः' इति श्रुतिः ॥१९॥

**विरूपाक्षाय सूताय वह्निनेत्राय ते नमः ।**
**जलन्धरशिरच्छेत्रे हविषे हितकारिणे ॥२०॥**

**विरूपाक्षाय**—विरूपाणि विरुद्धस्वरूपाणि लोकविरुद्धानि त्रित्वविशिष्टानि अक्षीणि यस्य स विरूपाक्षः । उक्तश्च वायवीयसंहितायाम्—

'सर्वकल्याणनिलयं शक्त्या च तादृशान्वितम् ।
ज्ञात्वा देवं विरूपाक्षं ब्रह्मनारायणौ तदा ॥' —इति ।

'उर्ध्वरेतं विरूपाक्षम्' इति श्रुतिः । **सूताय**—जगदन्तरात्मनो रथस्य नियन्ता सूतः । 'नमः सूतायाहन्त्याय' इति श्रुतिः । **वह्निनेत्राय**—वह्निनेत्रं ललाटे यस्य स वह्निनेत्रः । अनेन पुरदाह-मदनप्लोषण-ब्रह्माण्डोपशमकत्वं शिवस्य सूचितम् । तदुक्तमभियुक्तैः—

'पक्ष्मालीपिङ्गलिम्नः कण इव तडितां यस्य कृत्स्नः समूहो
यस्मिन् ब्रह्माण्डमीषद्विघटितमुकुले कालयज्वा जुहाव ।
यस्मिन्निष्टप्तचूडाशशिगलितसुधासारसिक्ताग्निकोणं
तार्तीयीकं पुरारेस्तदवतु मदनप्लोषणं लोचनं वः ॥'—इति ।

जलन्धरशिरश्छेत्रे—'जलन्धरः' इति दुष्टः कश्चनासुरः, तस्य शिरश्छेत्ता जलन्धरशिरश्छेत्ता । उक्तश्च पाद्मे त्रयोविंशाध्याये पुत्रं प्रति मृकण्डूपदेशे—

'जलन्धरं महादर्पं हृतत्रैलोक्यसम्पदम् ।
चरणाङ्गुष्ठरेखामध्ये जलधौ सुदर्शनम् ॥
गुणावस्थाग्निकालात्मा लोकशक्तित्रयात्मकम् ।
शिवः कालात्मकं चक्रं दक्षिणाङ्गुष्ठरेखया ॥
निर्ममेऽमोघसङ्कल्पः क्षणकाष्ठाकलात्मकम् ।
तेनाऽसुरं द्विधा कृत्वा ररक्ष भुवनत्रयम् ॥'—इति ।

शङ्करसंहितायां द्विचत्वारिंशाध्याये गर्विष्ठमिन्द्रं प्रति कुपिते परमेश्वरे पुनरप्युपशान्ते तस्य कोपः समुद्रे निक्षिप्तः, स जलन्धरासुरोऽभूत् । स च ब्रह्मदत्तवरः शक्रविष्णवादीन् जित्वा शिवं प्रति युद्धार्थमागतवान् । तदनु शिववचनम्—

'पादेन निर्मितं चक्रं जलन्धर महार्णवे ।
बलवान् यदि चोद्धर्तुं तिष्ठ योद्धुं न चाऽन्यथा ॥
इत्युक्तः शम्भुना तेन दोर्भ्यामास्फोट्य दानवः ।
सुदर्शनाख्यं यच्चक्रं तदुद्धर्तुं गृहीतवान् ॥
अतीव दुर्धरं चक्रं कथञ्चित्तद्द्विजोत्तम ।
स्थापयामास वै स्कन्धे द्विधाभूतश्च तेन सः ॥'—इति ।

'अहीँश्च सर्वाञ्जम्भयन् सर्वाश्च यातुधान्यः' श्रुतिः । हविषे—भोक्तव्यरसवस्तुजातं हविः, तद्रूपा देवी, तदभेदाच्छिवोऽपि हविः । तदुक्तं शिवपुराणे— 'रसजातं महादेवी' इति । 'ब्रह्मार्पणं ब्रह्म हविः' इति भगवद्वचनात् । यद्वा—सर्वानन्दकरत्वाद्धविः परशिवः, 'आनन्दयति दुःखाढ्यं जीवात्मानं कृपाबलात्' इति ब्रह्मगीतावचनात् । 'रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी-भवति' इति श्रुतिः । हितकारिणे—हितं दुःखनिवृत्तिसुखरूपं

तत्करणशीलः । प्रत्यगात्मतया ज्ञातः सन् हितकारी । 'तरति शोकमात्मवित्', 'ब्रह्म वेद ब्रह्मैव भवति' इति श्रुतिः ॥२०॥

**महाकालाय वैद्याय संघृणेशाय ते नमः ।**
**नम ओङ्काररूपाय सोमनाथाय ते नमः ॥२१॥**

**महाकालाय**—महान् उपाध्यनवच्छिन्नः, स चाऽसौ कालश्च, तद्रूपत्वान्महाकालः । महाकालाख्ये पुण्यस्थाने स्थितं महाकालं लिङ्गं तद्रूपत्वात्, सर्वपापोपशमाद्वा, अविद्यादिसव-क्लेशोपशमाद्वा । प्रदर्शितं च भट्टभास्करेण—

'गजचर्मावृततनुं स्फुरत्प्रहरणोज्वलम् ।
सर्वरोगहरं ध्यायेद्देवं कुञ्जरभेदिनम् ॥'—इति ।
'सर्वपापहरं देवं सर्वाभरणभूषितम् ।
ध्यायेत् सर्वायुधधरं सर्वलोकमहेश्वरम् ॥'—इति च ।

**वैद्याय**—'भिषकतमं त्वा भिषजं शृणोमि' इति श्रुतिः । **संघृणेशाय**—समीचीना पूजाद्यपेक्षारहिता, घृणा करुणा यस्याः सा संघृणा 'सा शिवा करुणामूर्तिः शिवाभिन्ना शिवङ्करी' इति ब्रह्मगीतायाम्, तदभिन्नः शिवोऽपि संघृणः, स चावीशश्च संघृणेशः । अथवा संघृणायाः करुणामूर्तेः शिवायाः ईशः पतिः । 'अम्बिकापतये' इति श्रुतिः। **ॐ काररूपाय**—ॐ कारः रूपं स्वरूपं यस्य स तथा । ॐ काररूपत्वं च तदभि-धानत्वाद्वा । तदभिधानत्वञ्च 'ओमित्यक्षरम्' इत्यादिना प्रसि-द्धम् । ॐ कारप्रतीकत्वं तु—'यः पुनरेतं त्रिमात्रेण' इत्यादिना प्रश्नोपनिषदादौ प्रसिद्धम् । 'परं चापरं च ब्रह्म यदोंकारः' श्रुतिः । **सोमनाथाय**—उमया सहितः सोमः, स चाऽसौ नाथश्च

सोमनाथः। सोमस्य नाथ इति वा, चन्द्रचूडत्वात्। 'स सोमः लोके त्रीणि लिङ्गानि प्रतिष्ठापितवान्' इति पुराणेषु प्रसिद्धम् ॥२१॥

**रामेश्वराय शुचये भौमेशाय नमो नमः।**
**त्र्यम्बकाय निरीहाय केदाराय नमो नमः ॥२२॥**

रामेश्वराय—पद्मपुराणे—

'अथ रामगिरौ रामः पुण्ये गोदावरीतटे।
शिवलिङ्गं प्रतिष्ठाप्य........................॥'

—इति प्रसिद्धं शिवलिङ्गं प्रतिष्ठाप्य श्रीरामविषय-स्तुतिरपि प्रसिद्धा। सेतुबन्धरामेश्वरे 'रामनाथः' इति शिवस्य नाम, तेन रामेश्वरत्वं प्रसिद्धमेव। 'तव श्रिये मरुतो मर्जयन्त रुद्र यत्ते जनिम चारु चित्रम्' इति श्रुतिः। शुचये—स्मरतां स्तुवतां अर्चयतां च पावकत्वाच्छुचिः। 'अस्पर्शश्च शुचिः' इति श्रुतिः। भौमेशाय—भूम्या स्तुतः अर्चितो वा भौमः, स चाऽसौ ईशश्च भौमेशः। भौमस्य ईश इति वा, तदुत्पादकत्वात्। तदुक्तं व्यासेन—

'महेश्वरस्याऽऽननस्वेदबिन्दोः
भूमौ जातं रक्तमाल्याम्बराढ्यम्।
सुवर्चसं लोहिताङ्गं कुमार-
मङ्गारकं वै शरणं प्रपद्ये ॥'—इति।

भविष्योत्तरपुराणे नागखण्डे चतुर्विंशाऽध्याये—कावेर्या दक्षिणे तीरे तेजिनिवनस्य वायव्यभागे घटिकाद्वयसमीपे भूम्या लिङ्गं प्रतिष्ठाप्य पूजा कृता इति प्रसिद्धम्। तत्रैव गर्गशापमोचनार्थं पुरुरवसा राज्ञा कृते स्तोत्रे—

'पञ्चाक्षरीजपासक्त-भक्तचित्तनिवासिने।
भूमिपूजितपादाय भवते शम्भवे नमः॥
कुर्वते पञ्चकृत्यानि लीलयैव गुणाश्रयात्।
भिषजे भवरोगाणां भौमेशाय नमो नमः ॥'—इति।

**त्र्यम्बकाय**—त्रीणि अम्बकानि अक्षीणि यस्य स त्र्यम्बकः । अथवा त्रित्वसङ्ख्यावच्छिन्नानां ब्रह्मविष्णुरुद्राणां अम्बकः पिता, 'त्रयाणां जनकं विभुम्' इति श्रुतेः । 'त्र्यम्बकं यजामहे' इति श्रुतिः । **निरीहाय**—ईहया इच्छया निर्गतः निरीहः । श्रुतिरुक्ता । **केदाराय**—केदारः पुण्यक्षेत्रत्वेन प्रसिद्धः अस्यास्तीति केदारः । 'क्षेत्राणां पतये नमः' इति श्रुतिः ॥२२॥

**गङ्गाधराय कवये नागनाथाय ते नमः ।**
**भस्मप्रियाय सूद्याय लक्ष्मीशाय नमो नमः ॥२३॥**

**गङ्गाधराय**—धरतीति धरः, गङ्गायाः धरः गङ्गाधरः । गङ्गा चाऽत्र हैमवती कुटिलापरनामधेया ब्रह्मशापासादितजलभावा वामनपुराणप्रसिद्धा, यद्धारणाय भगीरथेन शिवः प्रसादितः । एतेन भक्तजनवशित्वमितरासाध्यकर्मकरत्वं च सूचितम् । 'अपाणिपादोऽहमचिन्त्यशक्तिः' इति श्रुतिः । गङ्गाधारणस्य इतराऽसाध्यत्वं च महाभारते अरण्यपर्वणि भगीरथं प्रति गङ्गावचनेन दर्शितम्—

'करिष्यामि महाराज वचस्ते नाऽत्र संशयः ।
वेगं तु मम दुर्धर्षं पतन्त्या गगनाद्भुवम् ॥
न शक्तस्त्रिषु लोकेषु कश्चिद्धारयितुं नृप ।
अन्यत्र विबुधश्रेष्ठान्नीलकण्ठान्महेश्वरात् ॥'—इति ।

उक्तश्च अभियुक्तैः—

'गङ्गा धृता न भवता शिव पावनीति
नाऽऽस्वादितो मधुर इत्यपि कालकूटः ।
संरक्षणाय जगतां करुणातिरेकात्
कर्मद्वयं कलितमेतदनन्यसाध्यम् ॥'—इति ।

**कवये**—कविः क्रान्तदर्शी, सर्वज्ञ इति यावत् । 'कविर्मनीषी परिभूः' इति श्रुतिः । **नागनाथाय**—नागस्य

तक्षकादेर्नाथः—तेन पूजितः लिङ्गादिषु सः—नागनाथः । 'तव श्रिये मरुतो मर्जयन्त रुद्र यत्ते जनिम चारु चित्रम्' इति श्रुतिः । [श्रुतावत्र] 'मरुतः' इति शब्देन भोगमोक्षार्थितया ये लिङ्गे पूजां कृतवन्तस्ते सर्वे उपलक्षिताः । भस्मप्रियाय—भस्म तावत्प्रसिद्धं श्रौतं स्मार्तं लौकिकं चेति । तद्विप्रादिभिर्यथाधिकारं समन्त्रकममन्त्रकं वा धृतं सर्वपापनिवारकम्, 'भस्मनोद्धूलनञ्चैव तथा तिर्यक्त्रिपुण्ड्रकम् । महापापविनाशाय विधत्ते वैदिकी श्रुतिः ॥' इत्युक्तत्वात् । तत् ललाटादिषु त्रिपुण्ड्रतया धृतमुद्धूलितं च प्रियं यस्य स भस्मप्रियः । भस्मशब्देन भस्मधार्यप्युपलक्षितः, सोऽपि प्रियो यस्य सः भस्मप्रिय इति च । 'त्रिपुण्ड्रं भस्मना करोति यो विद्वान्' इति प्रस्तुत्य 'शिवसायुज्यमाप्नोति' इति श्रुतिः । सूद्याय—सूदः कर्दमप्रदेशः, तत्र भवः तत्रत्यजलरूपः सूद्यः । 'नमः सूद्याय च' इति श्रुतिः । लक्ष्मीशाय—लक्ष्मीः अणिमाद्या सम्पत्तिः, 'सम्पत्तिः श्रीश्च लक्ष्मीश्च' इत्यमरः, तस्याः ईशः लक्ष्मीशः, अणिमाद्यष्टैश्वर्यस्य ईश्वराधीनत्वात् । 'तमीश्वराणां परमं महेश्वरम्' इति श्रुतिः॥ २३ ॥

पूर्णाय भूतपतये सर्वज्ञाय दयालवे ।
धर्माय धनदेशाय गजचर्माम्बराय च ॥२४॥

पूर्णाय—पूर्णः देहेन्द्रियादिपरिच्छेदरहितः सर्वप्रत्यगात्मरूपः परमशिव इत्यर्थः । तदुक्तं सूतसंहितायाम्—

'अन्यच्चाऽस्तितया भातं तथा नाऽस्तीति शब्दितम् ।
सर्वं पूर्णं शिवं पश्यन् स्वयं पूर्णः शिवो भवेत् ॥'—इति ।

'पूर्णमदः पूर्णमिदम्' इति श्रुतिः । भूतपतये—भूतानां पृथिव्यादीनां चतुर्विधभूतग्रामाणां प्रमथगणानां च पतिः नियन्ता । 'एष भूताधिपतिरेष भूतपालः' इति श्रुतिः । सर्वज्ञाय—सर्वश्चासौ ज्ञश्च सर्वज्ञः, सर्वात्मकत्वात् स्वप्रकाशकत्वाच्च । सर्वं

जानातीति वा । श्रुतिरुक्ता । दयालवे—दयाशीलो दयालुः । अनेन परमेश्वरस्य या शान्ता तनूः सर्वाह्लादरूपिणी, सा प्रदर्शिता । 'या ते रुद्र शिवा तनूः' इति श्रुतिः । धर्माय—धर्मैः आराध्यते इति धर्मः । 'तपांसि सर्वाणि च यद्वदन्ति'इति श्रुतिः । सर्वभूतानां धारणाद्वा धर्मः । 'अणुरेष धर्मः' इति श्रुतिः । धनदेशाय--धनं ददातीति धनदः कुबेरः, तस्य ईशः—तेन निधीशत्वसिद्ध्यर्थं लिङ्गादिषु पूजितः—धनदेशः । यद्वा स्वर्णादिदानपरस्य ईशः परायणम्—प्राप्यस्थानम् । 'रातिर्दातुः परायणम्' इति श्रुतिः । गजचर्माम्बराय—गजस्य गजासुरस्य चर्म कृत्तिः गजचर्म, तत् अम्बरं वासो यस्य स गजचर्माम्बरः । श्रुतिरुक्ता ॥ २४ ॥

**भालनेत्राय यज्ञाय श्रीशैलपतये नमः ।**
**कृशानुरेतसे नीललोहिताय नमो नमः ॥२५॥**

भालनेत्राय—भाले नेत्रं यस्य स भालनेत्रः । इदं च नाम परशिवस्य सर्वातिशयद्योतनार्थम् । यज्ञाय—सर्वयज्ञस्वरूपत्वाद्यज्ञः । ब्रह्माण्डपुराणे भिक्षाटनसमये शिवं प्रति वरुणः—

'त्वमादिस्त्वमनादिश्च त्वं प्रभुः सर्वतोमुखः ।
त्वमात्मा त्वं महादेवस्त्वं यज्ञस्त्वं सनातनः ॥'—इति ।

'त्वं यज्ञस्त्वं विष्णुः' इति श्रुतिः । श्रीशैलपतये—श्रीशैलस्य शिवस्थलत्वेन प्रसिद्धस्य कृष्णाया दक्षिणतीरे विद्यमानस्य पतिः नाथः, तत्र स्थितः इति यावत् । 'गिरिश' इति श्रुतिः । कृशानुरेतसे—कृशानुना वह्निना पीतं रेतो यस्य स तथा । कृशानुवद्दाहकरं वा कृशानुशरीरप्रविष्टं सत्कृशानुभावं प्राप्तं वा रेतो यस्य स तथा । एतत्सर्वम् आदित्यपुराणे प्रसिद्धम् । तथाहि-परमेश्वरे देव्या बहुकालं कुमारोत्पत्त्यर्थं सङ्गते, तद्वशाद्देवानां भये जाते, अनन्तरं तैः स्तुते परमेश्वरे, तान् प्रति वरदानार्थं आविर्भूते, तैः 'कुमारोत्पत्तिरुमागर्भद्वारा माऽस्तु' इति प्रार्थिते,

अनन्तरम् 'एवमस्तु' इति प्रस्तुत्य, 'शान्त्यर्थं चैव युष्माभिः शीघ्रमेवाभियुज्यताम्' इति शिवेनोक्ते विष्ण्वादिदेवसमूहे भीत्या तूष्णीं स्थिते सति तत्राग्निः--

'अथ देवेषु सीदत्सु वह्निर्गौरिव कर्दमे ।
प्रसार्य स्वाञ्जलिं शम्भुं रेतो मुञ्चेति चाऽब्रवीत् ॥
देवदेवाऽमृतं दिव्यं हस्तयोर्मम शङ्कर ।
शीघ्रमेव प्रयच्छ त्वं पिबन्तु सुरपुङ्गवाः ॥
ततो लिङ्गाद्विनिष्क्रान्तं चन्द्रांशुरिव निर्मलम् ।
जातीनीलोत्पलामोदं पाणौ वह्नेर्ददौ शिवः ॥
करयोः पतितं रेतस्तदाऽभूत् पावकस्य तु ।
पपौ वह्निस्ततः शुक्रं प्रज्वलद्भास्करप्रभम् ॥
सुधेति मनसा मत्वा हृष्टात्मा मुदयाऽन्वितः ।
अथ पीते तदा शुक्रे वह्निना मुनिपुङ्गवाः ॥
रेतःपातेन सन्तर्प्य देवान् वै सुरपूजितः ।
विसृज्य तांस्तु भगवांस्तत्रैवाऽन्तरधीयत ॥'—इति ।

'शुक्रेण ज्योतींषि समनुप्रविष्टः' इति श्रुतिः । नीललोहिताय—कण्ठे नीलोत्पलोऽन्यत्र लोहितः इति नीललोहितः । यद्वा गौरीमिश्रितदेहत्वादर्धं नीलमर्धं च लोहितं शरीरं यस्य स नीललोहितः । तदुक्तं भाष्यकारैः—'प्रवालप्रवाहप्रभाशोणमर्धं मरुत्वन्मणिः श्रीमहःश्याममर्धम्' इति । 'दरिद्रन्नीललोहित' इति श्रुतिः ॥२५॥

**अन्धकासुरहन्त्रे च पावनाय बलाय च ।**
**चैतन्याय त्रिनेत्राय दक्षनाशकराय च ॥२६॥**

अन्धकासुरहन्त्रे—अन्धकासुरस्य हन्ता अन्धकासुरहन्ता । तदुक्तं पाद्मे त्रयोविंशाऽध्याये शिवं प्रस्तुत्य—'अन्धकं स यातयामास भानुना'इति । उक्तञ्च आदित्यपुराणे त्रिंशत्तमाध्याये—

'हते हिरण्यकशिपौ' इत्यादिना हिरण्यकशिपुवधानन्तरं तत्पुत्रेण प्रह्लादेन तत्पितृव्ये हिरण्याक्षे राज्यं निक्षिप्तम् । हिरण्याक्षस्तु शिवप्रसादात् देवान् जित्वा अन्धकासुरं त्रैलोक्यजयिनं पुत्रं लब्धवान् । तदनु वराहरूपिणा विष्णुना स हतः । तदनु प्रह्लादो राज्यमकरोत् । तत्समये तेन मोहाद्विष्णुना सह युद्धं कृतम् । तदनु सद्वासनावशात् पितृव्यपुत्रे अन्धकासुरे राज्यं विन्यस्य स विष्णुं गतवान् । तदनु महादेवो विष्णवादिदेवैः देवीरक्षणं कारयित्वा लीलया ब्राह्मणैः सह भिक्षार्थमटितवान् । तस्मिन् समये अन्धकासुरस्य शर्वाण्या आहरणार्थमागमनम् । तदनन्तरं विष्णुना तस्य पराजयः । तदनु देवादिभिर्युद्धम् । तदनु तद्वधार्थं विष्णुना शिवप्रार्थनम् । तदनु शिवेन तद्वधाय भैरवप्रेषणम् ।

'ततः स भैरवः शम्भोः शिरस्याज्ञां निधाय च ।
आदाय सहसा शूलं ययौ दैत्यस्य सङ्गरम् ॥
शूलाग्रेण विनिर्भिद्य ननर्त स्वात्मलीलया ॥'—इति।

**पावनाय**—पावयतीति पावनः । 'भीषाऽस्माद्वातः पवते' इति श्रुतिः । **बलाय**—बलं अस्यास्तीति बलः, सर्वशत्रुनिबर्हण-समर्थत्वात् महावाक्यजन्यप्रत्ययारूढः सन् सर्वद्वैतनाशनसमर्थ-त्वाद्वा । 'आत्मचैतन्यरूपं बलमवष्टभ्य' इति श्रुतिः । **चैतन्याय**—अवस्थात्रयसाक्षी तत्त्वंपदलक्ष्यः प्रत्यगभिन्नः परशिव इत्यर्थः ।

'यच्चैतन्यमनुस्यूतं जाग्रत्स्वप्नसुषुप्तिषु ।
तदेव त्वमिदं तत्त्वमितो नाऽस्त्यधिकं परम् ॥'

—इत्यभियुक्तोक्तेः । आचार्यैरपि—

'चैतन्यं सर्वगं सर्वं सर्वभूतगुहाश्रयम् ।
त्वं सर्वविषयातीतस्तुभ्यं सर्वविदे नमः ॥' —इति ।

'हृदि चैतन्ये तिष्ठति' इति श्रुतिः । **त्रिनेत्राय**—त्रीणि सोमसूर्याग्निरूपाणि नेत्राणि यस्य सः त्रिनेत्रः ।

'ऐश्वर्यधर्मासनसंस्थिताय
नमः शिवायाऽऽत्मभवोद्भवाय ।
सहस्रचन्द्रार्कहुताशमूर्तये ।
नमोऽग्निचन्द्रार्कविलोचनाय ॥'—इति ।

'त्रिनेत्रं त्रिगुणाधारम्' इति श्रुतिः । दक्षनाशकराय—दक्षस्य नाशं करोतीति दक्षनाशकरः । वायवीयसंहितायां वीरभद्रं प्रस्तुत्य—

'ततश्चन्द्रमसं देवः पादाङ्गुष्ठेन लीलया ।
क्षणात्कृमिवदाक्रम्य घर्षयामास भूतले ।
शिरश्चिच्छेद दक्षस्य रुद्रः परमकोपतः ॥'—इति ।

'नमः सहमानाय निव्याधिने' इति श्रुतिः ॥ २६ ॥

**नमः सहस्रशिरसे जयरूपाय ते नमः ।**
**सहस्रचरणायाऽथ योगिहृत्कञ्जवासिने ॥२७॥**

सहस्रशिरसे—सहस्राणि अनन्तानि शिरांसि यस्य स सहस्रशिराः । 'सहस्रशीर्षा पुरुषः' इति श्रुतिः । जयरूपाय—जयः रूपं स्वरूपं यस्य स जयरूपः, सर्वत्र विजयी इत्यर्थः । 'ब्रह्म ह देवेभ्यो विजिग्ये' इति श्रुतिः । सहस्रचरणाय—सहस्राणि चरणानि सर्वप्राणिसम्बन्धीनि यस्येति सहस्रचरणः । 'सहस्राक्षः सहस्रपात्' इति श्रुतिः । योगिहृत्कञ्जवासिने—योगिहृत्पद्मवासशीलाय । यद्यपि सर्वप्राणिहृदयपुण्डरीके बाह्यान्तर्विषयत्वेन सर्वदा सर्वैरनुभूयते एव परमशिवः, यथोक्तं भाष्यकारेण— 'यस्तिर्यङ्नरदेवताभिरहमित्यन्तःस्फुटो गृह्यते । यद्भासा हृदयाक्षदेहविषया भान्ति स्वतोऽचेतनाः ॥' इति; तथापि परमशिवः सर्वैः कर्तृत्वादिविशिष्टत्वेनैवाऽनुभूयते न तु परमशिवत्वेन । तदुक्तं सूतसंहितायाम्—

'तमहंप्रत्ययव्याजात् सर्वे जानन्ति जन्तवः ।
तथापि शिवरूपेण न विजानन्ति मोहिताः ॥'—इति ।

योगिनस्तु—अनेकजन्मसुकृतपुञ्जपरिपाकवशादात्मव्यतिरिक्तं सर्वं ब्रह्मलोकादिकमनित्यं सातिशयं नश्वरमत एव दुःखात्मकमिति निश्चित्य ऐहिकामुष्मिकभोक्तव्यविरक्ताः सन्तः शान्तिदान्त्यादिसम्पन्नाः जाग्रत्स्वप्नसुषुप्तिकालेष्वनुस्यूतं स्थूलवासनामयसौषुप्तविषयसाक्षिभूतं देहेन्द्रियप्राणमनआत्मादिसर्वान्तरमशनायादिषड्र्मिरहितमत एव पञ्चकोशविलक्षणं सच्चिदानन्दस्वरूपं परमशिवं बहुजन्माराधितपरमशिवप्रसादादेव तत्त्वमस्यादिवाक्यजन्यप्रत्ययाभिव्यक्तमात्मत्वेन हृदये सदाऽनुसन्दधते । तदप्युक्तं सूतसंहितायाम्—

'प्रसादादेव रुद्रस्य श्रुत्युत्पन्नात्मविद्यया ।
बहूनां जन्मनामन्ते जानन्त्येव शिवं बुधाः ॥'—इति ।

'योगिध्येयं परमं पदम्' इति श्रुतिः । ॥ २७ ॥

**सद्योजाताय वन्द्याय सर्वदेवमयाय च ।**
**आमोदाय प्रगल्भाय गायत्रीवल्लभाय च ॥२८॥**

**सद्योजाताय**—यस्मात् परमेश्वराद्देवतिर्यङ्मनुष्याद्याः सद्य एव जाताः । 'सद्योऽणूनां मूर्तयः सम्भवन्ति यस्येच्छातस्तेन सद्योऽभिधानः' इति आगमे । 'सद्योजाताय वै नमः' इति श्रुतिः । **वन्द्याय**—वन्दनयोग्यो वन्द्यः, सकलवन्दनानां 'स्तोमं वो' इति मन्त्ररूपया श्रुत्या परमेश्वरे अर्पितत्वात् । **सर्वदेवमयाय**—सर्वे च ते देवाश्च सर्वदेवाः, मयते प्राप्नोतीति मयः, सर्वदेवानां मयः सर्वदेवमयः, सर्वात्मा इत्यर्थः । 'उमासहायम्' इति प्रस्तुत्य 'स ब्रह्मा' इत्यादिश्रुतिः । **आमोदाय**—आसमन्तात् मोदयतीति आमोदः । 'एष ह्येवानन्दयति' इति श्रुतिः । **प्रगल्भाय**—

प्रकर्षेण धृष्टः प्रगल्भः, परानभिभवनीयः सर्वंजगद्रक्षणसमर्थो वा। 'नमो धृष्णवे च प्रमृशाय च' इति श्रुतिः। **गायत्रीवल्लभाय**—गायत्र्या वल्लभो गायत्रीवल्लभः, गायत्रीप्रतिपाद्य इत्यर्थः। तदुक्तं सूतसंहितायां यज्ञवैभवखण्डे षष्ठाध्याये—

'यो नोऽस्माकं धियश्चित्तमन्तर्यामिस्वरूपतः।
प्रचोदयात् प्रेरयेच्च तस्य देवस्य सुव्रताः॥
दीप्तस्य सर्वजन्तूनां प्रत्यक्षस्य स्वभावतः।
सवितुः स्वात्मभूतं तु वरेण्यं सर्वजन्तुभिः॥
जपनीयं द्विजैर्भर्गस्तेजश्चैतन्यलक्षणम्।
तच्छब्दवाच्यं सर्वज्ञं जगत्सर्गादिकारणम्॥
स्वमायाशक्तिसंभिन्नं शिवरुद्रादिसंज्ञितम्।
नीलग्रीवं विरूपाक्षं साम्बमूर्त्युपलक्षितम्॥
आदित्यदेवतायास्तु प्रेरकं परमेश्वरम्।
आदित्येनाऽपरिज्ञातं वयं धीमह्युपास्महे॥'—इति॥२८॥

**व्योमाकाराय विप्राय नमो विप्रप्रियाय च।**
**अघोराय सुवेषाय श्वेतरूपाय ते नमः॥२९॥**

**व्योमाकाराय**—व्योम्नः आकार इवाऽऽकारो यस्य स तथा। 'आकाशवत् सर्वगतश्च नित्यः' इति श्रुतिः। **विप्राय**—विशेषेण व्याप्तः विप्रः। 'विप्रा विप्रस्य बृहतो विपश्चितः' इति श्रुतिः। **विप्रप्रियाय**—विप्राणां ब्राह्मणानां प्रियः ;

'घ्नन्तं शपन्तं परुषं वदन्तं
यो ब्राह्मणं न प्रणमेद्यथाऽहम्।
स पापकृत् ब्रह्मभगाग्निदग्धो
वध्यश्च दण्ड्यश्च न चाऽस्मदीयः॥'

—इति भगवद्वचनात्। 'त्वं देवेषु ब्राह्मणः' इत्यादिश्रुतिः। **अघोराय**—अघोरः क्रौर्यादिरहितः शशिबिम्बमिवाह्लादकरः,

परमानन्दरूपत्वात् । 'या ते रुद्र शिवा तनूरघोरा पापकाशिनी' इति श्रुतिः । सुवेषाय—शोभनवेषधरः सुवेषः । तदुक्तम्—

'मूले कल्पद्रुमस्य द्रुतकनकनिभं चारुसिंहासनस्थं
वामाङ्गारूढगौरीनिविडकुचतटाभोगगाढोपगूढम् ।
सर्वालङ्कारकान्तं परशुमृगवराभीतिहस्तं प्रसन्नं
वन्दे बालेन्दुमौलिं शुभगणपसुराश्लिष्टपार्श्वं महेशम् ॥'—इति ।

'नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय' इत्यादिश्रुतिः । श्वेतरूपाय—श्वेतं रूपं यस्य स तथा ।

'बिभ्रद्दोर्भिः कुठारं मृगमभयवरौ सुप्रसन्नो महेशः
सर्वालङ्कारदीप्तः सरसिजनिलयो व्याघ्रचर्मात्तवासाः ।
ध्येयो मुक्तः परोऽसावमृतरसकलादीप्रभः पञ्चवक्त्रः
त्र्यक्षः कोटीरकोटीघटिततुहिनरोचिष्कलोत्तुङ्गमौलिः ॥'

—इति । 'शितिकण्ठाय' इति श्रुतिः ॥ २९ ॥

**विद्वत्तमाय चित्राय विश्वग्रासाय नन्दिने ।**
**अधर्मशत्रुरूपाय दुन्दुभेर्मर्दनाय च ॥३०॥**

विद्वत्तमाय—निरस्तातिशयज्ञानं सर्वदा सर्वगोचरमस्यास्ति नेतरेषामिति विद्वत्तमः । 'ब्रह्मणा विपश्चिता' इति श्रुतिः । चित्राय—अनेकैरनेकधा विभाव्यमानश्चित्रः । तदुक्तं ज्ञानवासिष्ठे—

'यच्छून्यवादिनां शून्यं ब्रह्म ब्रह्मविदां च यत् ।
शिवः शैवागमस्थानां कालः कालैकवादिनाम् ।
पुरुषः साङ्ख्यदृष्टीनामीश्वरो योगवादिनाम् ॥'

—इत्यादि । 'एष सुविज्ञेयो बहुधा चिन्त्यमानः' इति श्रुतिः । विश्वग्रासाय—विश्वं ग्रस्त इति विश्वग्रासः । 'महाग्रासाय वै नमः' इति श्रुतिः । नन्दिने—परमानन्दविग्रहो नन्दी ।

'विज्ञानमानन्दं ब्रह्म' इति श्रुतिः। नन्दः आनन्दः, भावे घञ्, सोऽस्यास्तीति नन्दी। निरन्तरं परमानन्दरूप-शिवध्यान-रूढत्वान्नन्दी तण्डुः, 'तण्डुनन्दिनौ नन्दिकेश्वरः' इति नैघण्टुकाः, तद्रूपो वा नन्दी।

'बालेन्दुमुकुटं देवं तरुणादित्यविग्रहम्।
ध्यायेन्नन्दीश्वराकारं गणेश्वरसमावृतम् ॥'—इति।

'नमो गणेभ्यो गणपतिभ्यश्च वो नमः' इति श्रुतिः। अधर्म-शत्रुरूपाय—धर्मो विहितानुष्ठानजन्यमपूर्वम्, तद्विरुद्धस्त्व-धर्मः निषिद्धाचरणजन्यमपूर्वम्। तथा चोक्तम्—

'विहितक्रियया साध्यो धर्मः पुंसो गुणो मतः।
प्रतिषिद्धक्रियासाध्यः पुंगुणोऽधर्म उच्यते ॥'—इति,

तस्य शत्रुः भक्तैः कीर्तितः इति अधर्मशत्रुः, तद्रूपः अधर्म-शत्रुरूपः। कालत्रयेऽपि अधर्मस्याऽसंस्पृष्टत्वात् परमेश्वरोऽ-धर्मासङ्गीति ध्यायिनामधर्मनाशकत्वाद्वा तदिति नाम। 'स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै स सर्वेभ्यः पाप्मभ्यो य एवं वेद' इति श्रुतिः। दुन्दुभेर्मर्दनाय—दुन्दुभेर्वाद्यविशेषस्य मर्दनः मर्दनस्वरूपः, सर्वात्मकत्वात्। 'नमो दुन्दुभ्याय च' इति श्रुतिः ॥ ३० ॥

**अजातशत्रवे तुभ्यं जगत्प्राणाय ते नमः।**
**नमो ब्रह्मशिरश्छेत्रे पञ्चवक्त्राय खड्गिने ॥३१॥**

अजातशत्रवे—शातयन्तीति शत्रवः, अजाताः अविद्य-मानाः शत्रवो बाह्या आभ्यन्तराश्च विद्वेषिणो यस्य स तथा। आप्तकामत्वादान्तरशत्रुराहित्यं सर्वभूतान्तरात्मकत्वात् बाह्य-शत्रुराहित्यञ्च बोध्यम्। जगत्प्राणाय—जगतां प्राणः उज्जीवकः जगत्प्राणः। 'न प्राणेन नापानेन मर्त्यो जीवति कश्चन। इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥' इति श्रुतिः।

ब्रह्मशिरश्छेत्रे—ब्रह्मणो हिरण्यगर्भस्य यत् पञ्चमं शिरस्तस्य च्छेत्ता । ब्रह्माण्डपुराणे प्रथमाऽध्याये भिक्षाटने भृगुः—

'पितामह जगत्सर्गस्थितिसंहारकारक ।
ब्रूहि भिक्षाटनं शम्भुः कृतवान् केन हेतुना ॥'

—इति प्रस्तुत्य, ब्रह्मविष्णू स्वाङ्गात् सृष्ट्वा सृष्टिस्थितिकार्ये तौ नियुज्याऽन्तर्हिते परमशिवे ब्रह्मणः प्रतिभानार्थं तेन ध्यातः सन् तल्ललाटात् नीललोहितरुद्ररूपेणाऽऽविर्भूय, अनन्तरम्—

'चतुरशीतिलक्षोक्ता योनयः प्रतिभान्तु ते ।
इति बोधयितुं त्वां तु प्राहिणोद्भगवान् हरः ॥
अहं भृत्यो महेशस्य त्वल्ललाटसमुद्भवः ।
त्वदुक्तं कर्तुमीशेन नियुक्तोऽस्मि नियुङ्क्ष्व माम् ॥'

—इत्युक्त्वा स्थितवति नीललोहितरुद्रे—

'उभौ ब्रह्मा च विष्णुश्च नित्यं च प्रकृतेश्वरौ ।'
'अहमेवेश्वरो नाऽन्यो इत्यन्योऽन्यं बभाणयोः ॥'

—इति । अनन्तरं कुपितो नीललोहितो युवां दण्ड्यावित्युक्तवान् । तत्र विष्णुरन्तर्हितः । तदनु तं प्रति को वा मदन्य ईश्वरः इति ब्रह्मणोक्तम् ।

'मम पुत्रो मया शास्यो विस्मर्ता मे भवानिति ।
उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम् ॥'

—इति न्यायोक्तिपुरःसरं रुद्रेण भैरवे प्रेषिते—

'शिवद्रोहस्य वक्ता सन् हन्तव्यो यद्यपि क्षणात् ।
तथापि वक्तृवदनमेकं छिन्धि स्वपञ्चमम् ॥
मुञ्चन् हर हरेत्युच्चैर्वचनं कालभैरवः ।
क्रोशतो मम मा मेति शिरः पञ्चममच्छिनत् ॥
छिन्ने शिरसि मे ज्ञानमुत्पन्नं दृढमीश्वरे ।
मुखैश्चतुर्भिरस्तौषमीश्वरं वैदिकैः स्तवैः ॥'—इति ।

'त्रिन्याधिने' इति श्रुतिः । पञ्चवक्त्राय—पञ्चसंख्याकानि

वक्त्राणि मुखानि नानारूपाणि यस्य स तथा । तदुक्तमभियुक्तैः शिवरहस्ये प्रथमांशे त्रयोदशाध्याये—

'प्रालेयामलमिन्दुकुन्दधवलं गोक्षीरफेनप्रभं
भस्माभ्यङ्गमनङ्गदेहदहनज्वालावलीलोचनम् ।
विष्णुब्रह्ममरुद्गणार्चितपदं ऋग्वेदनादोदयं
वन्देऽहं सकलं कलङ्करहितं स्थाणोर्मुखं पश्चिमम् ॥
गौरं कुङ्कुमपङ्किलं सुतिलकं व्यापाण्डुगण्डस्थलं
भ्रूविक्षेपकटाक्षवीक्षणलसत्संसक्तकर्णोत्पलम् ।
स्निग्धं बिम्बफलाधरं प्रहसितं नीलालकालङ्कृतं
वन्दे याजुषवेदघोषजनकं वक्त्रं हरस्योत्तरम् ॥
बालार्काग्नितडित्प्रतप्तकनकप्रस्पर्धितेजोरुणं
गम्भीरध्वनिसामवेदजनकं ताम्राधरं सुन्दरम् ।
अर्धेन्दुद्युतिलोलपिङ्गलजटाभारप्रबद्धोरगं
वन्दे सिद्धसुरासुरेन्द्रनमितं पूर्वं मुखं शूलिनः ॥
कालाभ्रभ्रमराञ्जनद्युतिनिभं व्यावृत्तपिङ्गेक्षणं
कर्णोद्भासितभोगिमस्तकमणिप्रोद्भिन्नदंष्ट्राङ्कुरम् ।
सर्पप्रोतकपालशुक्तिशकलैर्व्याकीर्णमाशेखरं
वन्दे दक्षिणमीश्वरस्य वदनं चाऽथर्वनादोदयम् ॥
व्यक्ताव्यक्तनिरूपितं च परमं षट्त्रिंशतत्त्वाधिकं
तस्मादुत्तरतत्त्वमक्षरमिदं ध्येयं सदा योगिभिः ।
ॐकारादिसमस्तमन्त्रजनकं सूक्ष्मातिसूक्ष्मं वरं
वन्दे पञ्चममीश्वरस्य वदनं खव्यापि तेजोमयम् ॥'—इति

'शिवो मेऽस्तु सदाशिवोम्' इति श्रुतिः । खड्गिणे—खण्डति—भिनत्ति—इति खड्गः निस्त्रिंशः, सोऽस्यास्तीति खड्गी । 'नमः स्वायुधाय च' इति श्रुतिः ॥ ३१ ॥

**हरिकेशाय विभवे पञ्चवर्णाय वज्रिणे ।**
**नमः पञ्चाक्षरायाऽथ गोवर्धनधराय च ॥३२॥**

हरिकेशाय—हरिकेशः नीलालकमूर्धा, पलितरहितः नित्ययुवेति यावत् । 'हरिकेशायोपवीतिने' इति श्रुतिः । पञ्चवर्णाय—पञ्चसंख्याकाः वर्णाः रूपाणि यस्य स तथा । श्रुतिरुक्ता । वज्रिणे—वज्रोऽस्याऽस्तीति वज्री । 'नमस्ते वज्रहस्ताय कपर्दिने' इति कौर्मे । 'उग्राय वज्रिणे' इति श्रुतिः । पञ्चाक्षराय—पञ्चाक्षराणि पञ्चसंख्याकान्यक्षराणि स्वसम्बन्धित्वेन प्रसिद्धानि यस्य स तथा ।

'अगस्त्यरामादिभिराद्दतत्वा-
दमुष्य मन्त्रस्य च वैदिकत्वात् ।
परस्य तत्त्वस्य च वाचकत्वात्
नमः शिवायेति श्रुतः पुराणे ॥'—इति ।

**❀ इति द्वितीयशतकभाष्यं सम्पूर्णम् ❀**



## ❀ अथ तृतीयशतकभाष्यम् ❀

गोवर्धनधराय—गोवर्धन इति पर्वतविशेषः, तं धरतीति गोवर्धनधरः, कृष्णरूपत्वात्। 'नमः कृष्णाय पिङ्गलाय' इति श्रुतिः ॥ ३२ ॥

प्रभवे जनबीजाय कालकूटविषादिने ।
सिद्धेश्वराय सिद्धाय सहस्रवदनाय च ॥३३॥

प्रभवे—सर्वलोकानां भूरादिचतुर्दशभुवनानां प्रभुः पतिः। 'एष लोकाधिपतिः' इति श्रुतिः। जनबीजाय। कालकूट-विषादिने—हालाहलविषपानकर्ता कालकूटविषादी। स्कान्दे सनत्कुमारसंहितायां काशिकावनमाहात्म्ये—विष्ण्वादिना समुद्र-मथनम्। तदानीं वासुकिमुखात् कालकूटविषोत्पादनम्। तेन विष्ण्वादीनां ग्लानिः। तदनु तैर्विषनिग्रहार्थं शिवं प्रति प्रार्थना। तदनु शिवप्रेरितेन तेन विषमाहृत्य शिवहस्ते जम्बू-फलवत् समर्पणम्। तदनु—

'गृहीत्वा भुक्तवान् शम्भुः कण्ठे नीलोऽभवत्तदा ।
तदा प्रभृति तत्स्थानं हालाशनमिति स्थितम् ॥
शिवोऽभूत् कालभुङ्नामा कालकण्ठाख्यकोऽभवत्।'—इति।

सिद्धेश्वराय—सिद्धैः लिङ्गरूपेण प्रतिष्ठितः ईश्वरः सिद्धेश्वरः। सिद्धाय—स्वप्रकाशत्वात् सिद्धः। सहस्रवदनाय—सहस्र-मुखः सहस्रवदनः ॥ ३३ ॥

नमः सहस्रहस्ताय सहस्रनयनाय च ।
सहस्रमूर्तये तुभ्यं जिष्णवे जितशत्रवे ॥३४॥

सहस्रहस्ताय—स्पष्टम्। सहस्रनयनाय—व्याख्यातम्। सहस्रमूर्तये—सहस्रसंख्याता अनेकाः मूर्तयः सर्वात्मकत्वात् अस्य सन्तीति सहस्रमूर्तिः। महाभारते—

'यस्मिन् सर्वं यतः सर्वं यः सर्वं सर्वतश्च यः ।
यश्च सर्वमयो देवस्तस्मै सर्वात्मने नमः ॥'—इति ।

'यत्परं ब्रह्म सर्वात्मा' इति श्रुतिः । जिष्णवे—जयतीति जिष्णुः । जितशत्रवे—जिताः शत्रवः येन सः जितशत्रुः । 'जेतारमपराजितम्' इति श्रुतिः ॥ ३४ ॥

**काशीनाथाय गेह्याय नमस्ते विश्वसाक्षिणे ।**
**हेतवे सर्वजीवानां पालकाय नमो नमः ॥३५॥**

काशीनाथाय—काश्याः अविमुक्तक्षेत्रस्य नाथः । 'क्षेत्राणां पतये नमः' इति श्रुतिः । गेह्याय—गेहे प्रासादे भवो गेह्यः । 'तल्प्याय च गेह्याय च' इति श्रुतिः । विश्वसाक्षिणे—विश्वस्य सर्वस्य साक्षी प्रकाशकः । 'सर्वस्य साक्षी' इति श्रुतिः । हेतवे—सर्वभूतानां निमित्तभूतो हेतुः । सर्वजीवानां पालकाय—सर्वजीवात्मनां स्थितिहेतुः पालकः ॥ ३५ ॥

**जगत्संहारकाराय त्रिधावस्थाय ते नमः ।**
**एकादशस्वरूपाय नमस्ते वह्निमूर्तये ॥३६॥**

जगत्संहारकाराय—जगतां संहारहेतुर्जगत्संहारकारः । 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतिः । त्रिधावस्थाय—सृष्टि-स्थिति-संहारकालेषु जाग्रत्-स्वप्न-सुषुप्तिकालेषु च ब्रह्म-विष्णु-रुद्ररूपेण विश्व-तैजस-प्राज्ञरूपेण च त्रिधा अवस्था यस्य स त्रिधावस्थः । एकादशस्वरूपाय—एकादशसंख्याका रुद्राः स्वरूपं यस्य स तथा । उक्तञ्च—

'दधानमेकादशधा विभक्तं
देहं विशुद्धस्फटिकप्रकाशम् ।
तेजोमयं शूलिनमिन्दुमौलिं
विचिन्तयेत्तत्र सदैव रुद्रम् ॥'—इति ।

'अहं रुद्रैर्वसुभिश्चरामि' इति श्रुतिः । वह्निमूर्तये—वह्निर्धनञ्जयो मूर्तिर्यस्य स तथा । आदित्यपुराणे वह्निं प्रति देवाः—

कृष्णकेतो कृष्णवर्त्मन् स्वर्गमार्गप्रदर्शक ।
यज्ञाहुतिहुताहार यज्ञाहार हराकृते ॥'—इति ।

'आ वो राजानमध्वरस्य रुद्रं होतारं सत्ययजं रोदस्योः । अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् ॥' इति श्रुतिः ॥३६॥

**नरसिंहमहादर्पघातिने शरभाय च ।**
**भस्माभ्यक्ताय तीर्थाय जाह्नवीजनकाय च ॥३७॥**

नरसिंहमहादर्पघातिने—नरसिंहस्य यो महादर्पः अतिगर्वः, तं घातयतीति नरसिंहमहादर्पघाती । लिङ्गपुराणे—श्रीहरिणा नृसिंहरूपेण हिरण्यकशिपुनिग्रहः कृतः । अनन्तरं तेनैव लोकानां भयोत्पत्तिः । तदनु तन्निवारणार्थं देवानां शिवप्रार्थनम् । तदनु शिवस्मारितेन वीरभद्रेण नृसिंहं प्रति सान्त्ववादनम् । पुनश्च तस्य कोपाधिक्यम् । तदनु वीरभद्रेण नृसिंहभर्त्सनम्—

'इत्युक्तो वीरभद्रेण नृसिंहः क्रोधमूर्छितः ।
निनद्योत्प्लुत्य वेगेन तं गृहीतुं प्रचक्रमे ॥
अत्रान्तरे महाघोरं विपक्षक्षयकारणम् ।
गगनव्यापि दुर्धर्षं शैवतेजस्समुद्भवम् ॥
वीरभद्रस्य तद्रूपं तत्क्षणादेव दृश्यते ।
न तद्धिरण्मयं रूपं न सौरं नाऽग्निसंभवम् ॥
न तडिच्चन्द्रसंकाशमनौपम्यं महेश्वरम् ।
अधश्चतुष्पादुपरि चतुष्पाच्चक्रवद्भृशम् ॥
तदा तेजांसि सर्वाणि तस्मिन् लीनानि शाङ्करे ।
नृसिंहवक्त्रनेत्रेभ्यः सूक्ष्मं तेजो विजृम्भितम् ॥
रवौ हुतवहस्येव क्षणाल्लीनं शिवात्मके ।
तदव्यक्तं महातेजो व्यक्तं समभवत्तदा ॥

रुद्रासाधारणैश्चिह्नैः चिह्नितं विकृताकृति ।
ततः शरभरूपेण सुव्यक्तः परमेश्वरः ॥
पश्यतां सर्वदेवानां जयशब्दादिमङ्गलैः ।
सहस्रबाहुर्जटिलश्चन्द्रार्धकृतशेखरः ॥
मृगस्पर्धशरीरेण पक्षाभ्यां चञ्चुना द्विजाः ।
अतितीक्ष्णमहादंष्ट्रो वज्रतुल्यनखायुधः ॥
कण्ठे कालो महाबाहुश्चतुष्पाद्वह्निसन्निभः ।
युगान्तोद्यतजीमूतभीमगम्भीरनिस्वनः ॥
समं कुपितवृत्ताग्निविवृत्तनयनत्रयः ।
स्पष्टदंष्ट्राधरोष्ठश्च हुंकारमुखरो हरः ॥
हरिस्तद्दर्शनादेव विनष्टबलविक्रमः ।
बभूवोद्यत्सहस्रांशोरधः खद्योतवद्भृशम् ॥
अथ प्रहृत्य पक्षाभ्यां नाभौ पद्भ्यां व्यदारयत् ।
पादावाबद्ध्य पुच्छेन बाहुभिर्बाहुमण्डलम् ॥
भिन्दन्नुरसि बाहुभ्यां जग्राह च हरो हरिम् ।
ततो जगाम गगनं देवैः सह महर्षिभिः ॥
सहसैव हरो विष्णुं हरिं श्येन इवोरगम् ।
उत्क्षिप्योत्क्षिप्य गृह्णाति निपत्य च निपत्य च ॥
उड्डीयोड्डीय भगवान् पक्षाघातैर्विमोहितम् ।
हरिं हरन्तं वृषभं विश्वस्येशानमीश्वरम् ।
अनुयान्ति सुराः सर्वे नमोवाक्यैरभिष्टुतम् ॥'—इति ।

'हरिं हरन्तमनुयन्ति देवा विश्वस्येशानं वृषभं मतीनाम्' इति श्रुतिः । **शरभाय**—अष्टपादयुक्तः शरभः । स एव सालुवनामकमृगलक्षणेन पक्षिराजलक्षणेन च मिश्रितः । तदुक्तं मन्त्रशास्त्रे—'संहर्ता सर्वशत्रूणां विजयः शरभः सालुवः पक्षिराजः' इति । **भस्माभ्यक्ताय**—भस्मना अभ्यक्तः लिपितः भस्माभ्यक्तः ।

बृहज्जाबालोपनिषदि—'विभूतिर्भसितं भस्म क्षारं रक्षेति भस्मनो भवन्ति पञ्च नामानि। पञ्चभिर्नामभिभृशमैश्वर्यकारणाद्भूतिः। भस्म सर्वाघभक्षणात्। भासनात् भसितम् [प्रोक्तं] क्षारणादापदां क्षारम्। भूतप्रेतपिशाचब्रह्मराक्षसापस्मारसंसारभवभीतिभ्योऽभिरक्षणाद्रक्षा' इति। ननु—इमानि पञ्च प्रयोजनानि परमेश्वरे न संभवन्ति, निरतिशयैश्वर्यशालित्वात् सर्वपाप्मोद्गतत्वात् नित्यापरोक्षज्ञानत्वात् सर्वापदुद्धारकत्वात् भूतप्रेतादिसेवितत्वाच्च। किमर्थं भस्मधारणम्? लोकानुग्रहार्थमिति ब्रूमः। तथाहि—कालाग्निरुद्राथर्वशिरश्-श्वेताश्वतर-कैवल्य-बृहज्जाबालादिषु श्रुतिषु बोधायनादिस्मृतिषु स्कान्द-कौर्म-लैङ्ग-वासिष्ठादिपुराणादिषु च भस्मधारणं नित्यधार्यत्वेन क्वचित्सदाधार्यत्वेन च अत एव भोगमोक्षसाधनत्वेन प्रपञ्चितमिति अस्मत्कृत-शिवगीतातात्पर्यप्रकाशिकायां बहु प्रतिपादितम्। अथर्वशिरसि 'अग्निः'इत्यादिना भस्म गृहीत्वा विमृज्याङ्गानि संस्पृशेत्, 'व्रतमेतत् पाशुपतं पशुपाशविमोक्षणाय' इति। इदमेव व्रतं श्रुत्यन्तरे शिरोव्रतादिशब्दैः प्रसिद्धम्। तदुक्तं सूतसंहितायाम्—

उद्धूलनं त्रिपुण्ड्रं च ज्ञानाङ्गत्वेन सादरम्।
आमनन्ति मुनिश्रेष्ठाः श्वेताश्वतरशाखिनः॥
अयमत्याश्रमो धर्मो यैः समाचरितो मुदा।
तेषामेव शिवज्ञानं संसारोच्छेदकारणम्॥'—इति।

तथा चेदं व्रतं सर्वैरनुष्ठेयमिति शिवेनानुष्ठितं कुबेरं प्रत्युपदिष्टञ्च। यथोक्तम्—उत्तररामायणे—

'मया चैतद्व्रतं चीर्णं त्वया चैव धनाधिप॥
तृतीयः पुरुषो नाऽस्ति यश्चरेद्व्रतमीदृशम्।
व्रतं सुदुश्चरं ह्येतन्मयैवोत्पादितं पुरा॥
तत्सखित्वं मया सौम्य रोचयस्व धनेश्वर॥'—इति।

'एष ह्येव साधु कर्म कारयति' इति श्रुतिः। तीर्थाय—तीर्थं

प्रयागादि यथा स्नानपानादिना पावयति एवमयमपि स्मृतिमात्रेण सर्वान् पावयतीत्यर्थः ।

'पुण्या भागीरथी लोके पुण्या वाराणसी पुरी ।
पुण्या वेदाः शिवः पुण्यः...............।।'—इति ।

पुराणे । **जाह्नवीजनकाय**—जह्नुतनयात्वेन प्रसिद्धा जाह्नवी गङ्गा, तस्याः जनकः, जटावयवे बिन्दुरूपेण लीनायाः पुनरपि भिन्नप्रवाहरूपेणाभिव्यक्तिकरत्वात् । 'वनानां पतये नमः' इति श्रुतिः ॥३७॥

देवदानवदैत्यानां गुरवे ते नमो नमः ।
दलिताञ्जनभासाय नमो वायुस्वरूपिणे ॥३८॥

**देवदानवदैत्यानां गुरवे**—सुरासुरराक्षसानां गुरुः—उपदेष्टा । उपलक्षणमेतत् , सर्वगुरुत्वात् । उक्तञ्च पतञ्जलिना—'स पूर्वेषामपि गुरुः कालेनानवच्छेदात् ।' **दलिताञ्जनभासाय**—दलितस्य भिन्नस्य अञ्जनस्य अञ्जनाद्रेर्भास इव भासो यस्य स तथा । मरुत्वन्नामासुरनिग्रहार्थं प्रवृत्तं घोरमूर्तिं प्रस्तुत्य—

'रक्ताम्बरधरः श्रीमान् भिन्नाञ्जनचयोपमः ।
स्पष्टदंष्ट्राधरोष्ठश्च तीक्ष्णदंष्ट्रद्वयान्वितः ॥'

—इति पुराणे । 'नमः कृष्णाय पिङ्गलाय' इति श्रुतिः । **वायुस्वरूपिणे**—वायूत्पत्त्यनन्तरं वायुभावापन्नत्वादग्न्यादिसर्वकार्याणां च वायुभावापन्नस्यैव हेतुत्वात् वायुरूपी । अथवा परः शम्भुरेव वायुरूपी सन् समस्तं समुद्रादिकं जगच्छोषयामास इति प्रसिद्धम् । तदुक्तं ब्रह्माण्डपुराणे—

'स हि स्कन्दमहावायुमयमात्मानमातनोत् ।
पराशक्त्यम्बिका चाऽस्य क्रियाशक्तिः किलाऽभवत् ॥
तया प्रबलया युक्तः श्रीमहाशम्भुनायकः ।
वायुरूपं समास्थाय दुनोति स जगत्त्रयम् ॥'—इति ।

'आकाशाद्वायुः वायोरग्निः' इति श्रुतिः ॥ ३८ ॥

**स्वेच्छामन्त्रस्वरूपाय प्रसिद्धाय नमो नमः ।**
**वृषध्वजाय गोष्ठ्याय जगद्यन्त्रप्रवर्तिने ॥२९॥**

स्वेच्छामन्त्रस्वरूपाय—मन्त्राः 'सद्योजातम्' इत्यादिपञ्चब्रह्मरूपाः स्वरूपं यस्य स मन्त्रस्वरूपः; यथेच्छं स हरिहरपुत्रादीनां तत्तन्मन्त्रस्वरूपः स्वेच्छामन्त्रस्वरूपः । तथा च स्वतन्त्र इत्युक्तं भवति । एतच्च दारुकावने भिक्षाटनवेलायां शिवे प्रसिद्धम् । पञ्चब्रह्मतनुत्वं वायवीयसंहितायाम्—उक्तम्—

'ईशानं मुकुटं देवं पुरुषास्यं पुरातनम् ।
अघोरहृदयं तद्वद्वामगुह्यं महेश्वरम् ।
सद्यः पादश्च तन्मूर्तिमष्टत्रिंशत्कलामयम् ॥'—इति ।

अथवा यथेन्द्रादीनां ब्रह्मादिभिः साकं मन्त्रालोचनपुरस्सरं कार्यारम्भस्तद्वन्नाऽस्येति वक्तुमिदं नाम । स्वेच्छा मन्त्रस्वरूपं मन्त्रालोचनं न त्वितरैः साकं पर्यालोचनं यस्य स तथा । 'मन्त्रिणे' इति श्रुतिः । प्रसिद्धाय—प्रकर्षेण मानं विना सिद्धः प्रसिद्धः । 'अत्रायं पुरुषः स्वयंज्योतिः' इति श्रुतिः । वृषध्वजाय—वृषाङ्कचिह्नितध्वजवान् वृषध्वजः । शिवस्य वृषध्वजत्वं वृषवाहनत्वञ्च महाभारते प्रसिद्धम् । तत्र देवीं प्रति शिवः—

'श्वेतोऽयं वृषभो देवि सर्वसंस्कारसंयुतः ।
वाहनत्वे ध्वजत्वे च तदाप्रभृति योजितः ॥
तदस्मान्मे गोपतित्वं दैवैर्गोभिश्च कल्पितम् ।'—इति ।

'विद्वा हित्वा गोपतिं शूर गोनाम्' इति श्रुतिः । गोष्ठ्याय—गवां स्थानं गोष्ठम्, तत्र भवो गोष्ठ्यः । 'नमो गोष्ठ्याय च' इति श्रुतिः । जगद्यन्त्रप्रवर्तिने—जगद्रूपस्य यन्त्रस्य प्रवर्तकः जगद्यन्त्रप्रवर्ती । जगतो यन्त्रत्वमीश्वरभ्रामितत्वात् । तदुक्तं भगवता—

'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥'—इति ।

'सूतायाऽऽहन्त्याय' इति श्रुतिः ॥ २९ ॥

**अनाथाय प्रदेशाय विष्णुगर्वहराय च ।**
**हरिविधातृकलहनाशकाय नमो नमः ॥४०॥**

**अनाथाय**—न विद्यते नाथो यस्य सोऽनाथः । तस्याऽपि नाथत्वेऽनवस्था स्यात्, अतः स एव सर्वेषां नाथः । 'तमीश्वराणां परमं महेश्वरम्' इति श्रुतिः । **प्रदेशाय**—प्रकृष्टो देशः कैलासादिः काश्यादिर्वा यस्य स तथा । **विष्णुगर्वहराय**— विष्णोगर्वं हरतीति विष्णुगर्वहरः । लैङ्गे शिवं [प्रति] ब्रह्मा—

'प्रबोधकोऽसि मे विष्णोरवलेपहरो हर ।'
'शुक्रं तु वृत्तं विश्वेश क्रीडार्यै केवलं वयम् ॥'—इति ।

**हरिविधातृकलहनाशकाय** — हरि-विधिकलहनाशकत्वञ्च शिवस्य स्कान्दे—'...................प विस्मितः । पुनः सुष्वाप हरिः । तदनु ब्रह्माऽवान्तरप्रलयावसाने यथापूर्वं जगत् कल्पयित्वा अहमेव जगत्कर्तेति' उपरिभागे प्रथमाध्याये महा-लिङ्गप्रादुर्भावकाले प्रसिद्धम् । तत्र हि सर्वपापनिवर्तनपूर्वकशिव-लोकप्रापकोपायः ऋषिभिः सूतं प्रत्यादौ पृष्टः, शिवरात्रिव्रत-मेवोपाय इति सूतेनोक्ताः, पुनः कथमिति तैः पृष्टः सूत आह—

'ब्रह्मणो रजनीशेषे तोयमग्नां महीं हरिः ।
वाराहं रूपमास्थाय सशैलवनकाननाम् ॥
उद्धृत्य स्थापयामास यथापूर्वं गदाधरः ।'—इति ।

तदनु अहमेव जगत्पूर्वं कर्तेति विस्मयं गतः । सुषुप्तं हरिमुत्थाप्य "त्वं कः ?" इति [ ब्रह्मा ] पृष्टवान्, तेन "अहं जगन्नाथः" इत्युक्तः, जगत्स्रष्टरि मयि स्थिते त्वं कथमेवम्भूतः ? इत्यन्योन्यं वाण-खड्ग-मुसलास्त्रप्रयोगपर्यन्तं युद्धमभूत् । तदस्त्रज्वालया त्रैलोक्यं दग्धम्, तावपि दीनौ भवतः । तदनु करुणाविष्टः सर्गजनकः परमशिवः—

'तद्युद्धशमनार्थाय तयोः संरक्षणाय च ।
माघकृष्णचतुर्दश्यां तयोर्मध्ये महानिशि ॥
आत्मानं दर्शयामास लिङ्गरूपी महेश्वरः ।
कोटिसूर्यप्रतीकाशं मध्ये लिङ्गमुपस्थितम् ॥
तल्लिङ्गमध्ये संलीनं तथा चाऽस्त्रद्वयं तयोः ।'—इति ।

तदनु महालिङ्गावधिज्ञानार्थमुभावपि हंसवराहरूपिणौ तदूर्ध्वाधःप्रदेशं गतौ, तदवधिमज्ञात्वाऽऽत्मनः कारणं शिवं मत्वा तं स्तोतुं समुद्यतौ । स्तुत्यनन्तरं शिवः प्रादुर्भूतः सन्नुवाच—

'शृणु पद्मज मद्वाक्यं त्वं विष्णो गरुडध्वज ।
अहमेव जगत्कर्ता युवयोः कारणं त्वहम् ॥
मत्प्रसादात्पदं ब्रह्मन् विष्णो लब्धं त्वयाऽपि च ।
परस्परास्त्रतेजोऽपि दग्धमण्डं तदा द्वयोः ॥
शिवरात्रिव्रतं नाम युवाभ्यां सुकृतं त्विदम् ।
तस्मात्प्रीतः पदं दास्ये युवयोर्लोकपूजितम् ॥'—इति ।

'तया नस्तनुवा शन्तमया' इति श्रुतिः ॥ ४० ॥

**दशहस्ताय बटवे गगनाय नमो नमः ।**
**कैवल्यफलदात्रे ते परमाय नमो नमः ॥४१॥**

दशहस्ताय—दश हस्ता यस्य स दशहस्तः । [तदुक्तम्—]

'शान्तं पद्मासनस्थं शशिधरमुकुटं पञ्चवक्त्रं त्रिनेत्रं
शूलं वज्रं च खड्गं परशुमभयदं दक्षभागे वहन्तम् ।
नागं पाशं च घण्टां प्रलयहुतवहं साङ्कुशं वामभागे
नानालङ्कारदीप्तं स्फटिकमणिनिभं पार्वतीशं नमामि ॥'—इति ।

'सदाशिवोम्' इति श्रुतिः । बटवे—...... । गगनाय—गगनवत् सर्वव्यापीति गगनः । 'आकाशवत् सर्वगतश्च नित्यः' इति श्रुतिः । कैवल्यफलदात्रे—कैवल्यफलस्य मोक्षफलस्य दाता कैवल्यफलदाता तत्त्वमस्यादिमहावाक्यजन्यप्रत्ययारूढः सन्निति ।

'देवं विदित्वैनं कैवल्यं फलमश्नुते' इति श्रुतिः। परमाय—निरतिशयज्ञानानन्दस्वरूपः परमः। 'एषोऽस्य परम आनन्दः' इति श्रुतिः ॥ ४१ ॥

**ज्ञानगम्याय ज्ञानाय घण्टारवप्रियाय च।**
**पद्मासनाय पुष्टाय निर्वाणाय नमो नमः ॥४२॥**

ज्ञानगम्याय—··· । ज्ञानाय—अनित्यत्वादिदोषरहितः सर्वप्रकाशकः परशिवः। घण्टारवप्रियाय—हन्यते ताड्यते इति घण्टा, तस्या आरवः, स प्रियो यस्य स तथा। अनेन शिवः पूज्य इत्युक्तं भवति। तदुक्तं पुराणे—

'यावन्नाऽऽयाति मरणं यावन्नाऽऽक्रमते जरा।
यावन्नेन्द्रियवैकल्यं तावत्पूजय शङ्करम् ॥'—इति।

'आ वो राजानम०' इति श्रुतिः प्रदर्शिता। पद्मासनाय—पद्मम् आसनं यस्य स पद्मासनः। अनेन हृदयकमलादौ ध्येयत्वमुक्तम्। तदुक्तं कैवल्योपनिषदि—

'हृत्पुण्डरीकं विरजं विशुद्धं
विचिन्त्य मध्ये विशदं विशोकम्।
अचिन्त्यमव्यक्तमनन्तरूपं
शिवं प्रशान्तममृतं ब्रह्मयोनिम् ॥
तमादिमध्यान्तविहीनमेकं
विभुं चिदानन्दमरूपमद्भुतम्।
उमासहायं परमेश्वरं प्रभुं
त्रिलोचनं नीलकण्ठं प्रशान्तम्।
ध्यात्वा मुनिर्गच्छति भूतयोनिं
समस्तसाक्षिं तमसः परस्तात् ॥'—इति।

पुष्टाय—सर्वज्ञत्वाद्यङ्गैः, ज्ञानवैराग्याद्यव्ययैश्च सम्पूर्णत्वात् पुष्टः। 'पुष्टानां पतये नमः' इति श्रुतिः। निर्वाणाय—सर्वदुःखो-

पशमकरणपरमानन्दलक्षणं निर्वाणम् । 'परं ब्रह्म विभाति निर्वाणम्' इति श्रुतिः ॥ ४२ ॥

अयोनये सुदेहाय ह्युत्तमाय नमो नमः ।
अन्तकालाधिपतये विशालाक्षाय ते नमः ॥४३॥

अयोनये—न विद्यते योनिः यस्याऽसौ अयोनिः । 'न चास्य कश्चिज्जनिता' इति श्रुतिः । यद्वा—परमार्थतः सर्वप्रपञ्च-कर्तृत्वरहितः । 'पुरस्तादयोनि स्वात्मस्थम्' इति श्रुतिः । सुदेहाय—शोभनो देहो यस्य सः सुदेहः । तदुक्तम्—

'मङ्गलायतनं देवं युवानमतिसुन्दरम् ।
ध्यायेत् कल्पतरोर्मूले सुखासीनं सहोमया ॥'—इति ।

'शिवान्या' इति श्रुतिः । उत्तमाय—ब्रह्माद्यपेक्षया उत्कृष्टः उत्तमः । 'अक्षि-स्वप्न-सुषुप्त-पुरुषापेक्षया वा स्वेन रूपेणाऽभि-निष्पद्यते स उत्तमः पुरुषः' इति श्रुतिः । अन्तकालाधिपतये—अन्तकालस्य सर्वोपसंहारकालस्य अधिपतिर्नियन्ता, उत्पादक इति यावत्; सर्वप्रपञ्चमुपसंहृत्य तस्मिन्काले स्वयमेव स्थितत्वात् । 'तस्मा उपसंहर्त्रे महाग्रासाय वै नमः' इति श्रुतिः । विशाला-क्षाय—विशालानि अक्षीणि यस्य स विशालाक्षः ॥४३॥

कुबेरबन्धवे तुभ्यं सोमाय सुखिने नमः ।
अमृतेश्वररूपाय कौबेराय च धन्विने ॥४४॥

कुबेरबन्धवे—कुबेरः वैश्रवणः बन्धुः संत्यागासहनः सर्वथा स्वसन्निधौ विद्यमानो यस्य स तथा । तदुक्तम्—

'संत्यागासहनो बन्धुः सहैकानुमतिः सुहृत् ।
समक्रियस्तु सन्मित्रं समप्राणः सखा मतः ॥'—इति ।

अनेन भक्ताह्लादकरत्वमुक्तम्, शङ्करत्वात् । सोमाय—प्रियया ब्रह्मविद्यास्वरूपिण्या कात्यायन्या सह वर्तमानः सोमः । 'नमः

सोमाय च' इति श्रुतिः। सुखिने—सुखं दातुं शीलमस्याऽस्तीति सुखी ; 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेः । अमृतेश्वररूपाय—अमृतैर्देवैः स्वभुक्तिमुक्त्यर्थतया लिङ्गरूपेण स्थापितः ईश्वरः अमृतेश्वरः, तद्रूपः अमृतेश्वररूपः । कौबेराय—कुत्सितं बेरं यस्य स कुबेरः, कुबेरस्य सम्बन्धी कौबेरः । तद्रक्षकत्वात् परशिवः कुबेरस्य सम्बन्धी इत्यर्थः । कौबेरः वैश्रवणो वा, तद्रूपः शिवः तद्रूपेण शन्तनोति इति । खेचराय—............। धन्विने—............॥४४॥

**प्रियम्वदाय दक्षाय वन्दिने विभवाय च ।**
**गिरीशाय गिरित्राय गिरिशन्ताय ते नमः ॥४५॥**

प्रियम्वदाय—..................................। दक्षाय—..............। वन्दिने—..............। विभवाय—...........। गिरीशाय—गिरेः ईशः गिरीशः कैलासपतिरित्यर्थः। गिरित्राय—गिरिं कैलासं त्रायते निवासत्वेन बहुमन्यत इति गिरित्रः। यद्वा—गिरेमघस्य त्रायकः वर्षयितृत्वात्। गिरिसदृशस्य रथस्य त्रायकः, तदवयवानां देवानां त्रायकत्वात् इति वा। अथवा—गिरां यान्चावचसां त्रायकः परिपालकः, यथाभिप्रेतप्रदानत्वात् । 'शिवां गिरित्रताम्' इति श्रुतिः । गिरिशन्ताय—गिरौ कैलासे स्थित्वा नित्यं प्राणिभ्यः शं तनोतीति गिरिशन्तः । गिरि वेदे स्थित्वा वेदार्थरूपेण शं तनोतीति वा । 'गिरिशन्ताऽभिचाकशीहि' इति श्रुतिः ॥ ४५ ॥

**पारिजाताय बृहते पञ्चयज्ञाय ते नमः ।**
**तरुणाय विशिष्टाय बालरूपधराय च ॥४६॥**

पारिजाताय—पारमस्यास्तीति पारिः समुद्रः, तस्माज्ञातः पारिजातः देववृक्षः; तद्रूपत्वात् देवोऽपि पारिजातः, भक्त-

जनेष्ट इति भावः। अथवा—कृष्णेनाऽर्चितो बिल्वादकेश्वरनामा सन्नमुष्य पारिजातलाभसाधक इति पारिजातः, 'लाङ्गलं जीवनम्' इतिवदयं प्रयोगः। अयमर्थो हरिवंशे पारिजातहरणे प्रपञ्चितः। बृहते—………… । पञ्चयज्ञाय—पञ्चयज्ञाः देव-पितृ-भूत-मनुष्य-ब्रह्मविशेषणा यस्य आराधनरूपाः स पञ्चयज्ञः, 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दन्ति मानवाः' इति भगवत्स्मरणात्। 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुतिः। तरुणाय—तरुणः नित्ययुवा।

'मङ्गलायतनं देवं युवानमतिसुन्दरम्।
ध्यायेन्नरवराकारमागच्छन्तं पिनाकिनम्॥'

—इति रहस्यम्। 'गर्तसदं युवानम्' इति श्रुतिः। विशिष्टाय—सर्वमतिशेते यतोऽतो विशिष्टः, 'विश्वतः परमं नित्यम्' इति श्रुतेः। यद्वा—विशेषेण शिष्टो विशिष्टः, देवब्राह्मणत्वात्। 'त्वं देवेषु ब्राह्मणः' इति श्रुतिः। बालरूपधराय—बालस्य रूपमिव रूपं धरतीति बालरूपधरः। पाद्मे शिवराघवसंवादे द्वितीयाध्याये भस्ममाहात्म्यप्रतिपादके—कदाचित् सृष्टिप्रतिभानार्थं भस्मधारणभक्षणसम्पन्नेन विष्णुना शिवध्याने कृते तस्मिन् काले—

'पुनर्ध्यानपरो भूत्वा दीपमध्ये तु पूरुषम्।
शुद्धस्फटिकसंकाशं त्रिनेत्रं द्विभुजं शिवम्॥
वरदं दक्षिणे हस्ते वामे चाऽभयदं विभुम्।
पञ्चवर्षीयवयसा शरच्चन्द्रायुतद्युतिम्॥
माणिक्यकुण्डलोपेतं हेमदामविभूषितम्।
रक्ताङ्गुलीयसुभगं बाहुकोपसुभूषणम्॥
तनुरक्तोष्ठमाकर्णदीर्घायतविलोचनम्।
कपर्दकार्मुकभ्रान्तिजनकभ्रुवमीश्वरम्॥

स्निग्धोन्नतरुचाऽव्यक्तनासमच्छकपोलकम् ।
मन्दस्मितप्रसन्नास्यं बालेन्दुदशनद्युतिम् ॥
विज्ञानरत्ननयनं वेदकल्पिततनूपुरम् ।
वेदाङ्गुलीयमध्यस्थमणिप्रणवमव्ययम् ॥
दृष्ट्वा तथाविधं विष्णुः कृतकृत्योऽभवत्तदा ।'—इति ।

उक्तश्च सूत्रकारैः—'अभिव्यक्तेरित्याश्मरथ्यः' इति । विवृतं च भाष्यकारैः—'अतिमात्रस्याऽपि परमेश्वरस्य प्रादेशमात्रत्वमभिव्यक्तिनिमित्तं स्यात् । अभिव्यज्यते किल प्रादेशपरिमाणः परमेश्वर उपासकानां कृते' इति । 'नमो ह्रस्वाय च वामनाय च' इति श्रुतिः ॥ ४६ ॥

## जीवितेशाय तुष्टाय पुष्टानां पतये नमः ।
## भवहेत्यै हिरण्याय कनिष्ठाय नमो नमः ॥ ४७ ॥

**जीवितेशाय**—जीवितं जीवनं सर्वप्राणिधारणम्, भावे क्तः, तस्य ईशः प्रभुः जीवितेशः स प्राणेश्वर इत्यर्थः । 'कृत्तिवासाः पिनाकी' इति श्रुतिः । **तुष्टाय**—भक्तान् तुष्यतीति तुष्टः, परमानन्दरूपत्वेन अवाप्तसकलकामत्वाद्वा । **पुष्टानां पतये**—पुष्टानि पुष्टयः । वाक्-पुष्टिः, ज्ञान-पुष्टिः, शरीरेन्द्रिय-पुष्टिः गृहक्षेत्र-पुष्टिः, प्रजा-पुष्टिः, पशु-पुष्टिः, ग्राम-पुष्टिः, धर्म-पुष्टिः, धनधान्य-पुष्टिः, अणिमादि-पुष्टिरिति दश पुष्टयः, [तेषां पतिस्तस्मै] । 'पुष्टानां पतये नमः' इति श्रुतिः । **भवहेत्यै**—भवः संसारस्तस्य हेतिः आयुधम् , संसारच्छेत्ता इत्यर्थः। 'भवस्य हेत्यै जगतां पतये' इति श्रुतिः । **हिरण्याय**—हिरण्यसदृशसर्वाङ्गो हिरण्यः । 'आप्रणखात् सर्व एव सुवर्णः' इति श्रुतिः। **कनिष्ठाय**—युवतमाय बालतमाय वा । 'नमो ज्येष्ठाय च कनिष्ठाय च' इति श्रुतिः ॥४७॥

**मध्यमाय विधात्रे च शूराय सुभगाय च ।**
**आदित्यतापनायाऽथ नमस्ते रुद्रमन्यवे ॥४८॥**

**मध्यमाय**—मध्यकाले देव-तिर्यगादिरूपेण उत्पन्नः मध्यमः, मध्यकाले वसन् वा मध्यमः । 'नमो मध्यमाय च' इति श्रुतिः । **विधात्रे**—श्रेयसः कर्ता निर्माता विधाता । तदुक्तं सूतसंहितायां शिवं प्रकृत्य—

अनेनेदं जगत्सर्वं विना न भवति क्वचित् ।
एष धाता विधाता च सर्वदा सर्वदेहिनाम् ॥'—इति ।

'स नो बन्धुर्जनिता स विधाता' इति श्रुतिः । **शूराय**—युद्धे धैर्यवान् शूरः, प्रलयकाले सर्वसंहारसमर्थो वा । 'नमः शूराय च' इति श्रुतिः । **सुभगाय**—शोभनो भगः श्रीर्देयत्वेन यस्य सः सुभगः । सम्पदः परमेश्वरसम्बन्धित्वे श्रुतिः—'श्रेष्ठो जातस्य रुद्र श्रियासि तवस्तमस्तवसां वज्रबाहो' इति । एतदर्थस्तु-वज्रबाहो वज्रबाहुरूपमास्थाय जातस्य, व्यत्ययेन प्रथमार्थे षष्ठी, जातः रुद्रो रुद्ररूपेण प्रादुर्भूतः तवसां तवस्तमः स्तुत्यानां-स्तुत्यतमस्त्वं श्रिया सम्पदा श्रेष्ठोऽसि इति । **आदित्य-तापनाय**—आदित्यं तपनसमर्थं करोतीति आदित्यतापनः । 'येन सूर्यस्तपति तेजसे' इति, 'वर्चोदास्त्वमसि सूर्यस्य' इति च श्रुतेः । 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाऽग्नौ तत्तेजो विद्धिमामकम् ॥' इति स्मृतेश्च । **रुद्रमन्यवे**—रुद्रः सर्वशत्रुरोदनकरो मन्युर्यस्य स रुद्रमन्युः । 'तस्यैते तनुवौ घोराऽन्या' इति श्रुतिः ॥४८॥

**महाह्रदाय ह्रस्वाय वामनाय नमो नमः ।**
**नमस्तत्पुरुषायाऽथ चतुर्हस्ताय मायिने ॥४९॥**

**महाह्रदाय**—सर्वानन्दसमुद्ररूपत्वात् महाह्रदः । ज्ञानिन-स्तदानन्दमवगाह्य विश्रम्य सुखमासत इति वा महाह्रदः ।

'आनन्दं ब्रह्मणो विद्वान् न बिभेति' इति श्रुतिः। ह्रस्वाय—शरीरेण अल्पपरिमाणवान् ह्रस्वः। वामनाय—अङ्गुल्याद्यवयवेषु अल्पपरिमाणवान् वामनः। 'नमो ह्रस्वाय च वामनाय च' इति श्रुतिः। अनेन यः कश्चिदपि जनो नोपेक्षणीयः, किन्तु परमेश्वरत्वेनैव विभाव्य इत्युक्तं भवति। तत्पुरुषाय—तिरोभावशक्त्युपाधिकश्चिन्मात्रमेव तत्पुरुषः। सर्वस्य चेतनस्य वपुः पुर्यामुपपति विशतीति तस्मै। वपुः पुर्यामतस्यामुपपति येन स इति वा। 'तत्पुरुषाय विद्महे' इति श्रुतिः। चतुर्हस्ताय—चत्वारो हस्ता यस्य सः चतुर्हस्तः।

'एकवक्त्रं त्रिनयनं शुद्धस्फटिकसन्निभम्।
अधःकराब्जद्वितये बिभ्राणमभयं वरम्॥
ऊर्ध्वहस्ताब्जयुगले शूलं च परशुं क्रमात्।'

—इति शिवागमे। मायिने……………॥ ४९॥

**नमो धूर्जटये तुभ्यं जगदीशाय ते नमः।**
**जगन्नाथस्वरूपाय लीलाविग्रहरूपिणे ॥५०॥**

धूर्जटये—धूर्गङ्गा जटासु यस्य सः धूर्जटिः। 'नमः कपर्दिने च पुलस्तये च' इति श्रुतिः। जगदीशाय—जगतामीशो जगदीशः। 'एष लोकेशः' इति श्रुतिः। जगन्नाथस्वरूपाय—जगतां नाथा जगन्नाथाः ब्रह्मादयस्तेषां स्वरूपं, सर्वप्रत्यगात्मत्वात् ब्रह्मणः। जगन्नाथाः स्वरूपं यस्येति वा जगन्नाथस्वरूपः। 'यो वै रुद्रः स भगवान् यश्च ब्रह्म०' इत्यादिश्रुतिः। लीलाविग्रहरूपिणे—लीलया स्वीकृतं विग्रहरूपमुमासहायादि अस्यास्तीति लीलाविग्रहरूपी॥ ५०॥

**अनघाय नमस्तुभ्यममराय नमो नमः ।**
**अमृताय नमस्तुभ्यमच्छात्राय नमो नमः ॥५१॥**

अनघाय--दोषरहितोऽनघः । 'य आत्माऽपहतपाप्मा' इत्यादिश्रुतिः । अमराय--न म्रियते इति अमरः । 'अजरोऽमरः' इति श्रुतिः । अमृताय—अमृतः अविनाशस्वभावः सच्चिदानन्दस्वरूपः परशिवः । 'अमृतोऽभयो ब्रह्म' इति श्रुतिः । अच्छात्राय—कस्यापि छात्रः शिष्यो न भवतीति अच्छात्रः, स्वस्यैव सर्वगुरुत्वात् । तदुक्तं सूतसंहितायाम्—शिवः—

'अतिवर्णाश्रमी प्रोक्तो गुरुः सर्वाधिकारिणाम् ।
न कस्यापि भवेच्छिष्यो यथाऽहं पुरुषोत्तमः ॥'—इति ।

'ईशानः सर्वविद्यानाम्' इति श्रुतिः । तत्रैव—

'सर्वेषामात्मरूपोऽहमेव संसारमोचकः ।'
'मामृते साम्बमीशानं मोचकोऽन्यो न विद्यते ॥
अहमप्राप्तसंसारः सर्वज्ञश्च स्वभावतः ।
मदन्ये त्वात्मविज्ञानविहीना माययाऽऽवृताः ॥'

—इति च ॥ ५१ ॥

**लोकाध्यक्ष नमस्तुभ्यमनादिनिधनाय च ।**
**व्यक्तेतराय व्यक्ताय नमस्ते परमाणवे ॥५२॥**

लोकाध्यक्ष—लोकानामधिष्ठाता यः पालयिता स लोकाध्यक्षः । 'एष लोकाधिपतिः' इति श्रुतिः । अनादिनिधनाय—उत्पत्ति-विनाशरहितः अनादिनिधनः । 'तथादिमध्यान्तविहीनम्' इति श्रुतिः । व्यक्तेतराय—व्यक्तं सर्वं कार्यमितरस्माद् यस्मात् स व्यक्तेतरः, कारणरूप इति यावत् । 'अचिन्त्यमव्यक्तम्' इति श्रुतिः । व्यक्ताय—सर्वकार्यरूपो व्यक्तः, विश्वा-

त्मक इति यावत् । 'विश्वरूपाय वै नमः' इति श्रुतिः । परमाणवे—परमः सूक्ष्मः अणुः, दुर्विज्ञेय इति यावत् । 'अणीयान्यतर्क्यम्' इति श्रुतिः ॥५२॥

लघुस्थूलस्वरूपाय नमः परशुधारिणे ।
नमः खट्वाङ्गहस्ताय नागहस्ताय ते नमः ॥५३॥

लघुस्थूलस्वरूपाय—लघु पुत्तलिकादिकं परमाण्वादिकं च, स्थूलं हिरण्यगर्भादिकं आकाशादिकं च; तदाकारः लघुस्थूलस्वरूपः, विचित्रप्रपञ्चात्मक इति यावत् । 'अणोरणीयानहमेव तद्वन्महानहं विश्वमिदं विचित्रम्' इति श्रुतिः । परशुधारिणे—परशुः आयुधविशेषः, तं धरतीति परशुधारी । 'नमः स्वायुधाय च' इति श्रुतिः ।

॥ इति तृतीयशतकभाष्यम् ॥

## ॥ अथ चतुर्थशतकभाष्यम् ॥

खट्वाङ्गहस्ताय—खट्वाया मञ्चस्य अङ्गं पादः हस्ते यस्य स तथा। खट्वाङ्गायुधत्वं च सदाशिवस्य प्रसिद्धं काशिकागमे—

'पिङ्गलाभजटाजूटं दशदोर्दण्डमण्डितम्।
अभयं च प्रसादं च तथा शक्तित्रिशूलकम्॥
खट्वाङ्गं दक्षभागस्थैर्वहन्तं करपल्लवैः।
भुजङ्गं चाऽक्षमालां च डमरुं नीलपङ्कजम्॥
बीजपूरं च वामस्थैर्वहन्तं सुप्रसन्नकम्।
इच्छाज्ञानक्रियारूपास्त्रिशूलं शक्तयो मताः॥
उक्तास्ता एव खट्वाङ्गं शुद्धसत्त्वप्रवर्तकम्।'—इति।

शिवागमवचनेनाऽनेन खट्वाङ्गस्य सत्त्वप्रवर्तकेच्छादिशक्तित्रयात्मकतया 'महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः' इति श्रुतिसिद्धं सत्त्वप्रवर्तकत्वं सूचितम्। नागहस्ताय—नागो हस्ते यस्य स नागहस्तः॥ ५३॥

**वरदाभयहस्ताय घण्टाहस्ताय ते नमः।**
**घस्मराय नमस्तुभ्यमजिताय नमो नमः॥५४॥**

वरदाभयहस्ताय—वरदाभयमुद्राद्वययुक्तौ हस्तौ यस्य स वरदाभयहस्तः। अनेन सर्वरक्षकत्वं सर्वाभीष्टप्रदत्वं च सूचितम्। 'स्वस्तिदा अभयङ्करः' इति श्रुतिः। घण्टाहस्ताय—घण्टा हस्ते यस्य स घण्टाहस्तः। घस्मराय—सर्वभक्षको घस्मरः। 'महाग्रासाय वै नमः' इति श्रुतिः। अजिताय—कैश्चिदपि बाह्यैरसुरादिभिराभ्यन्तरैश्च कामादिभिर्न जितोऽजितः। 'जेतारमपराजितम्' इति श्रुतिः॥ ५४॥

**अणिमादिगुणेशाय पञ्चब्रह्ममयाय च ।**
**पुरातनाय शुद्धाय बलप्रमथनाय च ॥५५॥**

**अणिमादिगुणेशाय**—अणिमाद्यष्टैश्वर्यगुणानामीशः अणिमादिगुणेशः, निरतिशयैश्वर्यशालीति यावत् । 'एष सर्वेश्वर एष सर्वज्ञः' इति श्रुतिः । **पञ्चब्रह्ममयाय**—ईशानादि पञ्चब्रह्म तन्मात्रकः पञ्चब्रह्ममयः । तथाहि—परशिवः कूटस्थनित्य एक एव सन् स्वशक्त्या अवस्थाभेदेन ईशानाद्यात्मना पञ्चधा स्थितः । सर्वशक्तिसामान्यरूपा या परा शक्तिः साऽपि सृष्टिस्थितिसंहारतिरोभावानुग्रहलक्षणैः शक्यविशेषैर्निरूप्यमाणा स्वयमपि सर्जनादिविशेषशक्त्यात्मना पञ्चधा विभक्ता भवति । तत्र सर्जनशक्त्युपाधिकं परशिवस्वरूपं चिन्मात्रमेव सद्योजातः, पालनशक्त्युपाधिकः वामदेवः, संहारशक्त्युपाधिकः अघोरः, तिरोभावशक्त्युपाधिकस्तत्पुरुषः, अनुग्रहशक्त्युपाधिकश्चिन्मात्रमीशानः । एवमेक एव परशिवः पञ्चभिरुपाधिभिः पञ्चधा विभज्य स्थितः । तदुक्तम्—आगमे—

'सोऽनादिमुक्त एको विज्ञेयः पञ्चमन्त्रतनुरिति ।
पञ्चविधं तत्कृत्यं सृष्टिस्थितिसंहृतितिरोभावाः ।
तद्वदनुग्रहकरणं प्रोक्तं सततोदितस्याऽस्य ॥'-इति ।

'मन्त्रिणे वाणिजाय' इति श्रुतिः । **पुरातनाय**—चिरन्तनाय । 'पुरातनोऽहं पुरुषोऽहम्' इति श्रुतिः । **शुद्धाय**—कालत्रयेऽपि परमार्थतो मायाऽविद्यादिसम्बन्धरहितः शुद्धः । 'शुद्धमपापविद्धम्' इति श्रुतिः । **बलप्रमथनाय**—बलानि प्रमथनीयानि लोडयितव्यानि परिवाचयितव्यानि यस्य स बलप्रमथनः, सर्वप्राणिबलतिरोधायक इति यावत् । 'बलप्रमथनाय' इति श्रुतिः ॥ ५५ ॥

पुण्योदयाय पद्माय विरक्ताय नमो नमः ।
उदराय विचित्राय विचित्रगतये नमः ॥५६॥

पुण्योदयाय—पुण्यस्य उदयो येन स पुण्योदयः, 'एष एव साधु कर्म कारयति' इति श्रुतेः । यद्वा स्वनाममात्रमुच्चरतां संसारतारकत्वात् पुण्योदयत्वम् । 'शिवेति नाम विमलं येनोच्चारितमादरात् । तेन भूयो न संसारसागरः समवाप्यते ॥' इति श्रुतिः । पद्माय—पद्मवत् आह्लादकरः पद्मः । 'एष ह्येवानन्दयति' इति श्रुतिः । विरक्ताय—विषयेच्छाविनिर्मुक्तो विरक्तः, स्वस्यैव परमानन्दस्वरूपत्वात् । 'निर्लेपोऽव्यग्रः' इति श्रुतिः । उदराय—साधनरहितः सन् आकाशादिकं सृजति, अपादः सन् सर्वगतः, अपाणिः सन् सर्वक्रियाकर्ता, अचक्षुः सन् सर्वं पश्यति, अकर्णः सन् सर्वं शृणोति, असङ्गः सन् सर्वान्तर्यामी, एक एव सन् अनेकरूप इति । 'सदसस्पतिमद्भुतम्' इति श्रुतिः । विचित्राय—······। विचित्रगतये—विचित्रा आश्चर्यरूपाः परस्परविरुद्धाः गतयः क्रिया यस्य स तथा । 'तदेजति तन्नैजति तद्दूरे तद्वदन्तिके । तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ।' इत्यादि श्रुतिः ॥ ५६ ॥

वाग्विशुद्धाय चितये निर्गुणाय नमो नमः ।
परमेशाय शेषाय नमः पद्मवराय च ॥५७॥

वाग्विशुद्धाय—वाचः वाण्यो विशुद्धा ऋग्वेदादयो यस्य स वाग्विशुद्धः, 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः' इत्यादि श्रुतेः । उक्तञ्च सूत्रकारेण—'शास्त्रयोनित्वात्' इति । विवृतञ्च भाष्यकारैः— 'महत ऋग्वेदादेः शास्त्रस्य योनिः कारणम्' इति । चितये—स्वयंप्रकाशमानसर्वचेतनरूपा स्वाध्यस्ते सर्वस्मिन् दृश्येऽप्यनुस्यूता चितिः । उक्तञ्च वासिष्ठे—

'चिदिहाऽस्तीह चिन्मात्रमिदं चिन्मयमेव च ।
चित्त्वं चिदहमेवेति लोकाश्चिदिति सङ्ग्रहः ॥'—इति ।

'चिद्धीदं सर्वं काशते प्रकाशते च' इति श्रुतिः । निर्गुणाय—गुणरहितो निर्गुणः । शिवपुराणे शक्रं प्रति उपमन्युः—

'स एव निर्गुणः सर्वे सगुणाश्च सुरासुराः ।
देहिनो निष्कलः शम्भुः स कथं गुणवान् भवेत् ॥'—इति ।

तथा ईश्वरगीतायां व्यक्तम्—

'अव्यक्तं कारणं यत्तदक्षरं परमं पदम् ।
निर्गुणं शुद्धविज्ञानं यदा पश्यन्ति सूरयः ॥ '—इति ।

'केवलो निर्गुणश्च' इति श्रुतिः । परमेशाय—उत्कृष्ट ब्रह्मादि-नियन्ता परमेशः । शिवधर्मे—

'अनन्तकान्तिसम्पन्न अनन्तासनसंस्थित ।
अनन्तशक्तिसंभोग परमेश नमोऽस्तु ते ॥
निरञ्जन निराधार स्वाधार निरुपद्रव ।
प्रसन्नपरमेशाय योगीन्द्राय नमोऽस्तु ते ॥'—इति ।

तथा कूर्मपुराणे—

'आरुरुक्षुस्तु सगुणं पूजयेत् परमेश्वरम् ।
पिनाकिनं त्रिनयनं जटिनं कृत्तिवाससम् ॥
पद्मासनस्थं रुक्माभं चिन्तयेद्वा इति श्रुतिः ।' —इति ।

'उमासहायं परमेश्वरम्' इति श्रुतिः । शेषाय—शिष्यते इति शेषः, एक एव परिशिष्यते समाधिकाले, 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते । अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा ॥' इति श्रुतेः । यद्वा महाप्रलये एक एवाऽवशिष्यते यः स इत्यर्थः । तदुक्तं वासिष्ठे—

ब्रह्मार्कविष्णुहरशक्रसदाशिवादि-
शान्तौ शिवं परममेतदिहैकमास्ते ।

सर्वोपधिव्ययवशादविकल्परूपं
　　चैतन्यमात्रमयमुत्थितविश्वसङ्गम् ॥'—इति ।

'सदेव सोम्येदमग्र आसीदेकमेवाऽद्वितीयम्' इति श्रुतिः । पद्मवराय—पद्मशब्देन पद्मासन-पद्मनाभौ उच्येते, ताभ्यां वरः श्रेष्ठस्तत्कारणत्वात् तत्पूज्यत्वाच्चेति पद्मवरः । यद्वा पद्मादीनां हृदयकमलादीनां वरः सहस्रारकमलं तद्ध्यानाधारत्वेन यस्य तथा, 'सहस्रारे पद्म सह रहसि पत्न्या विहरसे' इत्यभियुक्तैः । 'अकारं ब्रह्माणं नाभौ···उकारं विष्णुं हृदये···मकारं रुद्रं भ्रूमध्ये··· ओंकारं सर्वेश्वरं द्वादशान्ते' इति श्रुतिः ॥ ५७ ॥

**महेन्द्राय सुशीलाय करवीरप्रियाय च ।**
**महापराक्रमायाऽथ नमस्ते कालरूपिणे ॥५८॥**

महेन्द्राय—परमैश्वर्यशालित्वादिन्द्रो महान् वृत्रवधादिना उत्कृष्टः, महांश्चाऽसौ इन्द्रश्च महेन्द्रः, महान् वा अयमभूद्यो वृत्रमवधीदिति, 'तन्महेन्द्रस्य महेन्द्रत्वम्' इति श्रुतेः । एतादृशमहेन्द्ररूपत्वान्महेन्द्रः । यद्वा महेश्वरत्वान्महेन्द्रः, 'तमीश्वराणां परमं महेश्वरम्' इति श्रुतेः । सुशीलाय—शोभनं शीलं यस्य सः सुशीलः, अतीव सद्वृत्त इति यावत् । सद्वृत्तत्वं परशिवस्य प्रदर्शितं सूतसंहितायां मुक्तिखण्डे चतुर्थाध्याये—

'अथाऽतः संप्रवक्ष्यामि मोचकं पुरुषोत्तम ।'

—इति प्रस्तुत्य—कश्चिद्द्विजश्रेष्ठः संसाराद्भृतान् इतरान्—

'परित्यज्य विचारेण भगवन्तं त्रिलोचनम् ।
प्रज्वलितजटाबद्धं　चन्द्ररेखावतंसकम् ॥
नीलग्रीवं　शरच्चन्द्रचन्द्रिकावद्विराजितम् ।
गोक्षीरधवलाकारं　चन्द्रबिम्बसमाननम् ॥

सुस्मितं सुप्रसन्नं च स्वात्मतत्त्वैकसंस्थितम् ।
गङ्गाधरं शिवं शान्तं लसत्केयूरमण्डितम् ॥
सर्वाभरणसंयुक्तं सर्वलक्षणसंयुतम् ।
वीरासने समासीनं व्यालयज्ञोपवीतिनम् ॥
भस्मधाराभिरामं तं नागाभरणभूषितम् ।
व्याघ्रचर्मावृतं शुद्धं योगपट्टावृतं शुभम् ॥
सर्वेषां प्राणिनामात्माज्ञानापस्मारपृष्ठतः ।
विन्यस्तचरणं सम्यग् ज्ञानमुद्राधरं हरम् ॥
सर्वविज्ञानरत्नानां कोशभूतं सुपुस्तकम् ।
दधानं सर्वतत्त्वार्थं मालिकां कुण्डिकामपि ॥
स्वात्मभूतपरानन्दपराशक्त्यर्धविग्रहम् ।
धर्मरूपवृषोपेतं धार्मिकैर्वेदपारगैः ॥
मुनिभिः संवृतं मायावटमूलाश्रितं शुभम् ।
ईशानं सर्वविद्यानामीश्वरेश्वरमव्ययम् ॥
उत्पत्त्यादिविनिर्मुक्तमोंकारममलासनम् ।
स्वात्मविद्याप्रदानेन सतां संसारमोचकम् ॥
रुद्रं परमकारुण्यात् सर्वप्राणिहिते रतम् ।
उपासकानां सर्वेषामभीष्टसकलप्रदम् ॥
दक्षिणामूर्तिदेवाख्यं जगत्सर्गादिकारणम् ।'—इति ।

अत्र श्रुतिः—'अजात इत्येवं कश्चिद्भीरुः प्रतिपद्यते । रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यम्' इति । परमानन्दस्वभावत्वं वा सुशीलत्वम्, 'विज्ञानमानन्दं ब्रह्म' इति श्रुतेः । करवीरप्रियाय—करवीरप्रियत्वं शिवस्य पुराणादिषु प्रसिद्धम् ।

'एकेन करवीरेण त्वसितेन सितेन वा ।
हरिं हरं वा संपूज्य ब्रह्मभूयाय कल्पते ॥'—इति ।

अनेन शिवपूजायां सौलभ्यं शिवः पूजनीयः इति चोक्तम्। उक्तञ्च शिवगीतायाम्—

'चन्दनं विल्वकाष्ठस्य पुष्पाणि वनजान्यपि।
फलानि तादृशान्येव यस्य प्रीतिकराणि वै ॥
दुष्करं तस्य सेवायां किमस्ति भुवनत्रये।'—इति,
जलं किञ्चित्समादाय चुलुकं जलमेव वा।
यो दत्ते नियमेनाऽसौ तस्मै दत्ते जगत्त्रयम् ॥'—इति च।

'यक्ष्यामहे सौमनसाय रुद्रम्' इति श्रुतिः। महापराक्रमाय—महान् परानभिभवनीयः सर्वभयङ्करः पराक्रमो यस्य स तथा। 'रुद्रो वै क्रूरः' इति श्रुतिः। कालरूपिणे—सर्वभूतानां परिणामहेतुः कालस्तदात्मकः कालरूपी। 'यो वै रुद्रः स भगवान् यश्च कालस्तस्मै वै नमो नमः' इति श्रुतिः ॥ ५८ ॥

**विष्टरश्रवसे लोकचूडारत्नाय ते नमः।**
**साम्राज्यकल्पवृक्षाय करुणाय नटाय च ॥ ५९ ॥**

विष्टरश्रवसे—विष्टरं व्यापनशीलं श्रवः कीर्तिर्यस्य स विष्टरश्रवाः, सर्वेषामात्मभूतत्वेन प्रसिद्धत्वात्। 'सर्वव्यापी सर्वभूतान्तरात्मा' इति श्रुतिः। यद्वा विष्टरे इव श्रवसी कर्णौ यस्य स विष्टरश्रवाः विष्णुः, तद्रूपत्वाच्छिवस्य। उक्तञ्च कौर्मे—

'न मे नारायणाद् भेदो विद्यते हि विचारतः।
तन्मय्यहं परं ब्रह्म स विष्णुः परमेश्वरः ॥'—इति।

'उमासहायं परमेश्वरम्' इति प्रस्तुत्य, 'स विष्णुः स प्राणः' इति श्रुतिः। लोकचूडारत्नाय-चूड्यते धार्यते इति चूडा शिखा, तत्रत्यं रत्नं चूडारत्नम्; लोक्यन्त इति लोकाः सर्वे जनाः भुवनानि च, तेषां चूडारत्नं शिरोरत्नमिति लोकचूडारत्नम्। अनेन सर्वोत्कृष्टतमः परशिव इत्युक्तं भवति, 'आत्मतममुत्कृष्टम्' इति

श्रुतेः । **साम्राज्यकल्पवृक्षाय**—सम्राजो भावः साम्राज्यम्, अणिमैतदात्म्यमितिवत् भावभावाश्रयः प्रकृतिप्रत्ययरभेद-विवक्षया सम्राजः, सम्राजां ब्रह्मादीनां कल्पवृक्षः तद्वत् सर्वाभीष्ट-प्रदाता इति यावत् ।

'ब्रह्मणः सृष्टिकर्तृत्वं विष्णोर्दानवमर्दनम् ।
स्वर्गाधिपत्यमिन्द्रस्य शिवपूजाविधेः फलम् ॥'

—इत्यादि पुराणवचनम् । 'शिव एको ध्येयः शिवङ्करः' इति श्रुतिः । **करुणाय**—.............................। **नटाय**—.............................॥ ५९ ॥

## अनर्घ्याय वरेण्याय वज्ररूपाय ते नमः ।
## परमज्योतिषे पद्मगर्भाय सलिलाय च ॥ ६० ॥

**अनर्घ्याय**—.....................। **वरेण्याय**—वरेण्यः वरणीयः प्रार्थनीयः सर्वप्राणिभिरात्मत्वेन सेव्य इति यावत् । 'यदेतज्जानथ सदसद्वरेण्यम्' इति श्रुतिः । **वज्र-रूपाय**—वज्रं कुलिशं तद्वद्भयङ्करं रूपं यस्य स वज्ररूपः । भयङ्करत्वं च—'भीषाऽस्माद्वातः पवते' इति श्रुतेः । महद्भयं वज्रमुद्यतम्' इति श्रुतिः । **परमज्योतिषे**—आदित्याद्यपेक्षया उत्कृष्टप्रकाशस्वरूपः परमज्योतिः परशिवः । 'परं ज्योतिरुप-सम्पद्य' इति श्रुतिः । **पद्मगर्भाय**—पद्मस्य हृदयाख्यस्य गर्भः मध्ये उपास्यत्वात् पद्मगर्भः । उक्तं च पुराणे—

'सुखास्तरे समासीनः स्वस्तिकाद्यासनाश्रितः ।
ऋजुः स्वस्थमना भूत्वा नासाग्रन्यस्तलोचनः ॥
नीलकण्ठं हृदि ध्यायेद्वक्ष्यमाणप्रकारतः ।
हृत्पद्ममष्टपत्रं च ऊर्ध्वनालमधोमुखम् ॥
तदूर्ध्वीकृत्य विप्रर्षे प्राणायामेन चैव हि ।
उत्फुल्लं भावयित्वाऽन्तर्वह्निसूर्येन्दुमण्डलम् ॥

उपर्युपरि संचिन्त्य चन्द्रमण्डलमध्यगम् ।
ध्यायेत् सदाशिवं साम्बं नीलकण्ठं चतुर्भुजम् ॥
चन्द्रकोटिप्रतीकाशं पूर्णचन्द्रनिभाननम् ।
विश्वाधारं विशालाक्षं चन्द्रालङ्कृतमस्तकम् ॥
सुधासंसक्तसर्वाङ्गं प्लावयन्तं सुधां सदा ।
अक्षमालाम्बुजधरं व्यालयज्ञोपवीतिनम् ॥
कटिसूत्रेण हैमेन नूपुराद्यैरलङ्कृतम् ।
शान्तं संसारशमनमेवं ध्यायेत् सदा हृदि ॥
व्याघ्रचर्माम्बरधरं वरदं चाभयप्रदम् ।
महाहिकुण्डलधरं हारालङ्कृतवक्षसम् ॥
भस्मोद्धूलितसर्वाङ्गं फालनेत्रविराजितम् ।
मासमेकं द्विजोऽभ्यर्च्य मृत्युं जह्यादवान्तरम् ॥'—इति ।

'दहरं विपाप्मं परवेश्मभूतं
यत्पुण्डरीकं पुरमध्यसंस्थम् ।
तत्रापि दहरं गगनं विशोक-
स्तस्मिन् यदन्तस्तदुपासितव्यम् ॥
यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।
तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ॥'—इति श्रुतिः ।

**सलिलाय**—सलिलवत् स्वच्छस्वभावः, सलिल इव सलिलः । 'सलिल एको द्रष्टे'ति श्रुतिः ॥६०॥

**तत्त्वाधिकाय सर्गाय नमो दीर्घाय स्रग्विणे ।**
**नमस्ते पाण्डराङ्गाय घोराय ब्रह्मरूपिणे ॥६१॥**

**तत्त्वाधिकाय**—तत्त्वम्—प्रकृत्यात्मिका माया, तत्कार्यभूतं पाशस्वरूपं पाशबद्धं च जीवस्वरूपम् , एतत्सर्वं षट्त्रिंशत्तत्त्व-रूपम् ; अतिक्रम्य स्थित इति तत्त्वाधिकः । तदुक्तं सूतगीतायाम्—

'आकाशादीनि भूतानि पञ्चैतेषां प्रकीर्तिताः ।
गुणाः शब्दादयः पञ्च पञ्च कर्मेन्द्रियाणि च ॥
ज्ञानेन्द्रियाणि पञ्चैव प्राणाद्या दश वायवः ।
मनोबुद्धिरहङ्कारश्चित्तं चेति चतुष्टयम् ॥
तेषां कारणभूतैकाविद्या षट्त्रिंशकः पशुः ।
विश्वस्य जगतः कर्ता पशोरन्यः परः शिवः ॥'—इति ।

उक्तश्च भाष्यकारैः—'शिवेशानतत्पुरुषाघोरवामादिभिर्ब्रह्मन्मुखैः षड्भिरङ्गैः, इत्युपक्रम्य षट्त्रिंशत्तत्त्वाविद्यामतीतं परं त्वां कथं वेत्ति को वेत्ति०' इति । 'विश्वाधिको रुद्रो महर्षिः' इति श्रुतिः । सर्गाय—सृज्यत इति सर्गः, सर्वप्रपञ्चात्मकत्वात् । 'सर्वं खल्विदं ब्रह्म' इति श्रुतिः । दीर्घाय—उत्कृष्टत्वाद् दीर्घः 'एष ह्येवोत्कृष्टः' इति श्रुतेः । यद्वा बृहत्त्वात् दीर्घः । 'नमो, बृहते च' इति श्रुतिः । स्रग्विणे—ब्रह्मकपालमालाधरः स्रग्वी । तदुक्तं पाद्मे षट्पञ्चाशेऽध्याये—

'श्मशानमालयस्तस्य (वृषी ?) वृ (कृ ?)त्तिर्दिगम्बरः (रम् ?) ।
कपालानि च माल्यानि कपर्दो मुकुटं तथा ॥'—इति ।

श्मशानालयत्व-कपालमाल्यत्वाभ्यां ब्रह्माद्यपेक्षया नित्यत्वं द्योतितम् । तथा च श्रुतिः—.........................
............ । पाण्डराङ्गाय—पाण्डराणि श्वेतानि अङ्गान्यवयवा यस्य स पाण्डराङ्गः ।

'शरच्चन्द्रप्रकाशेन वपुषा शीतलद्युतिम् ।
ध्यायेत् सिंहासनासीनमुमया सहितं शिवम् ॥'—इति ।

अनेन सत्त्वोपाधिकत्वं द्योतितम्, 'सत्त्वस्यैष प्रवर्तकः' इति श्रुतेः । घोराय—निग्राहको घोरः । 'तस्यैते तनुवौ घोरान्या०' इति श्रुतिः । ब्रह्मरूपिणे—हिरण्यगर्भरूपो ब्रह्मरूपः । यथोक्तं ब्रह्माण्डपुराणे—

'रजोगुणात्मने तुभ्यं विश्वसृष्टिविधायिने ।
हिरण्यगर्भरूपाय हराय जगदादये ॥'—इति ।

हिरण्यगर्भवेषधरो वा । तपस्यन्तं पतञ्जलिमुद्दिश्यानुग्रहकाले—

'तस्य जिज्ञासमानोऽथ भावं देवस्तपस्यतः ।
तमुद्देशमुपागच्छद् ब्रह्मरूपधरो हरः ॥'—इति शैवे ।

'यो रुद्रः स भगवान् यश्च ब्रह्मा तस्मै वै नमो नमः' इति श्रुतिः ॥६१॥

**निष्कलाय प्रपथ्याय सामगानप्रियाय च ।**
**नमो जयाय क्षेत्राय क्षेत्राणां पतये नमः ॥६२॥**

निष्कलाय—प्राणादिकलारहितः परशिवो निष्कलः । 'विरजं ब्रह्म निष्कलम्' इति श्रुतिः । प्रपथ्याय—बहुभिः सेवितो मार्गः प्रपथः, तत्र भवः प्रपथ्यः । 'नमो ऽरण्याय प्रपथ्याय च' इति श्रुतिः । सामगानप्रियाय—...... । जयाय—जयतीति जयः सर्वोत्कृष्टः । सर्वोत्कृष्टत्वञ्च बाह्यशत्रुभिः त्रिपुरजलन्धरादिभिः, आन्तरशत्रुभिः कामादिभिः, अनाद्यविद्यया च अनभिभवनीयत्वात् । 'एष ह्येवोत्कृष्टः' इति श्रुतिः । क्षेत्राय—काशीपुण्डरीकपुरादिकं क्षेत्रम्, तद्रूपः । तदुक्तं शिवरहस्ये सप्तमांशे षष्ठाध्याये—

'पुरा ब्रह्मादिभिः सार्धं विष्णुः काशीदिदृक्षया ।
समाययौ ततो दृष्ट्वा दूरात् काशीं मनोहराम् ॥
प्रणम्य दण्डवद् भूमौ भूयो भूयः कृताञ्जलिः ।
अवाप परमानन्दं दृष्ट्वा काशीति सादरम् ।
इदमक्षियुगं धन्यं पुण्डरीकनिभं मम ।
यतः शिवस्वरूपेयं काशी दृष्टा मयाऽधुना ॥'—इति ।

'सोऽविमुक्ते उपास्यो य एष व्यक्तोऽनन्त आत्मा' इति श्रुतिः । **क्षेत्राणां पतये**—क्षेत्राणां शरीराणां पतिः रक्षकः क्षेत्राणां पतिः । श्रूयते हि 'सदा जनानां हृदये सन्निविष्टः' इति । 'क्षेत्राणां पतये नमः' इति श्रुतिः ॥६२॥

**कलाधराय पूताय पञ्चभूतात्मने नमः ।**
**अनिर्विण्णाय तथ्याय पापनाशकराय च ॥६३॥**

**कलाधराय**—कलायाश्चन्द्रकलायाः धारयिता । 'नमश्चन्द्रललाटाय' इति श्रुतिः । चतुष्षष्टिकलानां वा धारयिता । 'यः सर्वज्ञः' इति श्रुतेः । **पूताय**—अविद्यादिदोषरहितः पूतः । शुद्धः पूतः शून्यः' इति श्रुतिः । **पञ्चभूतात्मने**—पञ्चसंख्याकानि भूतानि आकाशादीनि आत्मा स्वरूपं यस्य स पञ्चभूतात्मा । 'तत्सृष्ट्वा तदेवानुप्राविशत्, तदनुप्रविश्य, सच्च त्यच्चाभवत्' इति श्रुतेः । शैवे शिवं प्रति ऋषयः—

'त्वं भूस्त्वमापः त्वं वह्निस्त्वं वायुस्त्वं पुनर्वियत् ।
त्वं सूर्यस्त्वं लोकनाथः त्वमात्मा त्वं न किं प्रभो ॥'—इति ।

**अनिर्विण्णाय**—अवाप्तसर्वकामत्वान्निर्वेदोऽस्य न वृतः इति अनिर्विण्णः, 'एषोऽस्य परमानन्दः' इति श्रुतेः । 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' इति श्रुतिः । **तथ्याय**—अवितथस्वरूपस्तथ्यः । 'ऋतं सत्यं परं ब्रह्म' इति श्रुतिः । **पापनाशकराय**—लौकिकवैदिकनामभिः कीर्तितः, तथा लौकिकवैदिकैः स्तोत्रैः स्तुतः, तथा पञ्चाक्षरादिभिर्जप्तः पूजितश्च उमासहायत्वादिरूपेण स्मृतो ध्यातो यो पापानां नाशकरः पापनाशकरः । शङ्करसंहितायाम्—

'उच्चरन्तीह ये मर्त्याः शिवनामामृतोपमम् ।
ज्ञानतोऽज्ञानतो वापि नास्ति तेषामघं ध्रुवम् ॥

आदरेण यथा स्तौति धनवन्तं धनेच्छया ।
तथा चेद्विश्वकर्तारं को न मुच्येत बन्धनात् ॥'—इति ।

तथा महाभारते—

'कृत्वा सर्वाणि पापानि हत्वा च भुवनत्रयम् ।
सकृत् पञ्चाक्षरं जप्त्वा सर्वपापैः प्रमुच्यते '—इति ।

स्कान्दे वायवीयसंहितायाम्—

'कृत्वाऽपि सुमहत्पापं भक्त्या पञ्चाक्षरेण वै ।
पूजयेद्यदि देवेशं तस्मात्पापात् प्रमुच्यते ॥' ॥—इति ।

केदारखण्डे—

'हत्वा भित्त्वा च भूतानि भुक्त्वा चान्यायतोऽपि वा ।
शिवमेकं सकृत् स्मृत्वा सर्वपापैः प्रमुच्यते ॥'—इति ।

ब्रह्माण्डपुराणे—

'यश्चिन्तयति पुण्यात्मा तव पादाब्जमव्ययम् ।
ब्रह्महत्याकृतं चापि पापं जह्यान्न संशयः ॥'—इति ।

अपि वा—'यश्चाण्डालः शिव इति वाचं वदेत्, तेन सह संवदेत्, तेन सह संवसेत्, तेन सह भुञ्जीत' इति । 'अथ हैनं ब्रह्मचारिण ऊचुः किं जप्येनामृतत्वं ब्रूहीति । स होवाच याज्ञवल्क्यः शतरुद्रियेणेति' । 'यः शतरुद्रियमधीते, सोऽग्निपूतो भवति,······सुरापानात् पूतो भवति, ब्रह्महत्यायाः पूतो भवति, ·······कृत्याकृत्यात् पूतो भवति' इति श्रुतिः ॥६३॥

**विश्वतश्चक्षुषे तुभ्यं मन्त्रिणेऽनन्तरूपिणे ।**
**सिद्धसाधकरूपाय नमो मेदिनीरूपिणे ॥६४॥**

विश्वतश्चक्षुषे—विश्वतः विश्वत्रयस्य प्राणिषु ब्रह्मादि-पिपीलिकान्तेषु विद्यमानानि चक्षूंषि यस्य स विश्वतश्चक्षुः । 'विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोहस्तः' इति श्रुतिः । मन्त्रिणे—मन्त्राः प्रणवप्रसादादयः अस्य वाचकत्वेन सन्तीति

मन्त्री । उक्तश्च योगसूत्रे ईश्वरं प्रस्तुत्य—'तस्य वाचकः प्रणवः' इति । उक्तश्च सूतसंहितायाम्—

'आकाशादिपदार्थानां वाचकः प्रणवः स्मृतः ।
सर्वावभासकत्वेन ब्रह्मणा सदृशः स्मृतः ॥
सर्वावभासकं मन्त्रमिमं जपति यो द्विजः ।
सर्वमन्त्रजपस्योक्तं फलं स लभतेऽचिरात् ।
अतः सर्वान् परित्यज्य सदा मन्त्रमिमं जपेत् ॥
ऋषिर्ब्रह्माऽस्य मन्त्रस्य गायत्री छन्द उच्यते ।
परमात्माभिधः शम्भुर्देवता परिकीर्तितः ॥'—इति ।

'मन्त्रिणे वाणिजाय' इति श्रुतिः । **अनन्तरूपिणे**—अनन्तं कालतो देशतो वस्तुतः परिच्छेदरहितं रूपमस्यास्तीति अनन्तरूपी, 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतेः । यद्वा—आकाशाद्यसंख्यपदार्था रूपमस्यास्तीति । 'ब्रह्मैवेदं विश्वम्' इति श्रुतिः । **सिद्धसाधकरूपाय**—अविशेषेण सर्वमात्मत्वेन यः पश्यति स सिद्धः । तदुक्तं ब्रह्मगीतायाम्—

'अविशेषेण सर्वं तु यः पश्यति महेश्वरम् ।
स एव साक्षाद्विज्ञानी स शिवः स तु दुर्लभः ॥'—इति ।

साधको मुमुक्षुः—सर्वदाश्रवण-मननादि-व्यापारः, तौ उभावपि रूपं स्वरूपं यस्य स सिद्धसाधकरूपः, 'यमेवैष वृणुते तेन लभ्यः' इति श्रुतेः । 'ब्रह्म वेद ब्रह्मैव भवति' इति श्रुतिः । **मेदिनीरूपिणे**—मेदिनी पृथिवी, सा रूपमस्यास्तीति मेदिनीरूपी । 'यो वै रुद्रः स भगवान् या च भूस्तस्मै वै नमो नमः' इति श्रुतिः ॥६४॥

**अगण्याय प्रतापाय सुधाहस्ताय ते नमः ।**
**श्रीवल्लभाध्र्य ईयाय मधुराय नमो नमः ॥६५॥**

अगण्याय प्रतापाय—इदं पदद्वयं सविशेषणमेकं नाम। प्रकृष्टस्तापः प्रतापः पराभिभवसामर्थ्यम्। अगण्यः अपरिमितः। तथा च अपरिमितसामर्थ्यरूपः परशिव इत्यर्थः। परमेश्वरप्रतापस्य अनितरसाधारणत्वात् तस्यैव धर्मस्य प्राधान्येन स्तुतिः। 'नमस्ते रुद्र मन्यवे' इति श्रुतिः। 'जेतारमपराजितम्' इति श्रुतिः। सुधाहस्ताय—अमृतकलशहस्तः सुधाहस्तः। तदुक्तम्—

'स्फटिक-रजतवर्णां मौक्तिकीमक्षमालाम्,
अमृतकलशविद्या-ज्ञानमुद्राः कराग्रैः।
दधतमुरगकक्ष्यं चन्द्रचूडं त्रिनेत्रम्,
विविध-विधृतवेषं दक्षिणामूर्तिमीडे॥'—इति।

'रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यम्' इति श्रुतिः। श्रीवल्लभाय—श्रियः कमलायाः वल्लभः, तद्रूपत्वात्। तदुक्तं कौर्मे, मार्कण्डेयं प्रति कृष्णः—

'सदा लिङ्गे हितायैषां लोकानां पूजयेच्छिवम्।
योऽहं तल्लिङ्गमित्याहुर्वेदवादविदो जनाः॥
ततोऽहं देवमीशानं पूजयाम्यात्मनैव तु।
तस्याहं परमा मूर्तिस्तन्मयोऽहं न संशयः॥'—इति।

'यथा शिवमयो विष्णुरेवं विष्णुमयः शिवः' इति श्रुतिः। ईध्र्याय—ईध्रं निर्मलरूपत्वेन दीप्यमानम्, तत्र भवः। 'नम ईध्र्याय च' इति श्रुतिः। मधुराय—परमानन्दस्वरूपत्वात् मधुरः। 'रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति' इति श्रुतेः॥६५॥

**उपाधिरहितायाऽथ नमः सुकृतराशये।**
**नमो मुनीश्वरायाऽथ शिवानन्दाय ते नमः॥६६॥**

उपाधिरहिताय—परमार्थतो मायाऽविद्यादिसम्बन्धरहित उपाधिरहितः। यथोक्तं ज्ञानवासिष्ठे—

'सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ।
नाविद्याऽस्तीह नो माया शान्तं ब्रह्मेदमक्लमम् ॥'—इति ।

'निरवद्यं निरञ्जनम्' इति श्रुतिः । सुकृतराशये—सुकृतानां पुण्यानां राशिः समूहः सुकृतराशिः । यथा सुकृतराशेः सुखप्रदत्वम्, एवं परमेश्वरस्याऽप्यानन्दकरत्वात् । 'तद्वै सुकृतम्, रसो वै सः' इति श्रुतिः । मुनीश्वराय—मुनीनां सनकादीनाम्, ईश्वरो विद्योपदेष्टा मुनीश्वरः । 'ईशानः सर्वविद्यानाम्' इति श्रुतिः । शिवानन्दाय—शिवया ब्रह्मविद्यारूपया उमाख्यया स्वाभिन्नया कटाक्षवीक्षणसँल्लापादिना अभिव्यक्त आनन्दो यस्य स शिवानन्दः । ब्रह्मगीतायाम्—

'सा शिवा करुणामूर्तिर्जगन्माता त्रयीमयी ।
शिवाभिन्ना परानन्दः शङ्करस्यापि शङ्करी ॥'—इति ।

'उमासहायं परमेश्वरम्' इति श्रुतिः ॥६६॥

**रिपुघ्नाय नमस्तेजोराशयेऽनुत्तमाय च ।**
**चतुर्मूर्तिवपुःस्थाय नमो बुद्धीन्द्रियात्मने ॥६७॥**

रिपुघ्नाय—रिपून् हन्तीति रिपुघ्नः । 'अहींश्च सर्वान् जम्भयन् सर्वाश्च यातुधान्यः' इति श्रुतिः । तेजोराशये—तेजसां राशिस्तेजोराशिः, अघोरमूर्तिः । तदुक्तं स्कान्दे शंकरसंहितायाम्—मरुत्वन्नामकासुरबाधाद् द्विजरूपं प्राप्य श्वेतारण्ये श्वेतवननाथमुपासितवान् । देवानामुपद्रवार्थमागतवन्तं मरुत्वन्तं प्रति निग्रहार्थं परमेश्वरस्य दक्षिणमुखात् आविर्भूतमघोरास्त्रं प्रत्याक्रान्ते महाघोरं भ्रातृव्यक्षयकारकमाकाशव्यापि दुर्धर्षमैशं तेजः समुद्बभौ ।

'कोटिसूर्यप्रतीकाशं नेत्रस्तम्भकरं महत् ।

तेजांसि सर्वाणि तदा लीनान्यासंस्तदात्मनि ॥
तदव्यक्तं महत्तेजो व्यक्तं समभवत् क्षणात् ।
रुद्रसाधारणैश्चिह्नैश्चिह्नितं विकृताकृतिः ॥
ततोऽस्य घोररूपेण सुव्यक्तः परमेश्वरः ।'—इति ।

'अघोरेभ्योऽथ घोरेभ्यः' इति श्रुतिः । अनुत्तमाय—न विद्यते उत्तमो यस्मात् सोऽनुत्तमः सर्वोत्कृष्ट इति यावत्, 'महतः परमव्यक्तमव्यक्तात् पुरुषः परः । पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥' इति श्रुतिः । चतुर्मूर्तिवपुःस्थाय—चतुर्भुर्युक्ता मूर्तयः चतुर्मूर्तयः-ब्रह्मविष्णुरुद्रसर्वेश्वरात्मिकाः, तासामधिष्ठानभूतानि यानि वपूंषि—राजसस्थूलविराड्रूप-सात्त्विकसूक्ष्महिरण्यगर्भरूप-तामससौषुप्ताज्ञानरूपगुणसाम्यव्याकृताव्याकृतरूपाणि—तेषु सदात्मकविश्ववैश्वानररूपसर्वसृष्टिकर्तृब्रह्मरूपेण चिदात्मकतैजससूत्ररूपसर्वपालकविष्णुरूपेण आनन्दात्मकप्राज्ञेश्वररूपसर्वसंहर्तृरुद्ररूपेण सच्चिदानन्दात्मकसर्वेश्वररूपेण च तिष्ठतीति चतुर्मूर्तिवपुःस्थः । 'अकारं ब्रह्माणं नाभौ'''उकारं विष्णुं हृदये'''मकारं रुद्रं भ्रूमध्ये'''ॐकारं सर्वेश्वरं द्वादशान्ते' इति श्रुतिः । बुद्धीन्द्रियात्मने—बुद्धेर्वृत्तिरूपज्ञानस्य साधनानि इन्द्रियाणि बुद्धीन्द्रियाणि तेषामात्मा सत्तास्फूर्तिप्रदत्वेन अधिष्ठानभूतो बुद्धीन्द्रियात्मा । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति श्रुतिः ॥ ६७॥

**उपद्रवहरायाऽथ प्रियसंदर्शनाय च ।**
**भूतनाथाय मूलाय वीतरागाय ते नमः ॥ ६८ ॥**

उपद्रवहराय—उपप्लवः उपद्रवः दुष्टदैत्यकर्तृको लोकस्य, तन्निग्रहपूर्वकं तं हरतीति उपद्रवहरः । 'नमः सहमानाय निव्याधिने' इति श्रुतिः । प्रियसंदर्शनाय—प्रियं संदर्शनं यस्य

स तथा । संदर्शनशब्देन सम्यग्ज्ञानमप्रतिबद्धापरोक्षरूपमुच्यते, तेन स्वविषयाविद्यातत्कार्यविनाशपूर्वकनित्यानन्दाविर्भावरूपप्रियकरत्वात् प्रियसन्दर्शनः । 'ईशं तं ज्ञात्वाऽमृता भवन्ति' इति श्रुतिः । भूतनाथाय—भूतानां चतुर्विधभूतग्रामाणां नियन्ता भूतनाथः । 'एष भूताधिपतिः' इति श्रुतिः । मूलाय—अव्यक्तादिस्थावरान्तस्य संसारवृक्षस्य मूलं कारणं ब्रह्म इति यावत् । 'ऊर्ध्वमूलोऽवाक्शाखः' इति श्रुतिः । वीतरागाय—वीतो रागो यस्य स तथा । 'अनिच्छुरलेपोऽव्यग्रः' इति श्रुतिः ॥ ६८ ॥

नैष्कर्म्याय विरूपाय षट्चक्राय विशुद्धये ।
कूलेशायाऽवनिभर्त्रे भुवनेशाय ते नमः ॥ ६९ ॥

नैष्कर्म्याय—नैष्कर्म्यं कैवल्यं तद्रूपत्वात् परशिवस्य । 'साक्षी चेता केवलो निर्गुणश्च' इति श्रुतिः । विरूपाय—विगतं रूपं यस्य स विरूपः । 'अशब्दमस्पर्शमरूपमव्ययम्' इति श्रुतिः । षट्चक्राय—षट्संख्याकानि चक्राणि मूलाधारादीनि उपासनास्थानत्वेन विद्यमानानि यस्य स षट्चक्रः । मूलाधारं चतुर्दलपद्माकारम्, षड्दलपद्माकारं स्वाधिष्ठानम्, दशदलपद्माकारं मणिपूरकम्, अनाहतनामकं द्वादशदलपद्माकारम्, विशुद्धाख्यं षोडशदलपद्माकारम्, आज्ञाभिधानं द्विदलपद्माकारम् । तदुक्तम्—

'आधारे लिङ्गनाभौ हृदयसरसिजे तालुमूले ललाटे
द्वे पत्रे षोडशारे द्विदशदशदले द्वादशार्धे चतुष्के ।'—इति ।

उक्तं च ललितोपाख्याने—

'तडिल्लतासमरुचिः षट्चक्रोपरि संस्थिता ।'—इति ।

उक्तं च अम्बास्तवे—

'मूलालवालकुहरादुदिता भवानी
निर्भिद्य षट् सरसिजानि तडिल्लतेव ।'—इति ।

'मूलाग्नावग्निरूपं प्रणवं सन्दध्यात् । सप्तात्मानं चतुरात्मानमकारं ब्रह्माणं नाभौ' इत्यादिश्रुतिः । विशुद्धये—विशेषेण शुद्धिर्यस्य स विशुद्धिः । 'अस्नाविरं शुद्धमपापविद्धम्' इति श्रुतिः । कूलेशाय—कूलस्य देहस्य ईशः कूलेशः । 'देहे गृहे जनपदे नदीतीरे कूलम्' इति रत्नमाला । देहेशत्वञ्च शिवस्य जीवनियन्तृत्वेन देहे सर्वदा विद्यमानत्वात् । 'समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' इति श्रुतिः । अवनिभर्त्रे—शेषरूपेण अवनिं भूमिं बिभर्तीति अवनिभर्त्रे । 'तीक्ष्णाय तीक्ष्णरूपिणे' इति श्रुतिः । भुवनेशाय—भुवनानां चतुर्दशभुवनानाम् ईशः स्वामी । 'एष लोकेशः' इति श्रुतिः ॥ ६९ ॥

**हिरण्यबाहवे जीववरदाय नमो नमः ।**
**आदिदेवाय भाग्याय चन्द्रसञ्जीवनाय च ॥ ७० ॥**

हिरण्यबाहवे—हिरण्यनिर्मितानि आभरणानि बाह्वोर्यस्य स हिरण्यबाहुः । यद्वा हिरण्यसदृशौ बाहू यस्य सः । उपलक्षणमेतत् । 'आप्रणखात् सर्व एव सुवर्णस्तस्य' इति श्रुतिः । नमो हिरण्यबाहवे' इति श्रुतिः । जीववरदाय—जीवस्य बृहस्पतेः, वरं तत्पृष्टं ज्ञानयोगमाश्रमधर्मसहितं विस्तरेण प्रतिवचनरूपेण ददातीति जीववरदः । तदुक्तं सूतसंहितायां ज्ञानयोगखण्डे—

'भवता कथितं सर्वं संक्षेपाद्विस्तरेण च ।
इदानीं श्रोतुमिच्छामो ज्ञानयोगं सहेतुकम् ॥'

इति सूतं प्रति ऋषीश्वराणां प्रश्नं प्रस्तुत्य—

'एतदेव पुराऽपृच्छद्गिरां नाथो महेश्वरम् ।
देवोऽपि देवीमालोक्य करुणाविष्टचेतसा ॥
प्राह गम्भीरया वाचा गुरवे मुनिपुङ्गवाः ।'

इत्यादिना आश्रमधर्मः, पापानां प्रायश्चित्तम्, दानधर्मफलम्, पापकर्मफलम्, देहोत्पत्तिप्रकारः, नाडीचक्रम्, नाडीशुद्धिः, अनन्तरमष्टाङ्गयोगः—एतत्सर्वं बृहस्पतिं प्रत्युक्तं शिवेन। बृहस्पतिस्तावत् सुराणां गुरुस्तं प्रत्यप्येतत् सर्वं परमेश्वरेणोपदिष्टमिति शिवस्य सर्वगुरुत्वमनेन नाम्ना स्पष्टीकृतम्। 'ईशानः सर्वविद्यानाम्' इति श्रुतिः। आदिदेवाय—आदिः ब्रह्मादीनां कारणं स चाऽसौ देवश्च आदिदेवः। 'यो ब्रह्माणं विदधाति पूर्वम्' इति श्रुतिः। भाग्याय—भाग्यस्य यथा सुखकरत्वमेवं परमेश्वरोऽपि सुखकरत्वाद् भाग्यम्। 'नमः शङ्कराय च' इति श्रुतिः। चन्द्रसञ्जीवनाय—चन्द्रस्य सञ्जीवयिता इति चन्द्रसञ्जीवनः। सुरैर्निष्पीतं निखिलं चन्द्रमाप्याय्य सञ्जीवयिता आदित्यः, 'यमादित्या अंशुमाप्याययन्ति' इति श्रुतेः तद्रूपत्वात् चन्द्रसञ्जीवनः। तद्रूपत्वञ्च 'घृणिने कपर्दिने' इति श्रुतिप्रसिद्धम्॥ ७०॥

**हराय बहुरूपाय प्रसन्नाय नमो नमः।**
**आनन्दपूरितायाऽथ कूटस्थाय नमो नमः॥ ७१॥**

**हराय**—स्वविषयज्ञानेन अविद्यादेर्हरणात् हरः। वायवीयसंहितायाम्—

'प्रसङ्गात् कौतुकाल्लोभाद् भयादज्ञानतोऽपि वा।
हर इत्युच्चरन्मर्त्यः सर्वपापैः प्रमुच्यते॥'—इति

'अमृताक्षरं हरः' इति श्रुतिः। बहुरूपाय—ब्रह्मादिस्थावरान्ताकारेण बहुरूपः। 'इन्द्रो मायाभिः पुरुरूप ईयते' इति श्रुतिः। प्रसन्नाय—प्रसन्नः स्वच्छः केवलः इति यावत्। स्कान्दे—

'अतः शिवः सर्वजगद्विभासः
स्वयंप्रकाशः स्वयमेव केवलः।'—इति।

'साक्षी चेता केवलः' इति श्रुतिः । आनन्दपूरिताय—आनन्देन पूरितः आनन्दपूरितः, आनन्दपूर्ण इति यावत् । 'सच्चिदानन्दपूर्णात्मानं परमात्मानम्' इति श्रुतिः । कूटस्थाय—कूटवद् विकाररहितो यस्तिष्ठतीति कूटस्थः । अनेन जायते, अस्ति, वर्धते, विपरिणमते, अपक्षीयते, नश्यति—इति षडपि भावविकाराः प्रतिषिद्धाः । 'न जायते म्रियते वा' इति श्रुतिः ॥७१॥

नमो मोक्षफलायाऽथ शाश्वताय विरागिणे ।
यज्ञभोक्त्रे सुषेणाय दक्षयज्ञविघातिने ॥ ७२ ॥

मोक्षफलाय—मोक्षरूपं फलं येन सः मोक्षफलः तद्विज्ञानादमृतत्वप्राप्तेः । 'ब्रह्म वेद ब्रह्मैव भवति' इति श्रुतिः । शाश्वताय—सर्वेषु कालेषु एकरूपतया भवतीति शाश्वतः । तदुक्तं लैङ्गवासिष्ठे—

'न जायते म्रियते वाऽपि नात्मा
नायं भूत्वा भविता वाऽपि भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणः
स्वभावतो विमलो ब्रह्मरूपः ॥'—इति ।

'शाश्वतोऽयं पुराणः' इति श्रुतिः । विरागिणे—विगतो रागो विरागः, सोऽस्यास्तीति विरागी, अवाप्तसकलकामत्वात् । श्रुतिरुक्ता । यज्ञभोक्त्रे—यज्ञस्य भोक्ता, परमेश्वरप्रीत्यर्थत्वात् [ यज्ञस्य ] । शिवपुराणे—

'अन्तर्यामी स विश्वेशः सर्वेषामेव देहिनाम् ।
भोक्तापि सर्वयज्ञानां शङ्करः परमार्थतः ॥'—इति ।

'आ वो राजानमध्वरस्य रुद्रम्' इति श्रुतिः ।

॥ इति चतुर्थशतकभाष्यं सम्पूर्णम् ॥

———

## ॥ अथ पञ्चमशतकभाष्यम् ॥

**सुषेणाय**—शोभना सेना गणात्मिका यस्य स सुषेणः । 'नमो हिरण्यबाहवे सेनान्ये' इति श्रुतिः । **दक्षयज्ञविघातिने**—दक्षाध्वरध्वंसको दक्षयज्ञविघाती । द्रोणपर्वणि—अर्जुनं प्रति व्यासः—

'कर्माणि चैव घोराणि महादेवस्य धन्विनः ।
तानि ते कीर्तयिष्यामि यथादृष्टं यथाश्रुतम् ॥
नाऽसुरा नाऽमरा लोके गन्धर्वा न च राक्षसाः ।
सुखमेधन्ति कुपिते तस्मिन्नपि शुभागताः ॥
विव्याथ कुपितो यज्ञं निर्भयस्तु भवस्तदा ।'—इति ॥

'जेतारमपराजितम्' इति श्रुतिः ॥ ७२ ॥

**नमः सर्वात्मने तुभ्यं विश्वपालाय ते नमः ।**
**विश्वगर्भाय गर्भाय देवगर्भाय ते नमः ॥ ७३ ॥**

**सर्वात्मने**—

'सर्वानन्त्यः स सर्वात्मा सर्ववस्त्ववभासकः ।
सर्वानन्दकरः पूर्णः सर्वदेवोत्तमोत्तमः ॥'—इति ।

महाभारते—

'यस्मिन् सर्वं यतः सर्वं यत्सर्वं सर्वतश्च यः ।
यश्च सर्वमयो देवस्तस्मै सर्वात्मने नमः ॥'—इति ।

'यत्परं ब्रह्म सर्वात्मा' इति श्रुतिः । **विश्वपालाय**—विश्वरक्षको विश्वपालः ।' विश्वाधिपः सर्वभूतेषु गूढः' इति श्रुतिः । **विश्वगर्भाय**—विश्वः प्रपञ्चो गर्भः अनभिव्यक्तो यस्य स तथा । 'सदेव सोम्येदमग्र आसीत्' इति श्रुतिः । **गर्भाय**—सूक्ष्मकारणभूतोऽनभिव्यक्तो गर्भः । 'तद्धेदं तर्ह्यव्याकृतमासीत्' इति

श्रुतिः। देवगर्भाय—देवा अग्निवाय्वादय इन्द्रियाभिमानिनः, गर्भाः सूक्ष्मभूता यस्य स देवगर्भः। 'स ऐक्षतेमे नु लोका लोकपालान्नु सृजा इति। सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्च्छयत्। तमभ्यतपत्तस्याभितप्तस्य मुखं निरभिद्यत यथाण्डं मुखाद्वाग् वाचोऽग्निः' इत्यादिश्रुतिः ॥ ७३ ॥

संसारार्णवमग्नानां समुद्धरणहेतवे ।
मुनिप्रियाय खल्ल्याय मूलप्रकृतये नमः ॥७४ ॥

संसारार्णवमग्नानां समुद्धरणहेतवे—संसारः जननमरणसमूहः, स एव अर्णवः समुद्रः, अपारत्वात्, तत्र मग्नानां सर्वदा दुःखानुभवितॄणां दुःखनाशकरप्लवादिरहितानां समुद्धरणे तेषां दुःखनाशने हेतुः कारणम्, वेदान्तमहावाक्यजन्यवृत्त्यारूढः सन् संसारपाशविच्छेदकरत्वात्। 'ज्ञात्वा देवं सर्वपाशापहानिः' इत्यादिश्रुतिः। मुनिप्रियाय—मुनीनां मननशीलानां योगिनां श्रवण-मननपुरःसरं सदा ध्येयत्वात् मुनिप्रियः। 'योगिध्येयं पदम्' इति श्रुतिः। खल्ल्याय—खलं धान्यादिशोधनस्थानम्, तत्र भवः खल्ल्यः। 'नम ऊर्व्याय च खल्ल्याय च' इति श्रुतिः। मूलप्रकृतये—मूलभूता प्रकृतिर्मूलप्रकृतिः, जगदादिकारणं तन्निमित्तोपादानात्मकं ब्रह्मेत्यर्थः। 'तदैक्षत बहु स्यां प्रजायेय' इति श्रुतेः। ऐक्षतेति ईक्षणकर्तृत्वाद् निमित्तकारणत्वम्, बहु स्यामिति बहुभवनहेतुत्वाद् उपादानत्वम् ॥ ७४ ॥

समस्तसिद्धये तेजोमूर्तये ते नमो नमः ।
आश्रमस्थापकायाऽथ वर्णिने सुन्दराय च ॥७५॥

समस्तसिद्धये—समस्ताः सिद्धयोऽणिमादयः संभूता

यस्मात् स समस्तसिद्धिः, निरतिशयैश्वर्यशालित्वात् तस्य । 'तमीश्वराणां परमं महेश्वरम्' इति श्रुतिः । तेजोमूर्तये—तेज एव मूर्तिः स्वरूपं यस्य स तेजोमूर्तिः, स्वयंप्रकाश इति यावत् । 'प्राणो ब्रह्मैव तेज एव' इति श्रुतिः । आश्रमस्थापकाय—ब्रह्मचर्य-गृहस्थ-वानप्रस्थ-संन्यासाश्रमाणाम्, 'अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीत' इत्यादिस्ववाक्यभूतश्रुतिस्मृतिद्वारा स्थापकः आश्रमस्थापकः, 'अभिमन्ता जीवनियन्तेश्वरः' इति श्रुतेः । वर्णिने—वर्णी ब्रह्मचारी । पाद्मे—उमायास्तीव्रतपश्चरणकाले ब्रह्मचारिरूपेण शिवो वरदानार्थमाविर्बभूव इति प्रसिद्धम्—

'अथाऽऽस्थाय महादेवः प्रथमाश्रमिणो वपुः ।
प्रगल्भवागुमायाश्च तपोवनमुपागमत् ॥
आषाढमजिनं मौञ्जीं कौपीनमुपवीतकम् ।
अक्षयमालां जटामेकां भस्मधारां च धारयन् ॥
प्रथमाश्रमधर्मं तं मूर्तिमन्तमुपागतम् ।'

इत्यादिना । 'उत्तमपुरुषाय ब्रह्मचारिणे' इति श्रुतिः । सुन्दराय—द्वात्रिंशल्लक्षणोपेतः सुन्दरः । 'कामाय कामरूपिणे' इति श्रुतिः ॥ ७५ ॥

**मृगबाणार्पणायाऽथ शारदावल्लभाय च ।**
**विचित्रमायिने तुभ्यमलङ्करिष्णवे नमः ॥७६॥**

मृगबाणार्पणाय—प्रजापतिः किल सुन्दरीं काञ्चित् स्त्रियं सृष्ट्वा तां प्रति मोहितः । सा तदभिप्रायं ज्ञात्वा मृगीरूपेण दुद्राव । सोऽपि मृगरूपेण तां रन्तुमनुगतवान् । एवंभूते तस्मिन् मृगे बाणस्यार्पणं येन स मृगबाणार्पणः । अयमर्थः स्पष्टीकृतः—

'प्रजानाथं नाथः प्रसभमभिकं स्वां दुहितरं
गतं रोहिद्भूतां रिरमयिषुमृष्यस्य वपुषा ।
धनुष्पाणेर्यातं दिवमपि सपत्राकृतममुं
त्रसन्तं तेऽद्यापि त्यजति न मृगव्याधरभसः ॥'

इति । 'प्रजापतिर्हवै स्वां दुहितरमभिदध्यौ' इत्यारभ्य, 'तं रुद्रोऽभ्यायत्यविव्याध' इति श्रुतिः । शारदावल्लभाय—शारदाया वाग्रूपायाः श्रुतिस्मृतीतिहासपुराणात्मिकाया वल्लभः पतिः; सर्वस्याऽपि शब्दप्रपञ्चस्य तदधीनत्वात्, 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' इत्यादिश्रुतेः । यद्वा—शारदायाः सरस्वत्याः पुस्तकादिचिह्निताया वल्लभः नायकः, तद्रूपत्वाच्छिवस्य, 'यो वै रुद्रः स भगवान् यश्च ब्रह्मा तस्मै वै नमो नमः' इति श्रुतेः । विचित्रमायिने—विचित्रा आश्चर्यकरी माया यस्य स विचित्रमायी । विचित्रमायित्वं च विचित्रजगन्निर्माणेनोन्नेयम् । तदुक्तं भाष्यकारेण जन्मादिसूत्रे—'अस्य जगतो नामरूपाभ्यां व्याकृतस्याऽनेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाऽप्यचिन्त्यरचनारूपस्य जन्मस्थितिभङ्गं यतः सर्वज्ञात् सर्वशक्तेः कारणाद् भवति तद् ब्रह्म' इति । 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति श्रुतेः । अलङ्करिष्णवे—स्वात्मानं भक्तजनेनाऽप्यलङ्कर्तुं शीलमस्याऽस्तीति अलङ्करिष्णुः । दिव्यरूपलावण्यसौन्दर्यालङ्कारयुक्तकामेश्वरीरूपेण देव्या आविर्भावानन्तरं तदनुरूपतया त्वयाऽपि भवितव्यमिति देवैः प्रार्थितः दिव्यालङ्कारयुक्तः श्रीकामेश्वररूपेण परमेश्वरोऽपि प्रादुर्बभूवेति प्रसिद्धं ललितोपाख्याने । तदुक्तं भाष्यकारैः श्रीचक्रवर्णनानन्तरं सर्वानन्दमयनामके विन्दौ पञ्चब्रह्मात्मकं हंसतूलिकातल्पयुक्तं मञ्चमुपवर्णयन्, तदनन्तरम्—

'तस्योपरि निवसन्तं तारुण्यश्रीनिषेवितं सततम् ।
आवृत्तफुल्लहल्लकमरीचिकापुञ्जमञ्जुलच्छायम् ॥
सिन्दूरशोणवसनं शीतांशुस्तबकचुम्बितकिरीटम् ।
कुङ्कुमतिलकमनोहरकुटिलालिकहसितकुमुदबन्धुशिशुम् ॥
पूर्णेन्दुबिम्बवदनं फुल्लसरोजातलोचनत्रितयम् ।
तरलापाङ्गतरङ्गितशङ्करकेतनशास्त्रसम्प्रदायार्थम् ॥
मणिमयकुण्डलपुष्यन्मरीचिकल्लोलमांसलकपोलम् ।
विद्रुमसहोदराधरविसृमरस्मितकिशोरसञ्चारम् ॥
आमोदितकुसुमशेखरमानीलभ्रूलतायुगमनोज्ञम् ।
वीटीसौरभवीचिद्विगुणितवक्त्रारविन्दसौरभ्यम् ॥
पाशाङ्कुशेक्षुचापप्रसवशरस्फुरितकोमलकराब्जम् ।
काश्मीरपङ्किलाङ्गं कामेशं मनसि कुर्महे सततम् ॥'—इति ।

गौरीविवाहार्थं गमनसमये आभरणपेटिकामानीय तैराभरणालङ्कारः कर्तव्य इति देवैः प्रार्थितः परशिवः सङ्कल्पमात्रेण सर्वाभरणभूषितस्तैस्तानेवाऽलङ्कारयामास इति प्रसिद्धं शङ्करसंहितायाम् । 'नमो हिरण्यबाहवे' इति श्रुतिः ॥ ७६ ॥

**बहिर्मुखमहादर्पमथनाय नमो नमः ।**
**नमोऽष्टमूर्तये तुभ्यं निष्कलङ्काय ते नमः ॥७७॥**

**बहिर्मुखमहादर्पमथनाय**—बहिर्मुखाः विषयलम्पटाः, तेषां ये महादर्पाः अपरिमितगर्वाः, तान् मथ्नाति लोडयति नाशयति इति बहिर्मुखमहादर्पमथनः । इदं च दुष्टनिग्राहकत्वं परमेस्य श्रुतिपुराणादिषु प्रसिद्धम् । 'नमः सहमानाय निव्याधिने' इति श्रुतिः । **अष्टमूर्तये**—अष्टौ मूर्तयो यस्य सोऽष्टमूर्तिः ।

'भूतार्कचन्द्रयज्वानो मूर्तयोऽष्टौ प्रकीर्तिताः ।'

इति आगमे।

'भूरम्भांस्यनलोऽनिलोऽम्बरमहर्नाथो हिमांशुः पुमा-
नित्याभाति चराचरात्मकमिदं यस्यैव मूर्त्यष्टकम्।'

इति आचार्याः। 'तदेवाग्निस्तद्वायुः' इत्यादिश्रुतिः। **निष्कलङ्काय**—कलङ्कात् स्वाभाविकागन्तुकदोषरूपात्, अविद्यातत्कार्यरूपाद्वा निष्क्रान्तो निष्कलङ्कः। 'सदोज्ज्वलोऽविद्यातत्कार्यहीनः' इति श्रुतिः॥ ७७॥

**नमो हव्याय भोज्याय यज्ञनाथाय ते नमः।**
**नमो मेध्याय मुख्याय विशिष्टाय नमो नमः॥७८॥**

**हव्याय भोज्याय**—इदं पदद्वयं सविशेषणमेकं नाम। देवानुद्दिश्य दीयमानं हव्यम्, भोज्यं भोजनयोग्यमन्नादि। 'हव्याय' इत्युक्ते कृष्णलादिकं भोजनायोग्यमपि प्राप्तम्, 'भोज्याय' इत्युक्ते कुत्सितमशास्त्रीयं च प्राप्तम्; तन्निवृत्त्यर्थं पदद्वयम्। अनेन इहपरलोकसुखकरत्वाद् एतन्नाम्नाऽभिध्येयत्वं सूचितम्। 'शङ्कराय च मयस्कराय च' इति श्रुतिः। **यज्ञनाथाय**—यज्ञानां नाथो यज्ञनाथः, यज्ञैः पूजितः फलं ददातीति यावत्; 'फलमत उपपत्तेः' इति न्यायात्। ब्रह्माण्डपुराणे—

'शिवो हि यज्ञपुरुषो यज्ञकर्मफलप्रदः।
अनादृत्य शिवं यष्टुर्भूनिपातो भवत्यलम्॥'—इति।

'स वा एष महानज आत्माऽन्नादो वसुदानः' इति श्रुतिः। **मेध्याय**—परिशुद्धो मेध्यः। 'शुद्धमपापमविद्धम्' इति श्रुतिः। **मुख्याय**—श्रेष्ठो मुख्यः, अग्र्य इति यावत्। 'नमोऽग्र्याय च' इति श्रुतिः। **विशिष्टाय**—अतिशेते सर्वमित्यतो विशिष्टः।

यद्वा-विशेषेण प्रपञ्चापेक्षया नित्यतया शिष्टः, परिशिष्ट इति यावत् । 'विश्वतः परमं नित्यम्' इति श्रुतेः ॥ ७८ ॥

**अम्बिकापतये तुभ्यं महादान्ताय ते नमः ।**
**सत्यप्रियाय सत्याय प्रियनित्याय ते नमः ॥७९॥**

**अम्बिकापतये**—अम्बिकायाः पार्वत्याः पतिः प्रियः अम्बिकापतिः । 'हिरण्यपतयेऽम्बिकापतये' इति श्रुतिः । **महादान्ताय**—महान्तः ब्रह्मपुत्राः, दान्ताः निगृहीतेन्द्रियग्रामाः सनकादयः, शिष्यत्वेन यस्य स महादान्तः, सर्वविद्यागुरुत्वात् शिवस्य । महांश्चासौ दान्तश्च इति वा; पूर्णत्वात् महत्त्वं परमानन्दरूपत्वात् दान्तत्वं च बोध्यम् । **सत्यप्रियाय**—सत्यं ब्रह्म प्रियं यस्य सः सत्यप्रियः; बाह्यभावान् परित्यज्य स्वस्मिन् ब्रह्मभावे सर्वदा विद्यमानत्वात्, 'सर्वान् भावान् परित्यज्याऽऽत्मज्ञानेन योगैश्वर्येण महति महीयते' इति श्रुतेः । यद्वा सत्यशब्देन सत्यवचनमुच्यते, तद्धर्मत्वेन प्रियं यस्य स सत्यप्रियः; 'सत्यं वद, धर्मं चर' 'सत्येन लभ्यस्तपसा ह्येष आत्मा' 'सत्यमेव जयते नानृतम्' 'सत्यमिति सत्यवचा राथीतरः' इति सत्यत्वेनानुशिष्टत्वात् । **सत्याय**—कालत्रयाबाध्यं सत्यम् । 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतिः । **प्रियनित्याय**—प्रियश्चासौ नित्यश्च प्रियनित्यः । आनन्दरूपत्वात् प्रियः, नाशरहितत्वान्नित्यः । 'आनन्दो ब्रह्मेति व्यजानात्' इति श्रुतिः ॥ ७८ ॥

**नित्यतृप्ताय वेदित्रे मृदुहस्ताय ते नमः ।**
**अर्धनारीश्वरायाऽथ कुठारायुधपाणये ॥ ८० ॥**

**नित्यतृप्ताय**—सदातृप्तो नित्यतृप्तः । लोके विषयलाभादिना तत्काल एव तृप्तिः, अयं तु परशिवो निर्मृष्टनिखिलशोकमोहादिपरमानन्दरूपत्वात् नित्यतृप्तः । **वेदित्रे**—सामान्यतो विशे-

एतश्च सर्वं वेत्तीति वेदिता। 'यः सर्वज्ञः स सर्ववित्' इति श्रुतिः। मृदुहस्ताय—ईषत्प्रयत्नसाध्यस्वल्पदातुः अतिप्रयत्नसाध्यमहद्द्रव्यदातृत्वात् मृदुहस्तः। तदुक्तं शिवगीतायाम्—

'दलं किञ्चित्समादाय चुलुकं जलमेव वा।
यो दत्ते नियमेनाऽसौ तस्मै दत्ते जगत्त्रयम्॥'—इति।

अतिसुलभ उद्धरणपण्डिते शिवे मोमुह्यमानः प्राणिसमूहः संसारकूपे पतितो वर्तते इति अतिकरुणया प्रवृत्तमिदं नाम। तदुक्तमभियुक्तैः—

'अर्कद्रोणप्रभृतिकुसुमैरर्चनं ते विधेयं
प्राप्या तेन स्मरहर फलं मोक्षसाम्राज्यलक्ष्मीः।
एतज्जानन्नपि शिव शिव व्यर्थयन् कालमात्म-
न्नाऽऽत्मद्रोही करणविवशो भूयसाऽधः पतामि॥'—इति।

'तमीशानं वरदं देवम्' इति श्रुतिः। अर्धनारीश्वराय—नार्या अर्धम् अर्धनारी, अर्धनारीमिलित ईश्वरः अर्धनारीश्वरः, नार्यंशोऽर्धमीश्वरांशश्चार्धमित्यर्थः। तदुक्तम् आचार्यैः—

'प्रवालप्रवाहप्रभाशोणमर्धं
मरुत्वन्मणिश्रीमहःश्याममर्धम्।
गुणस्यूतमेकं वपुः शैवमन्तः
स्मरामि स्मरापत्तिसम्पत्तिहेतुम्॥'—इति।

'पुरुषं कृष्णपिङ्गलम्' इति श्रुतिः। कुठारायुधपाणये—कुठारनामकमायुधं पाणौ यस्य स कुठारायुधपाणिः। 'नमः स्वायुधाय च' इति श्रुतिः॥८०॥

**वराहभेदिने तुभ्यं नमः कङ्कालधारिणे।**
**महार्थाय सुसत्त्वाय कीर्तिस्तम्भाय ते नमः॥८१॥**

वराहभेदिने—वराहं भिनत्तीति वराहभेदी। तदुक्तं लैङ्गे। नृसिंहमुद्धतं प्रति वीरभद्रः—

'अद्यापि तव निक्षिप्तं कपालं कूर्मरूपिणः ।
शिवहारलतामध्ये मुग्ध कस्मान्न बुद्ध्यसे ॥
विस्मृतं किं तदंशेन दंष्ट्रोत्पाटनपीडितः ।
वाराहविग्रहस्तेऽद्य साक्रोशं तारकारिणा ॥'—इति ।

श्रुतिरुक्ता । कङ्कालधारिणे—कङ्कालः शरीरास्थि,—'स्याच्छरीरास्थ्नि कङ्कालः' इति अमरः,—तस्य धारयिता कङ्कालधारी । अनेन परमेश्वरस्य नित्यत्वं ब्रह्मादीनामनित्यत्वं च सूचितम् । 'नित्यो नित्यानाम्' इति श्रुतिः । महार्थाय—महांश्चासौ अर्थश्च महार्थः, परमपुरुषार्थमोक्षस्वरूपं ब्रह्म । 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतिः । सुसत्त्वाय—शोभनं सत्त्वं सत्त्वरूपो गुणोऽधिष्ठेयत्वेन यस्य स सुसत्त्वः, 'महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः' इति श्रुतेः । यद्वा शोभनं सत्त्वं ज्ञान-वैराग्यैश्वर्यादिकं यस्य स तथेति, 'एष सर्वेश्वरः एष सर्वज्ञः' इति श्रुतेः । कीर्तिस्तम्भाय—'एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः, एष लोकपाल लोकाधिपतिरेष एष लोकेशः', 'तमीशानं परमं देवमीड्यम्', 'जेतारमपराजितम्' इत्ये-वमादिश्रुतिप्रथिता कीर्तिः ख्यातिरेव स्तम्भः—न तु पाषाणादि-मयो यस्य स कीर्तिस्तम्भः ॥८१॥

**नमः कृतागमायाऽथ वेदान्तपठिताय च ।**
**अश्रोत्राय श्रुतिमते बहुश्रुतिधराय च ॥८२॥**

कृतागमाय—कृता रचिता मुखपञ्चकाद् विनिर्गता आगमा प्रणवादिमहामन्त्राः ऋगादिसर्ववेदाः प्रोद्गीताद्यष्टाविंशतिसंख्याका

आगमाश्च यस्य स कृतागमः । परमेश्वरस्य ऊर्ध्वमुखात् प्रणवादिमहामन्त्राः प्रोद्गीतललितवद्धसन्तालकवर्गपारमेश्वरकिरणवातुलाख्याष्टागमाश्च ; पूर्वमुखात् सामवेदः रौरवविमलमुकुटचन्द्रज्ञानबिम्बाख्यपञ्चागमाश्च; दक्षिणमुखात् अथर्ववेदः, विजयनिःश्वासस्वायम्भुवानलवीराख्यपञ्चागमाश्च; उत्तरमुखात् यजुर्वेदः, दीप्तसूक्ष्मसहस्रांशुमत्सुप्रभेदाख्यपञ्चागमाश्च; पश्चिमवदनात् ऋग्वेदः, कामिक······कारणाजिताख्यपञ्चागमाश्च विनिर्गताः—इति शिवागमे प्रसिद्धम् । 'अस्य महतो भूतस्य निश्वसितमेतत् यदृग्वेदः' इत्यादिश्रुतिः । वेदान्तपठिताय—'विश्वाधिको रुद्रो महर्षिः' 'तमीश्वराणां परमं महेश्वरम्' 'शिव एको ध्येयः शिवङ्करः' 'शिवमद्वैतं चतुर्थं मन्यन्ते' 'प्रपञ्चोपशमः शिवोऽद्वैतः' इत्यादिवेदान्तेषु पठितः । अश्रोत्राय—श्रोत्रेन्द्रियरहितोऽश्रोत्रः । 'अचक्षुष्कमश्रोत्रम्' इति श्रुतिः । श्रुतिमते—श्रोत्रेन्द्रियजन्या वृत्तिः श्रुतिः, सा ज्ञेयत्वेन अस्यास्तीति श्रुतिमान् । 'एष हि द्रष्टा श्रोता' इति श्रुतिः । बहुश्रुतिधराय—बह्व्यः श्रुतयः श्रोत्राणि सर्वप्राणिसम्बन्धीनि धरतीति बहुश्रुतिधरः । 'सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति' इति श्रुतिः ॥८२॥

अघ्राणाय नमस्तुभ्यं गन्धावघ्राणकारिणे ।
पादहीनाय बोद्ध्रे च सर्वत्रगतये नमः ॥८३॥

अघ्राणाय—घ्राणेन्द्रियरहितोऽघ्राणः । 'सर्वेन्द्रियविवर्जितम्' इति श्रुतिः । गन्धावघ्राणकारिणे—गन्धस्य अवघ्राणम्—वायुसहितेन घ्राणेन्द्रियेण तत्करोतीति गन्धावघ्राणकारी । 'अथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय

घ्राणम्' इति श्रुतिः । पादहीनाय—पादरहितः पादहीनः । 'अपाणिपादः' इति श्रुतिः । बोढ्रे—वहतीति वोढा, सर्वाधारादिकल्पनायाः—रज्जुरिव सकलप्रपञ्चकल्पनाया अधिष्ठानभूतः । 'आधारमानन्दमखण्डबोधम्' इति श्रुतिः । सर्वत्रगतये—सर्वत्र सर्वानुगतिर्ज्ञानं यस्य स सर्वत्रगतिः, सर्वज्ञ इति यावत् । सर्वत्रगतिः गमनं यस्येति वा सर्वगत इत्यर्थः । 'आकाशवत् सर्वगतश्च नित्यः' इति श्रुतिः ॥८३॥

**त्र्यक्षाय जननेत्राय नमस्तुभ्यं चिदात्मने ।**
**रसज्ञाय नमस्तुभ्यं रसनारहिताय च ॥८४॥**

त्र्यक्षाय—विगतानि अक्षाणि इन्द्रियाणि यस्य स त्र्यक्षः । 'अनिन्द्रियमविषयम्' इति श्रुतिः । जननेत्राय—जनानां सम्बन्धीनि नेत्राणि यस्य स जननेत्रः, सर्वात्मकत्वात् । 'विश्वतश्चक्षुरुत विश्वतो मुखः' इति श्रुतिः । चिदात्मने—चित् चैतन्यम् आत्मा स्वरूपं यस्य स चिदात्मा । 'चिदेकरसो ह्ययमात्मा चिद्रूप एव' इति श्रुतिः । रसज्ञाय—रसान् जानातीति रसज्ञः, मधुरादिरसविषयवृत्तिप्रतिफलितचैतन्यरूप इति यावत् । 'न हि रसयितू रसयतेर्विपरिलोपो विद्यते' इति श्रुतिः । रसनारहिताय—रसनेन्द्रियरहितो रसनारहितः । 'अनिन्द्रियमविषयम्' इति श्रुतिः ॥८४॥

**अमूर्तायाऽथ मूर्ताय सदसस्पतये नमः ।**
**जितेन्द्रियाय तथ्याय परंज्योतिःस्वरूपिणे ॥८५॥**

अमूर्ताय—सर्वमूर्तिवर्जितोऽमूर्तः । 'दिव्यो ह्यमूर्तः' इति । मूर्ताय—पारमार्थिकसर्वमूर्तिरहितत्वेऽपि व्यावहारिक-

सर्वमूर्त्यात्मकत्वात् मूर्तः । 'सर्वाननशिरोग्रीवः' इति श्रुतिः । उमासहायादिमूर्त्यात्मकः । सदसस्पतये—सीदन्त्यस्मिन् सर्वे विकारा इति सदः प्रयसीस्थानीया सर्वविकारहेतुः परा प्रकृतिः, तस्याः पतिः पाता, नित्यं संश्लिष्टो भर्ता परमेश्वर इत्यर्थः । 'सदसस्पतिमद्भुतम्' इति श्रुतिः । जितेन्द्रियाय—जितानि निगृहीतानि इन्द्रियाणि येन स जितेन्द्रियः, परमानन्दरूपत्वात्, 'स्वरूपानन्दे एव विषयसुखानि परित्यज्य सर्वदा तिष्ठामि' इत्यर्धोन्मीलितनासाग्रन्यस्तलोचनतया चिन्मुद्राभिनयेन अतिविरक्तसनकादिशिष्यपरिवृतत्वेन च उपदेशप्रदर्शकत्वाच्च। 'या ते रुद्र शिवा तनूः' इति श्रुतिः । तथ्याय—। परंज्योतिःस्वरूपिणे—अपरिच्छिन्नप्रकाशरूपी परंज्योतिःस्वरूपी । 'परं ज्योतिरुपसंपद्य' इति श्रुतिः ॥८५॥

> नमस्ते सर्वमर्त्यानामादिकर्त्रे भुवन्तये ।
> सर्गस्थितिविनाशानां कर्त्रे ते प्रेरकाय च ॥८६॥

सर्वमर्त्यानामादिकर्त्रे—सर्वमर्त्यानां नाशयोग्यानां सर्वकार्याणामिति यावत्, आदिकर्ता मूलकारणभूतः सर्वजगदुत्पादक इति यावत् । 'सोऽकामयत' इति प्रस्तुत्य 'इदं सर्वमसृजत' इति श्रुतिः । भुवन्तये—भुवं तनोतीति भुवन्तिः । भवति विश्वमस्मिन्निति वा । 'भुवन्तये वारिवस्कृताय' इति श्रुतिः । सर्गस्थितिविनाशानां कर्त्रे—सृष्टिस्थितिलयानां कर्ता । 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतिः । प्रेरकाय—सर्वप्रवर्तकः प्रेरकः । तदुक्तं कौर्मे—

> 'विधूय मोहकलिलं यया पश्यति तत्पदम् ।
> सा विद्याऽपि महेशस्य नियोगवशवर्तिनी ॥

बहुनाऽत्र किमुक्तेन मम शक्त्यात्मकं जगत् ।
मयैव प्रेर्यते कृत्स्नं मय्येव प्रलयं व्रजेत् ॥'—इति ।

'पृथगात्मानं प्रेरितारं च मत्वा' इति श्रुतिः ॥८६॥

**नमोऽन्तर्यामिणे सर्वहृदिस्थाय नमो नमः ।**
**चक्रभ्रमणकर्त्रे ते पुराणाय नमो नमः ॥८७॥**

**अन्तर्यामिणे**—अन्तः प्रविश्य सर्वेषां देहिनां यमयिताऽन्तर्यामी । आदित्यपुराणे—

'अन्तर्यामी स विश्वेशः सर्वेषामेव देहिनाम् ।
भोक्ता हि सर्वयज्ञानां शङ्करः परमार्थतः ॥'

**सर्वहृदिस्थाय**—सर्वेषां हृदि तिष्ठतीति सर्वहृदिस्थः । 'सर्वभूतगुहाशयः' इति श्रुतिः । **चक्रभ्रमणकर्त्रे**—संसारचक्रभ्रमणस्य जन्मजरामरणादुःखमोहपौनःपुन्यस्य कर्ता तत्कर्मानुरोधेन उत्पादयिता । शैवे—

'येनेदं भ्राम्यते चक्रं संसाराख्यं चराचरम् ।
तेनाऽऽदौ क्रियते विश्वं तेन संह्रियते पुनः ॥
न तस्य नियमः कश्चित् तेन सर्वं नियम्यते ।'—इति ।

पाद्मे—

'मृतिबीजं भवेज्जन्म जन्मबीजं भवेन्मृतिः ।
घटीयन्त्रवदाश्रान्तो बभ्रमीत्यनिशं नरः ॥'—इति ।

'सर्वाजीवे सर्वसंस्थे बृहन्ते तस्मिन् हंसो भ्राम्यते ब्रह्मचक्रे । पृथगात्मानं प्रेरितारं च मत्वा' इति श्रुतिः । अस्यायमर्थः—सर्वेषां जीवनमस्मिन्निति सर्वाजीवे, सर्वेषां संस्था समाप्तिः प्रलयोऽस्मिन्निति सर्वसंस्थे, बृहन्ते पूर्णे तस्मिन् , हंसो जीवः हन्ति गच्छति अध्वानमिति हंसः, भ्राम्यते अनात्मभूतदेहादिमात्म-

भूतं मन्यमानः सुरनरतिर्यगादिभेदभिन्ननानायोनिषु ब्रह्मचक्रे कार्यकारणात्मके एवं स भ्राम्यमाणः परिवर्तत इत्यर्थः। को हेतुर्नानायोनिषु परिवर्तन इति? तत्राऽऽह—पृथगात्मानं प्रेरितारं मत्वेति। आत्मानं जीवात्मानं प्रेरितारं चेश्वरं पृथग् भेदेन मत्वा ज्ञात्वा अन्योऽसौ, अन्योऽहमस्मि इति जीवेश्वरयोर्भेद-दर्शनेन संसारे परिवर्तत इत्यर्थ इति। पुराणाय—पुराणः पुरातन इति यावत्। तदुक्तम्—

'स एव शुद्धः स च बन्धकर्ता स एव पाशः पशवः स एव।
स एव सर्वं न च तस्य वेत्ता तमाहुराद्यं पुरुषं पुराणम्॥'-इति।
'अजो नित्यः शाश्वतोऽयं पुराणः' इति श्रुतिः॥८७॥

**वामदक्षिणहस्तोत्थलोकेशहरिशालिने।**
**नमः सकलकल्याणदायिने प्रसवाय च॥८८॥**

वामदक्षिणहस्तोत्थलोकेशहरिशालिने—वामदक्षिण-हस्ताभ्यामुत्थितौ लोकेशहरी ब्रह्मविष्णू शीलमस्य स वामदक्षिण-हस्तोत्थलोकेशहरिशाली। लैङ्गे शिवं प्रति ब्रह्मा—'स्रष्टा त्वं सर्वलोकानाम्' इति प्रस्तुत्य—

'तत्राऽहं दक्षिणाद्धस्तात् पूर्वं सर्वसनातन।
वामहस्तान्महाबाहो देवो नारायणः प्रभुः॥'-इति।
'दक्षिणाङ्गभवोऽहं ते हरिर्वामाङ्गसम्भवः।
ततो दक्षिणहस्तोऽहं वामहस्तो हरिस्तव॥'-इति॥

'ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते' इति प्रस्तुत्य, 'कारणं तु ध्येयः सर्वैश्वर्यसम्पन्नः सर्वेश्वरः शम्भुः' इति श्रुतिः। सकल-कल्याणदायिने—सकलमङ्गलप्रदानशीलः सकलकल्याणदायी। तदुक्तम्—

'अशुभानि निराचष्टे तनोति शुभसन्ततिम् ।
स्मृतिमात्रेण यत्पुंसां ब्रह्म तन्मङ्गलं विदुः ॥'--इति ।

'शिवो नः सुमना भव' इति श्रुतिः । प्रसवाय—प्रकर्षेण सूयते जगदुत्पाद्यते (येन) इति प्रसवः । 'सवितारं नृचक्षसम्' इति श्रुतिः ॥८८॥

**स्वभावोदारधीराय सूत्रकाराय ते नमः ।**
**विषयार्णवमग्नानां समुद्धरणसेतवे ॥८९॥**

**स्वभावोदारधीराय**—स्वभाव एवोदारः सर्वाभीष्टफलप्रदः, धीरः सर्वज्ञश्च यः स स्वभावोदारधीरः । दातृत्वं सर्वज्ञत्वं च परमेश्वरस्यानादि सिद्धमित्यर्थः । यद्वा, स्वभावः प्रत्यगात्मा, उदारो महान् पूर्णः, धीरः ज्ञप्तिरूपः । अनेन सर्वभूतान्तरात्मा सर्वव्यापी सर्वसाक्षी परशिव उक्तो भवति । 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा, साक्षी' इति श्रुतिः । **सूत्रकाराय**—सूचयन्ति अर्थान् इति सूत्राणि । तदुक्तम्—

'लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च ।
सारवद्विश्वभूतानि सूत्राण्याहुर्मनीषिणः ॥'-इति ।

तानि तानि सूत्राणि कर्तुं पाणिनि-व्यास-जैमिनि-कपिल-पतञ्जलि-गौतम-कणादरूपेण स्थित्वा निर्मातुं शीलमस्यास्तीति सूत्रकारः । तद्रूपत्वं च परशिवस्य सर्वविद्याकर्तृत्वात् । यद्वा, सूत्रशब्देन सूत्रात्मा हिरण्यगर्भ उच्यते, 'यो ब्रह्माणं विदधाति पूर्वम्' इति श्रुतेः ।

**विषयार्णवमग्नानां समुद्धरणसेतवे**—विषयशब्देन विषयानुभवरूपः संसार उच्यते । स एव अर्णवः समुद्रः विषयार्णवस्तस्मिन् संसारसमुद्रेऽविद्याकामकर्मप्रभवदुःखोदके, तीव्ररोग-

जरामृत्युमहाग्राहे अनादावनन्तपारे निरालम्बे विषयेन्द्रियजनिताखिलक्षणविभ्रमे, पञ्चेन्द्रियार्थमारुतविक्षोभोत्थितानर्थशतमहोर्मिणि, महापातकाद्यनेकनिरयगतगर्भाद्यनेकनिरयगतहाहेत्यादिकूजिताक्रोशनोद्भूतमहारवे मग्नानां जन्तूनां समुद्धरणे सेतुरिव सेतुः। यथा तीव्रबलवायुना विचालितेन कल्लोलाकुलितेन समुद्रपाषाणादिनाऽभित्रस्तजनान्‌ मग्नांस्तात्कालिकपाथेयसहितेन उडुपेन तीरं प्रापयति कश्चित्‌, एवं परमेश्वरोऽपि संसारार्णवमग्नान्‌ सत्यार्जवदयादानाहिंसाशमदमधृत्याद्यात्मगुणपाथेयपूर्णज्ञानोडुपेन सत्संयोगसर्वत्यागमार्गेण सेतुशब्दोपलक्षितमोक्षतीरं प्रापयतीति सेतुरुच्यते। 'त्रिरुन्नतं स्थाप्य समं शरीरं हृदीन्द्रियाणि मनसा सन्निवेश्य। ब्रह्मोडुपेन प्रतरेत विद्वान्‌ स्रोतांसि सर्वाणि भयावहानि॥' इति श्रुतिः॥ ८९॥

अस्नेहस्नेहरूपाय वार्तातिक्रान्तवर्तिने।
यत्र सर्वं यतः सर्वं सर्वं यत्र नमो नमः॥९०॥

अस्नेहस्नेहरूपाय—न विद्यते विषयेषु स्नेहः, किन्तु परमात्मनि, यस्य सः अस्नेहः तस्मिन्‌ स्नेहः प्रीत्यतिशयस्तद्धृदय एव सर्वदाऽवस्थानम्‌ अभिव्यक्तिरूपं यस्य सः—अस्नेहस्नेहरूपः। 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्‌' इति श्रुतिः। वार्तातिक्रान्तवर्तिने—वार्ताः शब्दाः, तान्‌ प्रति अतिक्रान्ततया वर्तितुं शीलमस्यास्तीति वार्तातिक्रान्तवर्ती जातिगुणक्रियादिरूपनिमित्ताभावात्‌ शब्दैर्वाचनिकवृत्त्या अप्रतिपाद्य इत्यर्थः। 'यतो वाचो निवर्तन्ते' इति श्रुतिः। यत्र सर्वं यतः सर्वं सर्वं यत्र—यतः ईश्वरात्‌ सर्वमुत्पद्यते, उत्पन्नं तु यत्र सर्वं जगद्वर्तते, पुनरपि सर्वं

जगद्यत्र ईश्वरे लीयते, तस्मै इति शेषः। अनेन जगज्जन्मस्थितिलयकारणत्वमीश्वरे उक्तं भवति।

'यस्माज्जातं जगत्सर्वं यस्मिन्नेव प्रलीयते।
येनेदं धार्यते चैव तस्मै ज्ञानात्मने नमः॥'—इति।

'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतिः ॥९०॥

**नमो महार्णवायाऽथ भास्कराय नमो नमः।**
**भक्तिगम्याय भक्तानां सुलभाय नमो नमः॥९१॥**

महार्णवाय—महार्णववद् अतिगहन इति महार्णवः; यथा महार्णवो दुरवगाह्यः, एवं परशिवोऽपि भूतैरेतत्संख्याकगुणक्रियादिविशिष्ट इति ज्ञातुमशक्यत्वाद् दुरवगाह्यः; अचिन्त्यशक्तिमत्त्वात् तस्य, 'अनन्तशक्तिश्च विभोर्विधिज्ञाः' इति। अपाणिपादोऽहमचिन्त्यशक्तिः' इति च इति श्रुतिः। भास्कराय—भासं करोतीति भास्करः, 'तस्य भासा सर्वमिदं विभाति' इति श्रुतेः। भक्तिगम्याय—भक्तिर्नाम परमेश्वरे प्रेमातिशयरूपो भावविशेषः। अनेकजन्मकृतसुकृतपरिपाकस्तदपदानश्रवणस्मरणादौ मनोवाङ्नेत्रगात्रेषु हर्षगद्गदस्वरानन्दवाक्यरोमाञ्चकञ्चुकादिसम्पादकः परमेश्वरप्रणिधानस्तोत्रमन्त्रादिजपालयादिदर्शनलिङ्गादिपूजायां चानुमोदनम्।

'स्वयमभ्यर्चनं भक्त्या मदर्थोपाङ्गचेष्टनम्।
मत्कथाश्रवणे भक्तिः स्वरनेत्राङ्गविक्रिया॥
ममाऽनुस्मरणे नित्यं यस्य मां सोपजीवति।'—इति।

'भावग्राह्यमनीडाख्यम्' इति श्रुतिः। भक्तानां सुलभाय—भक्तानां शिवपूजादिपराणां सुलभः शीघ्रमनुग्राहकः, तदर्थमेव शिवमूर्तिग्रहणम् ॥९१॥

दुष्प्रधर्षाय दुष्टानां विजयाय विवेकिनाम् ।
अतर्किताय लोकाय सुलोकाय नमो नमः ॥९२॥

दुष्टानां दुष्प्रधर्षाय—दुष्टानां कामक्रोधादियुक्तानां वर्णाश्रमाचाररहितानां दुष्प्रधर्षः दुष्प्रापः, प्रत्युत तेषां निग्राहकः, तदर्थमेव उग्ररूपधारणम् । 'तस्यैते तनुवौ घोराऽन्या शिवाऽन्या' इति नामद्वये श्रुतिः । विवेकिनां विजयाय—विवेकिनां साधनचतुष्टयसम्पत्तिपुरस्सरं मनननिदिध्यासनोपकृतश्रवणजन्यप्रत्यग्ब्रह्मैक्यज्ञानवतां विजयो विशेषेण जयः, तेषां मूलाविद्यासहितकामक्रोधलोभमोहमदमात्सर्यादिनिरासरूपमूर्तिस्वभावत्वात् । 'महस्त्वान्मानत्वान्मुक्तत्वात्' इति श्रुतिः । अतर्किताय—तर्कः अनुमानम् , तेन नावगतोऽतर्कितः, अननुमेय इत्यर्थः । 'व्यापको लिङ्ग एव च' इति श्रुतिः । लोकाय—लोक्यते अनुभूयते स्वात्मत्वेन योगिभिरिति लोकः । 'तस्य लोकः स उ लोक एव' इति श्रुतिः । सुलोकाय—शोभनाः सर्वोत्तमाः लोकाः यस्य स सुलोकः । 'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषु लोकेषु' इति श्रुतिः ॥९२॥

पूरयित्रे विशेषाय कुशलाय शुभाय च ।
नमः कर्पूरदेहाय सर्पहाराय ते नमः ॥९३॥

पूरयित्रे—सर्वस्य जगतः पूरयिता, सर्वं जगदनेन पूर्णमित्यर्थः । 'तनेदं पुरुषेण सर्वम्' इति श्रुतिः । विशेषाय—विशेष्यत इति विशेषः, सर्वापेक्षया विलक्षणः अधिक इति यावत् । 'विश्वाधिको रुद्रः' इति श्रुतिः । कुशलाय—कु पापम् तस्मात् शलति गच्छति पृथक्त्वं प्राप्नोति इत्यर्थः । शुभाय—

शुभो मङ्गलस्वरूपः । 'शिव एको ध्येयः शिवङ्करः' इति श्रुतिः ।
कर्पूरदेहाय—कर्पूरवत् श्वेतो देहो यस्य स कर्पूरदेहः । —

'चारुस्मेराननसरसिजं चन्द्ररेखावतंसं
फुल्लन्मल्लीकुसुमकलिकादामसौभाग्यचोरम् ।
अन्तः पश्याम्यचलसुतया रत्नपीठे निषण्णं
लोकातीतं शिवद सततं रूपमप्राकृतं ते ॥'—इति ।

'नमो नीलग्रीवाय च शितिकण्ठाय च' इति श्रुतिः ।
सर्पहाराय—सर्पाः नागाः, ते हारा यस्य स सर्पहारः ।
अनेन नाम्ना परमेश्वरस्य दुर्जनान् प्रति भयङ्करा मूर्तिः सूचिता ।
तदुक्तं शैवे—

'उग्रैर्भुजङ्गैस्तत्सृष्टैः रुद्रः स्वाङ्गान्यभूषयत् ।'—इति ।
'दंष्ट्राकरालवदनं ज्वलज्ज्वलनमूर्धजम् ।
बिभ्राणं त्रिशिखं दीप्तं ध्यायेद्भुजगभूषणम् ॥'—इति ।
'तस्यैते तनुवौ घोराऽन्या' इति श्रुतिः ॥९२॥

**नमः संसारपाराय कमनीयाय ते नमः ।**
**वह्निदर्पविघाताय वायुदर्पविघातिने ॥९४॥**

संसारपाराय—संसारस्य अविद्यात्मकस्य पारः, अविद्या-तत्कार्यासंस्पृष्ट इत्यर्थः । 'नमः पाराय सुपाराय' इति श्रुतिः ।
कमनीयाय—शङ्करत्वात् कमनीयः । वह्निदर्पविघाताय—अग्निगर्वनिर्वापणो वह्निदर्पविघातः । तदुक्तं लैङ्गे पार्वत्याः स्वयंवरसमये—तत्र ब्रह्मविष्णुलोकपालादीनामागमनानन्तरं देव्या उत्सङ्गे शिशुवेषधरं शिवं प्रति निग्रहार्थं कुपिताः सन्तः स्वं स्वमायुधं प्रेरयितुमुद्युक्ताः देवाः । तत्र वह्निः शक्तिं तथा क्षेप्तुं

न शशाक तदा स्थित इति । ब्रह्मगीतायाम् अपि—यक्षरूपेणाऽऽविर्भूतं परमेश्वरं ज्ञातुमागतोऽग्निः । तं प्रति यक्षः—

'यक्षरूपो महादेवः कोऽसीत्याहाऽनलं प्रति ।
अग्निर्वा अहमस्मीति यत्तं प्रत्याह सोऽपि च ॥
सोऽपि प्रोवाच भगवांस्तव किं वीर्यमित्यपि ।
इदं सर्वं दहेयं यदिदं भूम्यां व्यवस्थितम् ॥
इत्याहाऽग्निस्तृणं तस्मै निधाय परमेश्वरः ।
एतद्दहेति भगवान् स्मयमानोऽभ्यभाषत ॥
अग्निः सर्वजवेनैव तद्दग्धुं तृणमास्तिकाः ।
अशक्तो लज्जया युक्तो भीतोऽगच्छत्सुरान्प्रति ॥'—इति ।

'जातवेद एतद्विजानीहि किमेतद्यक्षम्' इत्यारभ्य 'तन्न शशाक दग्धुम्' इत्यन्ता श्रुतिः । वायुदर्पविघातिने—पवनाभिमानभङ्गकरो वायुदर्पविघाती । लैङ्गे शिशुवेषधरं प्रति—

'वरुणो नागपाशं च स्वस्य यष्टिं समीरणः ।'

क्षेप्तुं न शशाकेत्यनुषङ्गः । तथा ब्रह्मगीतायाम्—

'तच्छ्रुत्वा वायुमाहूय विजानीहीति चाब्रुवन् ।
सोऽपि गत्वा तथा तेन यक्षरूपेण शम्भुना ॥
भृशं प्रतिहतो भूत्वा तदागच्छत्सुरान् प्रति ।'—इति ।

'वायवेतद्विजानीहि' इत्यारभ्य 'तन्न शशाकादातुम्' इत्यन्ता श्रुतिः ॥९४॥

**जरातिगाय वीर्याय नमस्ते विश्वव्यापिने ।**
**सूर्यकोटिप्रकाशाय निष्क्रियाय नमो नमः ॥९५॥**

जरातिगाय—जरासम्बन्धरहितो जरातिगः । उपलक्षणमेतत्

अशनायादीनाम् । 'योऽशनायापिपासे शोकं मोहं जरां मृत्यु-मत्येति' इति श्रुतिः । वीर्याय—पराभिभवनसामर्थ्यं वीर्यम् , तेन तद्वान् लक्ष्यते । वीर्यपदम् ऐश्वर्यादीनामुपलक्षणम् ।

'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥'—इति ।

## ॥ इति पञ्चमशतकभाष्यं सम्पूर्णम् ॥

———

## ॥ अथ षष्ठशतकभाष्यम् ॥

विश्वव्यापिने—विश्वस्य सर्वप्रपञ्चस्य व्यापी व्यापकः । 'सर्वव्यापी सर्वभूतान्तरात्मा' इति श्रुतिः । सूर्यकोटि-प्रकाशाय—सूर्यकोटीनां प्रकाश इव प्रकाशो यस्य स तथा । इयं चाभूतोपमा, अधिकदीप्तिमानित्यर्थः । उक्तं च शिवगीतायां वृषभारूढं प्रति—

'तत्राऽऽसीनं महादेवं शुद्धस्फटिकविग्रहम् ।
कोटिसूर्यप्रतीकाशं कोटिशीतांशुशीतलम् ॥
व्याघ्रचर्माम्बरधरं नागयज्ञोपवीतिनम् ।
सर्वालङ्कारसंयुक्तं विद्युत्पिङ्गजटाधरम् ॥
नीलकण्ठं व्याघ्रचर्मोत्तरीयं चन्द्रशेखरम् ।
नानाविधायुधोद्भासिदशबाहुं त्रिलोचनम् ॥
युवानं पुरुषश्रेष्ठं सच्चिदानन्दविग्रहम् ॥'

—इति श्रुतिः । निष्क्रियाय—'निष्क्रियं निर्गुणं शान्तं निरपेक्षं निरञ्जनम्' इति श्रुतिः ॥९५॥

चन्द्रकोटिसुशीताय विमलाय नमो नमः ।
नमो गूढस्वरूपाय दिशां पत्ये पराय च ॥९६॥

चन्द्रकोटिसुशीताय—शोभनः शीतः सुशीतः, चन्द्रकोटिरिव सुशीतः चन्द्रकोटिसुशीतः । श्रुतिरुक्ता । विमलाय—अविद्यादिमलरहितो विमलः । 'नाऽविद्याऽनुभवात्मनि स्वप्रकाशे' इति श्रुतिः । गूढस्वरूपाय—अनभिव्यक्तस्वभावो गूढस्वरूपः । 'एको देवः सर्वभूतेषु गूढः' इति श्रुतिः । दिशां पत्ये—दिशां प्राच्यादीनां पतिः, लोकपालात्मको रुद्र इत्यर्थः । 'दिशां च पतये नमः' इति श्रुतिः । पराय—॥९६॥

नमः सत्यप्रतिज्ञाय समस्ताय समाधये ।
एकरूपाय शून्याय विश्वनाभिहृदाय च ॥९७॥

सत्यप्रतिज्ञाय—सत्या अबाधिता प्रतिज्ञा—आकाशादिक्रमेण ब्रह्माण्डोत्पादनम् , तत्र चतुर्दश लोकाः, तेषु चतुर्दशविधग्रामः चेतनात्मकः, गिरि-नदी-समुद्रादिकम् , वर्णाश्रमादिव्यवस्था, दुष्टनिग्रहः, शिष्टपालनं चैतत्सर्वं तत्तत्कर्मानुसारेण नियमेन करोमीत्येतादृशी प्रतिज्ञा—यस्य स सत्यप्रतिज्ञः । 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः', 'सोऽकामयत बहु स्यां प्रजायेय' इत्यवेमादिका श्रुतिः । समस्ताय—सर्वस्वरूपः समस्तः । 'सर्वो वै रुद्रः' इति श्रुतिः । समाधये—'अहं ब्रह्मास्मि' इत्येतद्बुद्धिसमाधानरूपः प्रत्यगभिन्नः परमात्मा समाधिः । 'सन्धिं समाधावात्मन्याचरेत्' इति श्रुतिः । एकरूपाय—एकमेव रूपं वास्तवं यस्य स एकरूपः । तदुक्तं कौर्मे—

'नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः ।

एकः स भिद्यते शक्त्या मायया न स्वभावतः ॥'—इति॥

तथा शैवे—

'एक एवेति यो रुद्रः सर्ववेदेषु गीयते ।
यस्य प्रसादलेशेन मुक्तिर्भवति शाङ्करी ॥'—इति ।

'स एको य एकः स रुद्रः' इति श्रुतिः । शून्याय—मायया तत्कार्यरूपसर्वप्रपञ्चेन च रहितः शून्यः । तदुक्तं वासिष्ठे—

'शून्यं तत्प्रकृतिर्माया ब्रह्म यज्ज्ञानमित्यपि ।
शिवः पुरुष ईशानो नित्यमात्मेति कथ्यते ॥'- इति ।

तथा पाद्मे—

'यं दृष्ट्वा योगिनो नित्यं संतृप्ताः स्वात्मसंस्थितम् ।
अक्षरं वेद सच्छून्यं परमात्मानमीश्वरम् ॥'- इति ।

'स्वप्रकाशमानन्दघनशून्यमभवत्' इति श्रुतिः । विश्वनाभिह्रदाय—विश्वस्य सर्वप्रपञ्चस्य नाभिः नाभिस्थानीयः—यथा चक्रस्य रथावयवस्य नेम्यात्मकस्य नाभिर्यस्य द्वारेऽक्षः संलग्नो भवति, तादृशद्वारविशिष्टः काष्ठविशेषो नाभिरित्युच्यते । तस्मिन्नेम्याधारभूता अरा अर्पिताः । नेमिशब्देन वलयाकारविशिष्टो भूमौ परिवर्तमानः काष्ठविशेष उच्यते । अराः तिर्यग्भूताः शलाकाकाष्ठविशेषा उच्यन्ते । अरेषु नेमिरर्पिता नाभावरा अर्पिताः, 'तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिताः' इति श्रुतेः । यथा नेम्याधारारान् प्रत्याधारत्वं नाभेः, एवं सर्वस्यापि प्रपञ्चस्य आधारत्वान्नाभिरित्युच्यते परमेश्वरः । तथा च विश्वनाभिः स चासौ ह्रदश्च स तथा बहुजलात्मकः अशोष्यः दुरवगाह्यः ह्रद इत्यर्थः । तेन समुद्रो लक्ष्यते । यथा नदीनां समुद्र आधारः, एवं सर्वस्यापि नदीस्थानीयस्य प्रपञ्चस्याऽऽ-

धारत्वात् ह्रद इव ह्रदः । ननु 'विश्वनाभिः' इत्येवालम्, 'ह्रदः' इत्यधिकमिति चेत्; न; विशेषप्रदर्शनार्थत्वात्। तस्य उत्पत्ति-स्थितिकालीनप्रपञ्चाधारत्वमाधारनाभिवत्। आधेयरूपनेम्याधारा अरा अपि प्रतीयन्ते, आधारभूतनाभिरपि प्रतीयते। तदुक्तम-भियुक्तैः—

'अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥'—इति।

'सद्धीदं सर्वं सत् सदिति चिद्धीदं सर्वं काशते प्रकाशते चेति' श्रुतिरपि। लयकालीनप्रपञ्चाधारत्वं ह्रदशब्दलक्ष्यम्, समुद्रवत् कार्यरूपं जगन्न प्रतीयते।

'ततस्तिमितगम्भीरं तेजोऽनस्तमितं ततम्।
अनाख्यमनभिव्यक्तं सत्किञ्चिदवशिष्यते ॥'

—इति वासिष्ठे। श्रुत्यापि—'यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः' इति। प्रकृते श्रुतिस्तु—'तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणे अर्पिताः' इति ॥९७॥

**सर्वोत्तमाय कूल्याय प्राणिनां सुहृदे नमः।**
**अन्नानां पतये चाथ चिन्मात्राय नमो नमः॥९८॥**

सर्वोत्तमाय—सर्वेषु देवादिषु उत्तमः। 'स उत्तमः पुरुषः' इति श्रुतिः। कूल्याय—कूले कावेर्यादिनदीतीरे भवः—तत्र लिङ्गस्वरूपेण विद्यमानः—कूल्यः। 'नमस्तीर्थ्याय च कूल्याय च' इति श्रुतिः। प्राणिनां सुहृदे—'अहरहः सन्ध्यामुपासीत', 'यावज्जीवमग्निहोत्रं जुहुयात्', 'न कलञ्जं भक्षयेत्', 'न सुरां पिबेत्', 'न परदारान् गच्छेत्' इत्येवमादि-

विधिनिषेधबोधनेन सर्वप्राणिनां सुहृद्वद्धितोपदेष्टृत्वात्, प्राणिनां सुहृत्। 'धर्मावहं पापनुदं भगेशम्' इति श्रुतिः। **अन्नानां पतये**—अन्नानाम् अदनीयानाम् ओषधीनां वा पतिः स्वामी। 'अन्नानां पतये नमः' इति श्रुतिः। **चिन्मात्राय**—दृश्यसम्बन्धरहितः सर्वाधिष्ठानभूतः प्रत्यगभिन्नः परशिवश्चिन्मात्रः। तदुक्तं वासिष्ठे—

'चेत्यानुपातरहितं सामान्येन च सर्वगम्।
यश्चित्तत्त्वमनाख्येयं स आत्मा परमेश्वरः॥'—इति।

'चिन्मात्रोऽहं सदाशिवः' इति श्रुतिः॥९८॥

**ध्येयाय ध्यानगम्याय ध्यानरूपाय ते नमः।**
**नमस्ते शाश्वतैश्वर्यविभवाय नमो नमः॥९९॥**

**ध्येयाय**—ध्येयो ध्यातव्यः। तदुक्तं स्कान्दे—

'अथ मोक्षार्थिभिः प्राज्ञैः शिव एकः शिवङ्करः।
ध्येयः सर्वं परित्यज्य शिवादन्यत्तु दैवतम्॥'—इति।

अस्मिन्नर्थे श्रुतिः—'साध्वी समाप्ता वेदवित्तमाः' इति। 'शिव एको ध्येयः शिवङ्करः' इति श्रुतिः। **ध्यानगम्याय**—विजातीयप्रत्ययतिरस्कारपूर्वकं परशिवविषयसजातीयप्रत्ययप्रवाहरूपेण [ध्यानेन] गम्यः प्राप्यः ध्यानगम्यः। स्कान्दे।—

'उमानुविग्रहा शुक्ला चन्द्रार्धकृतशेखरा।
नीलग्रीवा त्रिनेत्रा च प्रसन्नवदना शुभा॥
वरदाभयहस्ता च विचित्रमुकुटोज्ज्वला।
सर्वलक्षणसम्पन्ना सर्वाभरणभूषिता॥
स्वस्वरूपानुसंधानप्रमोदादेव केवलात्।
महाताण्डवसंयुक्ता ब्रह्मविष्णुशिवादिभिः॥

ध्येयाऽऽद्यन्तविनिर्मुक्ता या मूर्त्तिः श्रुतिदर्शिता ।
सेयं प्रसन्ना मूर्तिः स्यात् परात्परतरस्य तु ॥
ये सदा परमां मूर्तिं ध्यायन्ति हृदयाम्बुजे ।
इह ते हि परां भुक्तिं मुक्तिं च प्राप्नुवन्ति हि ॥'-इति

'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् । ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् ॥' इति श्रुतिः । ध्यानरूपाय—ध्यानस्य प्रत्ययसन्ततिरूपस्य रूपं स्वरूपं प्रत्ययप्रत्यगात्मेत्यर्थः । पाद्मे—

'ईशानाय नमस्तुभ्यं त्रिनेत्राय नमो नमः ।
ध्येयाय ध्यानरूपाय ध्यापयित्रे नमो नमः ॥' —इति

'प्रतिबोधविदितं मतम्' इति श्रुतिः । अस्य भाष्यम्—बोधं बोधं प्रति विदितं प्रतिबोधविदितम् : बोधशब्देन बौद्धाः प्रत्यया उच्यन्ते । सर्वे प्रत्यया विषयीभवन्ति यस्य स आत्मा सर्वबोधान् प्रतिबुध्यते । सर्वप्रत्ययदर्शी चिच्छक्तिस्वरूपमात्रः । प्रत्ययैरेव प्रत्ययेष्वविशिष्टतया लक्ष्यते, नान्यद्द्वारमन्तरात्मनो विज्ञानाय । अतः प्रत्ययप्रत्यगात्मतया विदितं ब्रह्म यदा तदा तन्मतं तत्सम्यग्दर्शनमित्यर्थ इति । **शाश्वतैश्वर्यविभवाय**—शाश्वतम् एकरूपम्, ऐश्वर्यम् अणिमादि तच्छाश्वतैश्वर्यम् , तद्रूपो विभवो यस्य स तथा । तदुक्तं स्कान्दे —

'अस्मान्रक्षाद्यैश्वर्यं रक्ष त्वं करुणानिधे ।
त्राता त्वं जगतामीश रक्षिता सर्वजीविनाम् ॥
भर्ता त्वं सर्वभूतानां त्वां विनेहाऽस्ति कोऽपरः ।'— इति ।
'तमीश्वराणां परमं महेश्वरम्' इति श्रुतिः ॥६६॥

नमः प्राणेश्वरायाऽथ सर्वशक्तिधराय च ।
धर्माधाराय धन्याय पुष्कलाय नमो नमः ॥१००॥

प्राणेश्वराय—प्राणानां मुख्यप्राणवृत्तीनां तदतिरिक्तानामिन्द्रियाणां च श्रोत्रादीनाम्, ईश्वरः अधिष्ठाता सन्निधिमात्रेण प्रेरकः प्राणेश्वरः । 'कृत्तिवासाः पिनाकी' इति श्रुतिः । सर्वशक्तिधराय—सर्वासां स्वाभिन्नानां चिच्छक्तीनां मध्यस्थानां मायिकानां जडशक्तीनां च तत्तद्रूपेण धारयिता सर्वशक्तिधरः । तदुक्तं स्कान्दे—

'चिन्मात्राश्रयमायायाः शक्त्याकारे द्विजोत्तमाः ।
अनुप्रविष्टा यस्यापि निर्विकल्पा स्वयंप्रभा ॥
सदाकारा परानन्दा संसारोच्छेदकारिणी ।
सा शिवा परमा देवी शिवाभिन्ना शिवङ्करी ॥
जगत्कारणमापन्नः शिवोऽथो मुनिसत्तमाः ।
सा तस्यापि भवेच्छक्तिस्तया हीनो निरर्थकः ॥'

एवं सर्वगस्येशितू रुद्रविष्णुब्रह्म-सदाशिवेश्वरहिरण्यगर्भसूत्रात्मविराट्स्वराट्-सम्राडिन्द्रादिलोकपालानाम्, इतरदेवानां गन्धर्वादीनां गिरिनदीसमुद्रादीनां सर्वेषां रूपेणावस्थानसमये शक्तिरपि सर्वत्राङ्गीकर्तव्या इति तस्मिन्नध्याये प्रपञ्चितम् । 'देवात्मशक्तिं स्वगुणैर्निगूढाम्' इति श्रुतिः । धर्माधाराय—धर्मः धर्मरूपो वृषभः आधारो वाहनं यस्य स धर्माधारः । स्कान्दे धर्मस्य वृषरूपत्वं वर्णितम्—

'धर्मः पुरातनं शम्भुं नष्टे चैव चराचरे ।
स्वनाशाद्भीतिसंयुक्तो वृषो भूत्वेशमाश्रितः ॥

मा भून्नाशो वृषस्येति तं चक्रे वाहनं शिवः ।
वृषरूपमुवाचेदं धर्मं तत्स्थापकः शिवः ।
सर्वदा त्वविनाशाय वाहनत्वं भजस्व मे ।
कृते चर चतुष्पात् त्वं परिपूर्णमनोरथः ॥
त्रिभिः पादैश्चरैकं त्वं त्रेतायां देहि पाप्मने ।
द्विपात्त्वं द्वापरे भूया द्विपादंहो युवां समौ ॥
त्वं चरैकेन पादेन कलौ पापं त्रिपाच्चरेत् ।
अत एव कलौ सर्वे प्राणिनः पापकारिणः ॥
मूलाधारं हि धर्मस्य मां न जानन्ति केचन ।
धारणाद्धर्म उक्तोऽसि पातनात् पातकं त्वघम् ॥
मन्निमित्तकृतं पापमपि धर्माय कल्पते ।
मामनादृत्य धर्मोऽपि पापं स्यात्प्रत्यवायकृत् ॥
मां धारयसि धर्म त्वं वृषरूपेण सर्वदा ।
त्वामहं धारयाम्येवं मच्छक्त्या परिरक्षितम् ॥
इत्येवं धर्ममाकल्प्य वाहनत्वमकल्पयत् ।
अत एव हि सङ्कल्पाद्दाहे च तिसृणां पुराम् ॥
विष्णुर्वृषेन्द्ररूपेण दधार शिरसा रथम् ।
तस्माद्धर्मः सदा शम्भोर्वृषरूपेण वाहनम् ॥'—इति ।

'धर्मावहं पापनुदं भगेशम्' इति श्रुतिः । धन्याय—धन्यः सुकृतः जगद्धितकर इति यावत् । 'विश्वशम्भुरवसे साधु कर्म' इति श्रुतिः । पुष्कलाय—पुष्कलं प्रभूतं तादृशं प्रपञ्चरूपं कार्यमस्यास्तीति पुष्कलः, सर्वजगत्कर्ता इति यावत् । 'इदं सर्वमसृजत, यदिदं किञ्च' इति श्रुतिः ॥१००॥

**वरिष्ठाय धर्मगोप्त्रे निधानायाऽग्रजाय च ।**
**योगीश्वराय योगाय योगगम्याय ते नमः ॥१०१॥**

**वरिष्ठाय**—वरिष्ठः श्रेष्ठः । पराशरोपपुराणे—

'मनुष्याणां च सर्वेषां जम्बूद्वीपनिवासिनाम् ।
वरिष्ठास्तेषु सर्वेषु ··· ··· ··· ··· ··· ॥'

—इति प्रस्तुत्य,

'राज्ञो विप्रवरो विप्राद्वरिष्ठो नाऽस्ति कश्चन ।
विप्रः समस्तमर्त्यानां देवता हि न संशयः ॥
विप्रादपि च भूदेवाद्वरिष्ठा देवताः स्थिताः ।
देवताभ्यः समस्ताभ्यः स्रष्टा ब्रह्मा वरः स्मृतः ॥
ब्रह्मणश्च महाविष्णुर्वरिष्ठः सर्वपालकः ।
विष्णोरपि वरः साक्षाद्रुद्रः संहारकारकः ॥
सर्वेषामपि देवानां वरिष्ठः परमेश्वरः ।'—इति ।

'परं विज्ञानाद्यद्वरिष्ठं प्रजानाम्' इति श्रुतिः । **धर्मगोप्त्रे**—गोप्ता रक्षिता । महाभारते द्रोणपर्वणि पार्वत्या सहितं देवं प्रस्तुत्य—

'गोप्तारं सर्वलोकानामिष्वासधरमच्युतम् ।
वासुदेवस्तु तं दृष्ट्वा जगाम शिरसा क्षितिम् ॥'—इति ।

'संसृज्य विश्वा भुवनानि गोपा' इति श्रुतिः । **निधानाय**—पुरुषार्थरूपेण निधीयते इति निधानम् । 'यत्र तत् सत्यस्य परमं निधानम्' इति श्रुतिः । **अग्रजाय**—अग्रे जगदादौ हिरण्यगर्भरूपेण जायते इति अग्रजः । 'नमः पूर्वजाय चापरजाय च' इति श्रुतिः । **योगीश्वराय**—योगः चित्तवृत्तिनिरोधः, सोऽस्यास्तीति योगी, योगिनाम् ईश्वरः तेषां योगप्रापकः योगीश्वरः, 'ईश्वरप्रणिधानाच्च' इति स्मृतेः । 'एष ह्येव साधु कर्म कारयति'

इति श्रुतिः । योगाय—क्षेत्रज्ञपरमात्मनोरैक्यभावना योगः । तदुक्तं भाष्ये—

'ज्ञानेन्द्रियाणि सर्वाणि निगृह्य मनसा सह ।
एकत्वभावना योगः क्षेत्रज्ञपरमात्मनोः ॥'—इति ।

तद्वाप्यत्वात् परशिवोऽपि योग उच्यते । 'ज्ञानप्रसादेन विशुद्धसत्त्वः ततस्तु तं पश्यते निष्कलं ध्यायमानः' इति श्रुतिः । योगगम्याय—विषयेभ्यः प्रतिसंहृत्य चेतस आत्मनि समाधानं योगः, तेन वृत्तिरूपेण गम्यः प्राप्यो योगगम्यः । 'अध्यात्मयोगाधिगमेन देवं मत्वा' इति श्रुतिः ॥१०१॥

**महेन्द्रोपेन्द्रचन्द्रार्कनमिताय नमो नमः ।**
**महर्षिवन्दितायाऽथ प्रकाशाय सुधर्मिणे ॥१०२॥**

महेन्द्रोपेन्द्रचन्द्रार्कनमिताय—जिष्णु-विष्णु-विधुरवि-प्रभृतिभिर्वन्दितः महेन्द्रोपेन्द्रचन्द्रार्कनमितः । आदित्यपुराणे—

'नमाम्यहं देववरं पुराणम् ,
उपेन्द्रवेधेन्द्रसुरादिजुष्टम् ।
शशाङ्कसूर्याग्निमयत्रिलोचनं
ध्यानाभिगम्यं जगतः प्रकाशम् ॥'—इति ।

स्कान्दे—

'निशम्य वेदार्थमशेषमीश्वरं
प्रणम्य शम्भुं शशिशेखरं हरम् ।
प्रसाद्य पादाम्बुजमास्तिको(?)हरिः
स्वमूर्ध्नि विन्यस्तकरद्वयेन सः ॥'—इति ।

तत्रैव—

'पञ्चाक्षरं परममन्त्रमशेषवेद-
वेदान्तसारमिति शोभनमादरेण ।
जप्त्वा सुराः प्रणवसंयुतमम्बिकेशं
दृष्ट्वा सभापतिमशेषगुरुं प्रणम्य ॥
भक्त्या पूज्य महेश्वराख्यममलं भुक्तिप्रदं मुक्तिदं
शक्त्या युक्तमतिप्रसन्नवदनं ब्रह्मेन्द्रपूर्वाः सुराः ।
नित्यानन्दनिरञ्जनामृतपरं ज्ञात्वाऽनुभूत्या सदा
नृत्यन्तं परमेश्वरं पशुपतिं भक्त्यैकलभ्यं परम् ॥
लौकिकेन वचसा तमीश्वरं
वैदिकेन वचसा च तुष्टुवुः ।
देवदेवमखिलार्तिहारिणं
ब्रह्मवज्रधरपूर्वकाः सुराः ॥'—इति ।

'शान्तं शाश्वतं सदाशिवं ब्रह्मादिवन्दितम्' इति श्रुतिः ।
**महर्षिवन्दिताय**—महर्षिभिर्वामदेवादिभिः हरभक्तादिभिश्च ज्ञानार्थं वन्दितः । उपलक्षणमेतत्—स्तोत्रजपपूजातपआदीनाम् । तदुक्तं स्कान्दे 'हरभक्तो हिरण्याक्षः' इत्यारभ्य—

'द्विसप्ततिसहस्राणि सह द्वादशसंख्यया ।
सर्वे शमदमोपेताः शिवभक्तिपरायणाः ॥
अग्निरित्यादिभिर्मन्त्रैर्भस्मोद्धूलितविग्रहाः ।
रुद्राक्षमालाभरणास्त्रिपुण्ड्राङ्कितमस्तकाः ॥
लिङ्गार्चनपरा नित्यं शम्भोरमिततेजसः ।
तत्राऽवसाने संभूय मेरुपार्श्वे विचक्षणाः ॥
परस्परं समालोक्य श्रद्धया सुचिरं बुधाः ।
मुक्तिं विमुक्त्युपायं च मोचकं मोचकप्रदम् ॥

तपश्चेरुर्महाधीराः शङ्करं प्रति सादरम् ।'—इति ।

'प्रोवाच सम्यगृषिसङ्घजुष्टम्' इति श्रुतिः । प्रकाशाय—दीपवत् प्रकाशयतीति प्रकाशः, यथा दीपोऽन्यैरप्रकाश्यः सन् स्वयमन्धकारावृतान् पदार्थान् प्रकाशयति, एवं परमात्माऽपि स्वव्यतिरिक्तैः सर्वैर्जडैरप्रकाश्यः सन् साध्यस्तान् अज्ञानतत्कार्यभूतान् अज्ञानेनावृतान् पदार्थान् प्रकाशयतीति फलितोऽर्थः । तदुक्तं स्कान्दे—

'अतः साक्षाच्छिवः साम्बः स्वप्रकाशैकलक्षणः ।
तेन सर्वमिदं गम्यं गम्यतेऽसौ न गम्यते ॥
स्वयंज्योतिरिति प्राह श्रुतिः साध्वी महेश्वरम् ।
तस्य भासा सर्वमिदं विभातीत्यपि चाह हि ॥
अतः शिवः सर्वजगद्विभासकः
स्वयंप्रकाशः स्वयमेव केवलः ।'—इति ।

'दीपवत् प्रकाशः' इति श्रुतिः । सुधर्मिणे—शोभनान् धर्मान् अपहतपाप्मत्वादिसत्यसङ्कल्पत्वान्तान् धारयतीति सुधर्मी । 'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः' इति श्रुतिः ॥१०२॥

**नमो हिरण्यगर्भाय नमो हिरण्मयाय च ।**
**जगद्बीजाय हरये सेव्याय क्रतवे नमः ॥१०३॥**

हिरण्यगर्भाय—हिरण्यं गर्भो गर्भरूपेण सूक्ष्मशरीरेण अन्तःशरीरे विद्यमानं यस्य स हिरण्यगर्भः, रुद्रेण सर्गादौ अपः सृष्ट्वा तासु उत्कृष्टस्य वीर्यस्य हिरण्यरूपब्रह्माण्डात्मना परिणतत्वात् । यथोक्तं स्कान्दे सौरसंहितायाम्—

'त्रिमूर्तीनां तु सर्गस्याऽनन्तरं परमः शिवः ।
शब्दादीनां तु भूतानामुत्पत्तिं कुरुते स्वयम् ॥'

—इत्यादिना ।

त्रिमूर्त्यादिसर्गेषु ... ... ... ।
सदाशिवेश्वरौ रुद्रस्तथा नारायणो विधिः ॥
इति नाम्ना प्रकीर्त्यन्ते तेषु रुद्रः शिवाज्ञया ।
पुरस्तादण्डसर्गस्य ससर्जापो द्विधा पुनः ॥
अपामेकांशके विद्वान् स्वकं वीर्यमुपासृजत् ।
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ॥'—इति ।

एवञ्च हिरण्यात्मकाण्डकस्य परमेश्वराधीनत्वात् तस्य हिरण्यगर्भत्वम् । 'नमो हिरण्यबाहवे ······ हिरण्यपतये' इति श्रुतिः । **हिरण्मयाय**—ज्योतिर्मयो हिरण्मयः ।

'मण्डलान्तरगतं हिरण्मयं
भ्राजमानवपुषं शुचिस्मितम् ।
चण्डदीधितिमखण्डितद्युतिं
चिन्तयेन्मुनिसहस्रसेवितम् ॥'

—इति रहस्यम् । 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' इति श्रुतिः । **जगद्बीजाय**—जगतः सर्वस्य प्रपञ्चस्य, बीजं कारणम् । यद्यपि 'धाता यथापूर्वमकल्पयत्' इति श्रुत्या धातुर्हिरण्यगर्भस्य जगत्स्रष्टृत्वं प्रतीयते; तथापि अवान्तरसर्गं प्रति परमेश्वराज्ञया धातुः स्रष्टृत्वं बोध्यम् । तदुक्तम्—

'यदाज्ञया जगत्स्रष्टा विरिञ्चिः पालको हरिः ।
संहर्ता कालरुद्राख्यो नमस्तस्मै पिनाकिने ॥'—इति ।

आकाशादिकारणत्वं तु परमेश्वरस्यैव । 'तस्माद्वा एतस्मा-

दात्मन आकाशः संभूतः' इति श्रुतिः। हरये—हरति पापानीति हरिः विष्णुः, तन्नामकत्वात् शिवोऽपि हरिः। तदुक्तं हरिवंशे। कैलासयात्रायां शिवः—

'नामानि तव गोविन्द यानि लोके महान्ति च।
तान्येव मम नामानि नाऽत्र कार्या विचारणा ॥'—इति।

'हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः।' इति अस्य नाम्नः पापनिवर्तकत्वेन प्रसिद्धत्वान्महत्त्वम्; तथा च शिवनामत्वमुचितम्। आश्वलायनगृह्ये शूलगवेऽप्युक्तम्—'यान्युच्छ्रयणानि यानि नामधेयानि तानि महादेवस्य' * इति। यद्वा—तत्त्वमस्यादिमहावाक्यजन्यवृत्त्यारूढः सन् अज्ञानतत्कार्याणि हरतीति हरः। 'हरये शर्वायेशाय' इति श्रुतिः। सेव्याय—भजनीयः सेव्यः। भजनं च कायिकवाचिकमानसिकादिभेदेन बहुविधम्। तत्र कायिकम् भस्मोद्धूलनत्रिपुण्ड्ररुद्राक्षधारणपुरस्सरं शिवक्षेत्रवास-शिवपूजा-प्रदक्षिणा-नमस्कारादिकम्। वाचिकम्—शिवस्तोत्र-पञ्चाक्षरजपादिकम्। मानसिकम्—शिवविषयकस्मरणमननध्यानादिकम्। आदिशब्देन शिवालयलिङ्गमूर्तिदर्शनं शिवनैवेद्यभोजनं शिवाघ्रातनीलोत्पलबिल्वपत्राद्याघ्राणं शिवपुराण-वेदान्तश्रवणादिकं च। तदुक्तं शिवरहस्ये—

'अर्चयध्वं महादेवं विष्णुब्रह्मादिवन्दितम्।
त्रिकालमप्रमादेन बिल्वपत्रादिसाधनैः ॥

---

* प्रचलितपुस्तकेषु 'सर्वाणि ह वा अस्य नामधेयानि', 'सर्वाः सेनाः', 'सर्वाण्युच्छ्रयणानि' सूत्र त्रयमिदमेतत्समानार्थकमुपलभ्यते एतादृशानुपूर्वी नोपलभ्यते।

भजध्वमप्रमादेन शिवं ब्रह्मादिवन्दितम् ।
जपध्वमनिशं यत्नाच्छैवं पञ्चाक्षरं परम् ॥
उद्धूलनं त्रिपुण्ड्रं च तथा रुद्राक्षधारणम् ।
मा त्यजध्वं मा त्यजध्वं निद्राकालेऽपि सर्वथा॥
शृणुध्वमतियत्नेन मोक्षदां शाम्भवीं कथाम् ।
शाम्भवैः सह संलापं कुरुध्वं भस्मभूषिताः ॥'—इति ।

तथा पराशरोपपुराणे—

'सर्वकारणमीशानः साम्बः सत्यादिलक्षणः ।
न विष्णुर्न विरिञ्चिश्च न रुद्रो नाऽपरः पुमान् ॥
स एव सर्ववेदान्तैः सादरं प्रतिपाद्यते ।
वेदानुसारिस्मृतिभिः पुराणैर्भारतादिभिः ॥
श्रौतस्मार्तसमाचारैः स एवाऽऽराध्यते द्विजैः ।
तच्छेषत्वेन चाऽऽराध्यास्तदन्याः सकला अपि ॥'—इति ।

'शिव एको ध्येयः शिवङ्करः', 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः', 'तव श्रियं मरुतो मज्जयन्तः', 'तमु ष्टुहि यः स्विषुः सुधन्वा', 'यो रुद्रो अग्नौ अप्सु', 'रुद्रभुक्तं भुञ्जीत, रुद्रपीतं पिबेत्, रुद्राघ्रातं जिघ्रीत' इत्येवमादिका श्रुतिः । क्रतवे—यूपसहितो यज्ञः क्रतुः, तद्रूपः । 'त्वं यज्ञस्त्वं वषट्कारः' इति श्रुतिः ॥१०३॥

**आधिपत्याय कामाय स्वराय यशसे नमः ।**
**नमः प्रचेतसे ब्रह्ममयाय सकलाय च ॥१०४॥**

आधिपत्याय—आधिपत्यम् अधिपतिः । 'अणिमैतदात्म्यम्' इतिवत् भावभवित्रोरभेदविवक्षया । 'त्र्यम्बकायैकचरायाधिपतय' इति श्रुतिः । कामाय—सर्वैः काम्यत इति

कामः, परमात्मरूपत्वात् । 'कामाय कामरूपिणे' इति श्रुतिः । स्वराय — । यशसे—यश आत्मा । 'स हाहं यशसां यशः' इति श्रुतिः । अस्य भाष्यम्—यशसामात्मनां देहेन्द्रियमनोबुद्धिलक्षणानामात्मा यश इति । प्रचेतसे—प्रकृतं चेतः ज्ञानं यस्य स प्रचेताः, सर्वज्ञ इति यावत् । 'धाता विधाता परमोत सन्दृग्' इति श्रुतिः । ब्रह्ममयाय—ब्रह्ममयो वेदमयः, सर्ववेदप्रतिपादकत्वात् । 'सर्वे वेदा यत्पदमामनन्ति' इति श्रुतिः । सकलाय—कलाभिः प्राचीदिगादिरूपादिभिः पादचतुष्टयात्मिकाभिः षोडशसंख्याकाभिः सकलः । इदं छान्दोग्ये षोडशकलविद्यायां 'प्राची दिक्कला प्रतीची दिक्कला दक्षिणा दिक्कलोदीची दिक्कला । एष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान्' इत्यादिना प्रतिपादितम् ॥१०४॥

नमस्ते रुक्मवर्णाय नमस्ते ब्रह्मयोनये ।
योगात्मने अभीताय दिव्यनृत्याय ते नमः ॥१०५॥

रुक्मवर्णाय—स्वयंज्योतिःस्वभावो रुक्मवर्णः ।

'सर्वाभिमानिनं साम्बं संसारोदधितारकम् ।
रुक्माभं सूक्ष्मधीगम्यं विदित्वा मुच्यते जनः ॥'

—इति पराशरोपपुराणे । 'यदा पश्यः पश्यते रुक्मवर्णम्' इति श्रुतिः । ब्रह्मयोनये—ब्रह्म च तद्योनिश्च ब्रह्मयोनिः । अपरस्य ब्रह्मणो वेदानां वा योनिः । तदुक्तम्—

'अस्य पूर्वमुखं सौम्यं बालार्कसदृशप्रभम् ।
त्रिलोचनारविन्दाढ्यं बालेन्दुकृतशेखरम् ॥
अस्मादेव मुखात्पूर्वमृचः सर्वाः प्रजज्ञिरे ।
दक्षिणं नीलजीमूतसमानरुचिरप्रभम् ॥

भ्रुकुटीकुटिलं घोरं रक्तवृत्तेक्षणत्रयम् ।
दंष्ट्राकरालदुधर्षं स्फुरिताधरपल्लवम् ॥
इन्दुरेखाकृतोत्तंसमूर्ध्वं ज्वलितमूर्धजम् , ।
अस्मादेव मुखात्पूर्वमथर्वाङ्गिरसोऽभवन् ॥
उत्तरं विद्रुमप्रख्यं नीलालकविभूषितम् ।
सविलासं त्रिनयनं चन्द्राभरणभास्वरम् ॥
अस्मादेव मुखात्पूर्वमोङ्काराख्यः समुद्गतः ।'—इति ।

'कर्तारमीशं पुरुषं ब्रह्मयोनिम्' इति श्रुतिः । योगात्मने—बाह्येन्द्रियनिग्रहपूर्वकं ज्ञानध्यानप्रणिधानाद्यनुष्ठानं योगः, तेन गम्य आत्मा योगात्मा । तदुक्तं सूत्रकारेण - 'अपि च संराधने प्रत्यक्षानुमानाभ्याम्' इति । व्याख्यातञ्च भाष्यकारेण —'अपिचैनमात्मानं निरस्तसमस्तप्रपञ्चमव्यक्तं संराधनकाले पश्यन्ति योगिनः । संराधनं च भक्तिध्यानप्रणिधानाद्यनुष्ठानम् । कथं पुनरवगम्यते संराधनकाले पश्यन्तीति । प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यामित्यर्थः । तथाहि श्रुतिः—"पराञ्चि खानि व्यतृणत् स्वयंभूस्तस्मात्पराङ् पश्यति नान्तरात्मन् । कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्" इति । 'ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः" इति चैवमाद्या । स्मृतिरपि—"यं विनिद्रा जितश्वासाः सन्तुष्टाः संयतेन्द्रियाः । ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥" "योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्" इति चैवमाद्या' इति । अभीताय—भीतिरहितोऽभीतः, भीतिहेतुभूतद्वितीयवस्तुनोऽभावात् , 'द्वितीयाद्वै भयं भवति' इति श्रुतेश्च । 'अभयं प्रतिष्ठां विन्दते' इति श्रुतिः । दिव्यनृत्याय—दिव्यम् अमानुषं दर्शनमात्रेण मुक्तिकरं नृत्यं नर्तनं यस्य स दिव्यनृत्यः । तदुक्तं स्कान्दे—

'मुनीश्वरान् समस्तदेवनायकः
सुरेश्वरान्निरीक्षणान् निरस्तपापपञ्जरान् ।
अनुग्रहेण शङ्करः प्रगृह्य पार्वतीपतिः
समस्तवेदशास्त्रसारभूतमुत्तमोत्तमम् ।
प्रदर्शयन्नटेश्वरः समस्तदेवसन्निधौ
स्वनर्तनं विमुक्तिदं महत्तरं महेश्वरः ।
समस्तलोकरक्षणं हृदि स्थितं महात्मनां
निरीक्षणान्महेश्वरोऽकरोत् सभापतिः शिवः ॥'—इति ।

एवं पुण्डरीकपुरमागत्य तपः कुर्वतो देवान् प्रति नटनं कृतवान् नटराजसभापतिः । अनन्तरं तैः पृष्टः सन् आत्मस्वरूपात्मकज्ञानसाधनं चोक्तवान् । अनन्तरं तैः स्तोत्रं कृतम्—'नमस्ते रुद्रमन्यव' इत्यारभ्य, 'सभारूपाय ते तुभ्यं सभायाः पतये नमः' इत्यन्तेन । 'सभाभ्यः सभापतिभ्यश्च वो नमः' इति श्रुतिः ॥ १०५ ॥

**जगतामेकबीजाय मायाबीजाय ते नमः ।**
**सर्वहृत्सन्निविष्टाय ब्रह्मचक्रभ्रमाय च ॥१०६॥**

जगतामेकबीजाय—जगतां कार्यरूपाणाम् एकः सन् बीजं कारणम् एकबीजम् । अनेन पातञ्जलवैशेषिकादिमतप्रसिद्धप्रकृतिपरमाण्वादीनां कारणत्वं निराकृतं भवति, सिद्धान्तेऽर्थे एकस्य ईश्वरस्यैव जगत्प्रत्यभिन्ननिमित्तोपादनत्वात्, 'सोऽकामयत बहु स्यां प्रजायेय' इति श्रुतेः । ननु मायाया अपि जगत्कारणत्वात् कथमीश्वरस्यैव तत्त्वमत आह—मायाबीजाय—मायाया बीजं कारणमधिष्ठानमिति यावत् । एवञ्च मायाया अध्यस्तत्वेन

वास्तवत्वाभावात् शक्तित्वेन स्वातन्त्र्याभावाच्च जगत ईश्वरैकबीजत्वमुपपद्यते। 'देवात्मशक्तिं स्वगुणैर्निगूढाम्' इति श्रुतिः।

**सर्वहृत्सन्निविष्टाय**—सर्वेषां प्राणिनां हृदि हृत्पुण्डरीके बुद्धौ च सन्निविष्टः सम्यक् निविष्टः प्रत्यगात्मत्वेन स्थितः, तत्राभिव्यक्त इत्यर्थः। 'सदा जनानां हृदये सन्निविष्टः' इति श्रुतिः।

**ब्रह्मचक्रभ्रमाय**—ब्रह्मचक्रस्य कार्यकारणरूपस्य सर्वात्मकस्य, भ्रमः भ्रमणं पौनःपुन्येन येन स ब्रह्मचक्रभ्रमः। ब्रह्मचक्रस्वरूपमुक्तं श्वेताश्वतरोपनिषदि—'तमेकनेमिं त्रिवृतं षोडशान्तं शतार्धारं विंशतिप्रत्यराभिः। अष्टकैः षड्भिर्विश्वरूपैकपाशं त्रिमार्गभेदं द्विनिमित्तैकमोहम्।' अस्य भाष्यम्—य एकः कारणानि निखिलान्यधितिष्ठति तमेकनेमिं योनिः कारणमव्याकृतमाकाशं परमव्योम माया प्रकृतिः शक्तिस्तमोऽविद्या छायाऽज्ञानमनृतमव्यक्तमित्येवमादिशब्दैरभिलप्यमानैका कारणावस्था नेमिरिव नेमिः सर्वाधारो यस्याधिष्ठातुरद्वितीयस्य परमात्मनस्तमेकनेमिम्। त्रिवृतम्—त्रिभिः सत्त्वरजस्तमोभिः प्रकृतिगुणैर्वृतम्। षोडशको विकारः पञ्च भूतान्येकादशेन्द्रियाण्यन्तोऽवसानं विस्तारसमाप्तिर्यस्याऽऽत्मनस्तं षोडशान्तम्। अथवा प्रश्नोपनिषदि—'यस्मिन्नेताः षोडशकलाः प्रभवन्ति' इत्यारभ्य 'स प्राणमसृजत प्राणाच्छ्रद्धाम्' इत्यादिना प्रोक्ता नामान्ताः षोडशकला अवसानं यस्येति। अथवा एकनेमिमिति कारणभूताव्याकृतावस्थाऽभिहिता, तत्कार्यसमष्टिभूतविराट्सूत्रद्वयं तद्व्यष्टिभूतभूरादिचतुर्दशभुवनानि अन्तोऽवसानं यस्य प्रपञ्चात्मनावस्थितस्य तं षोडशान्तम्। शतार्धारम्—पञ्चाशत्प्रत्ययभेदा विपर्ययाशक्तितुष्टिसिद्ध्याख्या अरा इव यस्य तं शतार्धारम्। पञ्च विपर्ययभेदाः—तमो मोहो महामोहस्तामिस्रो

ह्यन्धतामिस्र इति । अशक्तिरष्टाविंशतिधा । तुष्टिर्नवधा । अष्टधा सिद्धिः । एते पञ्चाशत्प्रत्ययभेदाः । तत्र तमसो भेदोऽष्टविधः, अष्टप्रकृतिष्वनात्मस्वात्मप्रतिपत्तिविषयभेदेनाऽष्टविधत्वप्रतिपत्तेः । मोहस्य चाष्टविधो भेदः । अणिमादिशक्तिर्मोहः । दशविधो महामोहः, दृष्टानुश्रविकशब्दादिविषयेषु पञ्चसु पञ्चस्वभिनिवेशो महामोहः । दृष्टानुश्रविकभेदेन तेषां दशविधत्वम् । तामिस्रोऽष्टादशविधः, दृष्टानुश्रविकेषु दशसु विषयेष्वष्टविधैरैश्वर्यैः प्रयतमानस्य तदसिद्धौ यः क्रोधः स तामिस्रोऽभिधीयते । अन्धतामिस्रोऽप्यष्टादशविधः, अष्टविधैश्वर्ये दशसु विषयेषु भोग्यत्वेनोपस्थितेष्वर्धभुक्तेषु मृत्युना ह्रियमाणस्य यः शोको जायते—महाक्लेशेनैते प्राप्ताः, न चैते मयोपभुक्ताः प्रत्यासन्नश्चायं मरणकाल इति - सोऽन्धतामिस्र इत्युच्यते । विपर्ययभेदा व्याख्याताः । अशक्तिरष्टाविंशतिधोच्यते—एकादशेन्द्रियाणामशक्तयो मूकत्वबधिरत्वान्धत्वप्रभृतयो बाह्याः । अन्तःकरणस्य पुरुषार्थयोग्यतातुष्टीनां विपर्ययेण नवधाऽशक्तिः । सिद्धीनां विपर्ययेणाऽष्टधाऽशक्तिः । तुष्टिर्नवधा—प्रकृत्युपादानकालभाग्याख्याश्चतस्रः । विषयोपरमात्पञ्च । कश्चित् प्रकृतिपरिज्ञानात् कृतार्थोऽस्मीति मन्यते । अन्यः पुनः पारिव्राज्यलिङ्गं गृहीत्वा कृतार्थोऽस्मीति मन्यते । अपरः पुनः प्रकृतिपरिज्ञानेन किमाश्रमाद्युपादानेन वा किं बहुना कालेनाऽवश्यं मुक्तिर्भविष्यतीति मत्वा परितुष्यति । कश्चित्पुनर्मन्यते विना भाग्येन न किञ्चिदपि प्राप्यते ; यदि मम भाग्यमस्ति ततो भवत्येवात्रैव मोक्ष इति परितुष्यति । विषयाणामार्जनमशक्यमित्युपरम्य तुष्यति । शक्यते द्रव्यमार्जितुमार्जितस्य रक्षणमशक्यमित्युपरम्य परितुष्यति । सातिशयत्वादिदोषदर्शनेनोपरम्यापरस्तुष्यति । विषयाः सुतरामेवाभिलाषं जनयन्ति, न च तद्भोगाभ्यासे तृप्तिरुपजायते ।

'न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाऽभिवर्धते ॥' इति ।

तस्मादलमनेन पुनः पुनरसन्तोषकारणेनोपभोगेनेत्येवं सङ्ग-दोषदर्शनादुपरम्य कश्चित्तुष्यति । नानुपहत्य भूतानुपभोगः संभवति । भूतोपघातभोगाच्चाधर्मः । अधर्मान्नरकादिप्राप्तिरिति हिंसादोषदर्शनात् कश्चिदुपरम्य तुष्यति । प्रकृत्युपादानकाल-भाग्याख्याश्चतस्रः । विषयाणामार्जनरक्षणविषयदोषसङ्गहिंसा-दोषात् पञ्च तुष्टय इति नव तुष्टयो व्याख्याताः । सिद्धयोऽभिधी-यन्ते—ऊहः शब्दोऽध्ययनमिति तिस्रः सिद्धयः । दुःखविघा-तास्तिस्रः । सुहृत्प्राप्तिर्दानमिति सिद्धिद्वयम् । ऊहस्तत्त्वं जिज्ञास-मानस्योपदेशमन्तरेण जन्मान्तरसंस्कारवशात् प्रकृत्यादिविषयं ज्ञानमुत्पद्यते सेयमूहो नाम प्रथमा सिद्धिः । शब्दो नामाभ्यास-मन्तरेण श्रवणमात्राद्यज्ज्ञानमुत्पद्यते सा द्वितीया सिद्धिः । अध्य-यनं नाम शास्त्राभ्यासाद्यज्ज्ञानमुत्पद्यते सा तृतीया सिद्धिः । आध्यात्मिकस्याऽऽधिभौतिकस्याऽऽधिदैविकस्य त्रिविधदुःखस्य व्युदासाच्छीतोष्णादिजन्यदुःखसहिष्णोस्तितिक्षोर्यज्ज्ञानमुत्पद्यते, तस्याऽऽध्यात्मिकादिभेदात् सिद्धेस्त्रैविध्यम् । सुहृदं प्राप्य या सिद्धिर्ज्ञानस्य सा सुहृत्प्राप्तिर्नाम सिद्धिः । आचार्यहितवस्तुप्रदानेन या सिद्धिर्विद्यायाः सा दानं नाम सिद्धिः । एवमष्टविधा सिद्धिर्व्या-ख्याता । एवं विपर्ययाशक्तितुष्टिसिद्ध्याख्याः पञ्चाशत्प्रत्ययभेदा व्याख्याताः । एवं ब्राह्मपुराणे कल्पोपनिषद्व्याख्यानप्रदेशे षष्टि-तमाध्याये पञ्चाशत्प्रत्ययभेदाः प्रतिपादिताः । अथवा पञ्चा-शच्छक्तिरूपिण इति परस्य याः शक्तयः पुराणे स्वरूपत्वेनाभि-मताः पञ्चाशच्छक्तय अरा इव यस्य तं शतार्धारम् । विंशति-प्रत्यराभिः । विंशतिप्रत्यरा दशेन्द्रियाणि तेषां च विषयाः शब्द-

स्पर्शरूपरसगन्धवचनादानविहरणोत्सर्गानन्दाः । पूर्वोक्तानामराणां प्रत्यरा ये प्रतिविधीयन्ते कीलका अराणां दार्ढ्याय ते प्रत्यरा इत्युच्यन्ते । तैः प्रत्यरैर्युक्तम् । अष्टकैः षड्भिर्युक्तमिति योजनीयम् ।

'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥

—इति प्रकृत्यष्टकम् । त्वक्चर्ममांसरुधिरमेदोऽस्थिमज्जाशुक्राणि धात्वष्टकम् । अणिमाद्यैश्वर्याष्टकम् । धर्मज्ञानवैराग्यैश्वर्याधर्माज्ञानावैराग्यानैश्वर्याख्यभावाष्टकम् । ब्रह्मप्रजापतिदेवगन्धर्वयक्षराक्षसपितृपिशाचा देवाष्टकम् । अष्टावात्मगुणा ज्ञेयाः । दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेति गुणाष्टकं षष्ठम् । एतैः षड्भिर्युक्तम् । विश्वरूपैकपाशम्—स्वर्गपुत्राद्याद्यनेकविषयभेदाद्विश्वरूपं विश्वरूपो नानारूप एकः कामाख्यः पाशोऽस्येति विश्वरूपैकपाशम् । धर्माधर्मज्ञानमार्गभेदा अस्येति त्रिमार्गभेदम् । द्वयोः पुण्यपापयोर्निमित्तैकमोहो देहेन्द्रियमनोबुद्धिजात्यादिष्वनात्मस्वात्माभिमानोऽस्येति द्विनिमित्तैकमोहम् । अपश्यन्निति क्रियापदमनुवर्तते । अधीम इत्युत्तरमन्त्रसिद्धं वा क्रियापदम्' इति । 'देवस्यैष महिमा तु लोके येनेदं भ्राम्यते ब्रह्मचक्रम्' इति श्रुतिः ॥ १०६ ॥

**ब्रह्मानन्दाय महते ब्रह्मण्याय नमो नमः ।
भूरिभारार्तिसंहर्त्रे विधिसारथये नमः ॥ १०७ ॥**

ब्रह्मानन्दाय—ब्रह्मरूप आनन्दो ब्रह्मानन्दः । 'आनन्दं ब्रह्म मां ज्ञात्वा न बिभेति कुतश्चन ।' —इति पाद्मे । 'आनन्दं

ब्रह्मणो विद्वान्' इति श्रुतिः। महते—महान् परिपूर्णः। 'महान् प्रभुर्वै पुरुषस्त्वस्यैष प्रवर्तकः' इति श्रुतिः। ब्रह्मण्याय—ब्रह्मस्वरूपाणां ज्ञानिनां हितकारी, 'तपो वै वेदाश्चत्वारो ज्ञानिनां ब्रह्मसंज्ञम्' इति वचनात्, 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वाम्' इति श्रुतेश्च; 'ज्ञानी त्वात्मैव मे मतम्' इति भगवद्वचनाच। यद्वा ब्राह्मणानां हितकरो ब्रह्मण्यः, साजात्यात्। 'त्वं देवेषु ब्राह्मणः' इति श्रुतिः। भूरिभारार्तिसंहर्त्रे—अधिकासह्यदुःखनिवारको भूरिभारार्तिसंहर्ता। देवासुरकृतामृतमथनकाले उत्पन्नं कालकूटविषं ब्रह्मविष्णुलोकपालादिदेवासुरसिद्धऋष्यादीन् प्रतिनिगृहीतवान् शिव इति स्कान्दे प्रसिद्धम्। यद्वा, अविद्यासितारागद्वेषाभिनिवेशपुण्यापुण्यमिश्रकर्मगर्भजन्मजरामरणस्थावरनारकदुःखरागद्वेषादिरूपसंसारमोचकः। 'ज्ञात्वा देवं मुच्यते सर्वपाशैः' इति श्रुतिः। विधिसारथये—विधिर्ब्रह्मा सारथी रथनेता यस्य स तथा 'सारथिं जगतां चैव ब्रह्माणं प्रभुमीश्वरम्। आरुरोह रथं दिव्यं रथमण्डलधृग् भवः॥'—इति पुराणे। 'ब्रह्मा भवति सारथिः' इति श्रुतिः॥ १०७॥

हिरण्यगर्भपुत्राणां प्राणसंरक्षणाय च
दुर्वाससे षड्विकाररहिताय नमो नमः॥ १०८॥

हिरण्यगर्भपुत्राणां प्राणसंरक्षणाय—हिरण्यगर्भस्य ब्रह्मणः पुत्राणामपत्यानां प्राणानां संरक्षणः हिरण्यगर्भपुत्राणां प्राणसंरक्षणः। लोकोत्तरदिव्यरूपलावण्यसौन्दर्यवद्गौरीविवाहकाले उपाध्यायरूपेण विद्यमानं ब्रह्माणं गौरीं प्रति ईषद्दर्शनमात्रेणाऽऽनन्दितक्षुभितावशीकृतचित्ततया निरोद्धुमशक्यं सद्बहिर्निर्गतं स्ववीर्यं ज्ञात्वा भीतं पादाङ्गुष्ठेन पेषणं कृतवन्तं

प्रति सर्वज्ञः कारुणिकः सर्वव्यापी सर्वभूतान्तरात्मा परशिवः पेषणेनानेकर्षिरूपेण वालखिल्या नाम नैके जाता इति पुनः पुनः पेषणे यत्नो माऽस्त्विति उक्तवानिति शङ्करसंहितायां प्रसिद्धम्। 'प्राणेश्वरः कृत्तिवासाः पिनाकी' इति श्रुतिः। दुर्वाससे—दुर्निरीक्ष्यं वासो गजसिंहव्याघ्रचर्मादिरूपं यस्य स तथा। 'पिनाकहस्तः कृत्तिवासाः' इति श्रुतिः। यद्वा—लोकशिक्षार्थं तपः कुर्वतोरत्रेरपत्यरूपेण दुर्वासइति नाम्ना शिव एवांशेन प्रादुर्बभूवेति पुराणे प्रसिद्धम्। जाबालोपनिषद्गतपरमहंसा नाम संवर्तकारुणिश्वेतकेतुदुर्वासऋभुनिदाघेत्यादिवाक्येषु दुर्वासश्शब्दव्याख्यानावसरे वेदव्याख्यातृभिस्तस्य शङ्करांशत्वेनैव व्याख्यातत्वात्। षड्विकाररहिताय—जायतेऽस्ति वर्धते परिणमतेऽपक्षीयते नश्यतीति भावविकारषट्करहितः षड्विकाररहितः। 'न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित्। अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥' इति श्रुतिः ॥१०८॥

**नमो देहार्धकान्ताय षडूर्मिरहिताय च।**
**प्रकृत्यै भवनाशाय ताम्राय परमेष्ठिने ॥१०९॥**

देहार्धकान्ताय—देहस्यार्धं वामभागः कान्तात्मको यस्य स देहार्धकान्तः। भविष्योत्तरपुराणे—

'अर्धं प्रवालरुचिरं हरिनीलमर्धं
नागाजिनाम्बरमथो वरवस्त्रमर्धम्।
कान्तालकार्धमथ दीप्तजटालुमर्धं
दिव्यं महः सततमद्य तवाऽऽश्रयेऽहम्॥'—इति।

'दरिद्र नीललोहित' इति श्रुतिः। षडूर्मिरहिताय—

अशनायापिपासाशोकमोहजरामृत्यवः षडूर्मयः, जननमरणाद्यात्मकसंसारसमुद्रे ऊर्मिवद् अनवरतमुत्पद्यमानत्वात् ; तद्रहितः षडूर्मिरहितः । 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' इति श्रुतिः । प्रकृत्यै—जगदुपादानभूतः परमेश्वरः प्रकृतिः । अयमर्थः सूत्रकारेण निश्चितः—'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' इत्यादिसूत्रपञ्चकेन । विवृतं च भाष्यकारेण संशयपूर्वपक्षप्रदर्शनपूर्वकम्—'प्रकृतिश्चोपादानकारणं च ब्रह्माभ्युपगन्तव्यं निमित्तकारणं च । न केवलं निमित्तकारणमेव । कस्मात् । प्रतिज्ञादृष्टान्तानुपरोधात् । एवं प्रतिज्ञादृष्टान्तौ श्रौतौ नोपरुध्येते । प्रतिज्ञा तावत्—"उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" इति । तत्र चैकेन विज्ञातेन सर्वमन्यदविज्ञातमपि विज्ञातं भवतीति प्रतीयते । तच्चोपादानकारणविज्ञाने सर्वविज्ञानं संभवति' इत्यादिना । भवनाशाय — भवं संसारमविद्यातत्कार्यशोकमोहादिकं तत्त्वमस्यादिवाक्यजन्यप्रत्ययारूढः सन् नाशयतीति भवनाशः । 'भवस्य हेत्यै जगतां पतये' इति श्रुतिः । ताम्राय—अत्यन्तरक्तस्ताम्रः । 'नमस्ताम्राय च' इति श्रुतिः । परमेष्ठिने—परमे प्रकृष्टे सच्चिदानन्दस्वरूपे तिष्ठतीति परमेष्ठी । दक्षिणामूर्त्यादिस्वरूपेण निरन्तरं स्वरूपानुसन्धाता इति यावत् । 'स परमेष्ठी ब्रह्मात्मा' इति श्रुतिः ॥१०९॥

**अनन्तकोटिब्रह्माण्डनायकाय नमो नमः ।**
**एकाकिने निर्मलाय द्रविणाय दमाय च ॥११०॥**

अनन्तकोटिब्रह्माण्डनायकाय—असंख्यातब्रह्माण्डाधिपतिः अनन्तकोटिब्रह्माण्डनायकः । तदुक्तं वासिष्ठे—

'एकस्याऽनेकसङ्घस्य कस्याऽणोरम्बुधेरिव ।
अन्तर्ब्रह्माण्डलक्षाणि लीयन्ते बुद्बुदा इव ॥'

अस्योत्तरम्

अनाख्यत्वादगम्यत्वान्मनःषष्ठेन्द्रियस्थितेः ।
चिन्मात्रमेवमात्माऽणुराकाशादपि सूक्ष्मकः ॥
चिदणोः परमस्याऽन्तः कोटिब्रह्माण्डबुद्बुदाः ।
संभूय स्थितिमभ्यस्य लीयन्ते शक्तिपर्ययात्'—इति ।

अस्यायमर्थः—अत्र अनाख्यत्वादित्यनेनाभिवदनस्य व्यवहारस्य न विषय इत्युक्तम् । अगम्यत्वान्मनःषष्ठेन्द्रियस्थितेरित्यनेनाऽभिज्ञाव्यवहारस्यापि न विषय इत्युक्तम् । एवं चिन्मात्ररूप आत्माणुर्य आकाशादपि सूक्ष्मः एवंभूतपरमचिद्रूपाणोः अन्तः कोटिब्रह्माण्डबुद्बुदा अनुग्राहकचिच्छक्त्या संभूय संगम्य स्थितिमभ्येत्य शक्तिपर्ययात् शक्तिक्षयाद्धेतोर्लीयन्ते इति । 'एष लोकाधिपतिरेष लोकपाल एष लोकेशः' इति श्रुतिः। एकाकिने—एक एव सन् प्रलयकाले वर्तत इति एकाकी । 'यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः' इति श्रुतिः । निर्मलाय—संसारमलान्निर्गत इति निर्मलः । 'शुद्धमपापविद्धम्' इति श्रुतिः । द्रविणाय—द्रविणं वरिष्ठं धनं परमानन्दरूपत्वाद्; वरिष्ठधनवत्सर्वैः प्रार्थनीय इत्यर्थः । 'द्रविणं सुवर्चसम्' इति श्रुतिः । दमाय—दमोऽस्यास्तीति दमः, निगृहीतेन्द्रियग्राम इत्यर्थः; आत्मारामत्वात् ।

'नहि स्वात्मारामं विषयमृगतृष्णा भ्रमयति ।'
—इति शिवरहस्ये । 'नीलकण्ठं प्रशान्तम्' इति श्रुतेः ॥११०॥

नमस्त्रिलोचनायाऽथ शिपिविष्टाय बन्धवे ।
त्रिविष्टपेश्वरायाऽथ नमो व्याघ्रेश्वराय च ॥१११॥

त्रिलोचनाय—त्रीणि सोमसूर्याग्निरूपाणि लोचनानि यस्य स त्रिलोचनः । यद्वा—त्रिषु धामसु जाग्रत्स्वप्नसुषुप्त्यवस्थासु विश्वतैजसप्राज्ञभोक्तृरूपेण स्थूलप्रपञ्चवासनामयानन्दभोग्यरूपेण तत्तद्विषयभोगरूपेण च विद्यमानस्य सर्वस्य लोचनः स्वरूपः, लोचनवत्प्रकाश इत्यर्थः, 'त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् । तेभ्यो विलक्षणः साक्षी' इति श्रुतेः । तदुक्तं सौरसंहितायाम्—

'त्रिमूर्तीनां तु यः कर्ता निस्त्रैगुण्यस्त्रिलोचनः ।
नीलकण्ठो निराधारः शिवः सोमकलाधरः ॥
सृष्टिस्थित्यन्तकार्येषु सर्वेषूपकरोति वै ।
निस्त्रैगुण्ये परे तत्त्वे साम्बमूर्त्युपलक्ष्यते ॥
स्वात्मभूतमतिर्येषां तेषामेव परा गतिः ।'—इति ।

'परमेश्वरं प्रभुं त्रिलोचनम्' इति श्रुतिः । शिपिविष्टाय—विष्णुमूर्तिधारी शिपिविष्टः, 'विष्णुः शिपिविष्टः' इति श्रुतेः । अथवा—शिपिषु रश्मिषु विष्टः प्रविष्ट इति शिपिविष्टः । तदुक्तं स्कान्दे—

"'शैत्याच्छयनयोगाच्च शिपि वारि प्रचक्षते ।
तत्पानाद्रक्षणाच्चापि शिपियो रश्मयो मताः ।
तेषु प्रविष्टः सविता शिपिविष्ट इहोच्यते ॥'—इति ।

तादृशसूर्यरूपाच्छिपिविष्टः । शिपिः पशुः तत्र प्रतिष्ठा यस्य यज्ञरूपेणेति वा शिपिविष्टो यज्ञमूर्तिः, 'यज्ञो वै विष्णुः पशवः शिपिर्यज्ञ एव पशुषु प्रतितिष्ठति इति श्रुतेः । यद्वा—शिपिः पशवः, 'पशवः शिपिः' इति श्रुतेः; तेषु पशुषु द्विपात्सु चतुष्पात्सु च सर्वप्राणिषु अन्तर्यामित्वेन प्रविष्ट इति शिपिविष्टः । 'नमो

गिरिशाय च शिपिविष्टाय च' इति श्रुतिः। बन्धवे—आधारभूते परमेश्वरे सर्वलोका बाध्यन्ते इति बन्धुः। बन्धुकृत्यं हिताहितोपदेशं श्रुतिस्मृतिलक्षणं कृतवानिति वा। 'स नो बन्धुर्जनिता' इति श्रुतिः।

त्रिविष्टपेश्वराय—त्रिविष्टपस्य स्वर्गस्य ईश्वर इन्द्रः, तद्रूपत्वात्; 'इन्द्रं मित्रं वरुणमग्निमाहुः' इति श्रुतेः। यद्वा—त्रयाणां विष्टपानामीश्वरः, 'एष लोकेशः' इति श्रुतेः। यद्वा—तृतीयं त्रिष्टपं भुवनं स्वर्गलोकः पाल्यत्वेन यस्य स त्रिविष्टपः, दिवस्पतित्वेन स्थापितो लिङ्गरूपी ईश्वरः त्रिविष्टपेश्वरः। शिवधर्मोत्तरे—

'शक्रोऽपि देवराजेन्द्रो लिङ्गं मणिमयं शुभम्।
भक्त्या पूजयते नित्यं तेन शक्रत्वमाप्तवान्॥'—इति।

व्याघ्रेश्वराय—व्याघ्रेण पूजितो लिङ्गरूपी ईश्वरो व्याघ्रेश्वरः। यद्वा—'भीमो भीमसेनवत्' व्याघ्रशब्देन 'व्याघ्रपादः' ऋषिरुच्यते, तेन स्थापित ईश्वरः व्याघ्रेश्वरः। तदुक्तं स्कान्दे चिदम्बरमाहात्म्ये—मध्यन्दिननामको ऋषिः। तस्य पुत्रः सुजन्मा। स तु तिल्लवने गत्वा तत्र शिवलिङ्गं प्रतिष्ठाप्य तल्लिङ्गं श्रीमूलस्थानलिङ्गं च पूजितवान्। तं प्रत्याविर्भूतेन शिवेन वरं वृणीष्वेत्युक्तः स पुष्पग्रहणार्थं वृक्षारोहणसौकर्याय व्याघ्रपादवत् स्वस्य पादौ प्रार्थितवान्। तद्दत्तं शिवेन। ततः प्रभृति तस्य 'व्याघ्रपादः' इति नामाऽभूत्, तत्प्रतिष्ठितलिङ्गस्याऽपि 'व्याघ्रेश्वरः' इति, तिल्लवनस्यापि 'व्याघ्रपुरम्' इति च—इत्येतत्सर्वं प्रसिद्धम्॥१११॥

**विश्वेश्वराय दात्रे ते नमश्चन्द्रेश्वराय च।**
**व्यासेश्वराय युधिने यज्ञकेशाय ते नमः॥११२॥**

विश्वेश्वराय—विश्वेश्वरः काश्यां लिङ्गरूपी प्रसिद्धः। दात्रे—शिवपूजादिपराणां शीघ्रफलदाता। 'फलमुक्तिप्रदायिनम्' इति श्रुतिः। चन्द्रेश्वराय—चन्द्रेण स्थापित ईश्वरश्चन्द्रेश्वरः। व्यासेश्वराय—काश्यादिस्थाने व्यासेन स्थापित ईश्वरो व्यासेश्वरः। युधिने—युत् युद्धं जयकरमस्यास्तीति युधी; यान् प्रति भक्ता द्वेषं कुर्वन्ति ये च भक्तान् प्रति द्वेषं कुर्वन्ति, तान् प्रति निग्राहक इति यावत्। 'यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दध्मः' इति श्रुतिः। यज्ञकेशाय—यज्ञो विष्णुः, 'यज्ञो वै विष्णुः' इति श्रुतेः, कः ब्रह्मा, 'मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोः' इत्यमरोक्तेः; तदनुग्रहार्थं लिङ्गरूपेण प्रादुर्भूत ईशो यज्ञकेशः। तदुक्तं स्कान्दे—

'माघकृष्णचतुर्दश्यां तयोर्मध्ये महानिशि।
आत्मानं दर्शयामास लिङ्गरूपी महेश्वरः॥'—इति।

'तदद्भुतं महद् दृष्ट्वा ब्रह्मविष्णू परस्परम्।
ऊचतुर्विस्मयाविष्टौ दृष्ट्वा लिङ्गं तदा किल॥
कृत्वा बहुविधं स्तोत्रं कृताञ्जलिपुटौ स्थितौ।
हरिकेशस्तदा ताभ्यां भक्त्या परमयार्चितः॥'—इति॥११२॥

**जैगीषव्येश्वरायाऽथ दिवोदासेश्वराय च**
**नागेश्वराय न्यायाय न्यायनिर्वाहकाय च॥११३॥**

जैगीषव्येश्वराय—जैगीषव्यो महायोगी। तस्य महायोगित्वं षडुत्तराध्यायव्याख्यानावसरे श्रीविद्यारण्यगुरुभिर्जैगीषव्यो महायोगीति व्याख्यानप्रदर्शनेन प्रकटीकृतम्। तेन प्रतिष्ठापित ईश्वरः काश्यादौ जैगीषव्येश्वरः। दिवोदासेश्वराय—दिवोदासः प्रतर्दनपिता श्रुतिप्रसिद्धः, 'काशीराजः प्रतर्दनो ह वै दैवो-

दासिः' इति श्रुतेः; तेन प्रतिष्ठापितो दिवोदासेश्वरः। नागेश्वराय—नागेन पतञ्जलितक्षकादिना काशीपुण्डरीकपुरकावेरीतीरादिषु लिङ्गरूपेण प्रतिष्ठापितो नागेश्वरः। एवमन्यैर्देवासुरमनुष्यगन्धर्वपिशाचादिभिः प्रतिष्ठापितानि लिङ्गानि बहूनि पशुपक्षिमृगादिभिः पूजितानि च काशीखण्डादिषु द्रष्टव्यानि। शिवरहस्ये विष्णुः—

'लिङ्गपूजैव कर्तव्या मुमुक्षुभिरहर्निशम्।
बहवो मोक्षमापन्नाः शिवलिङ्गस्य पूजया॥
देवैर्नरैश्च गन्धर्वैर्मुनिभिश्च मुमुक्षुभिः।
अप्रमादेन कर्तव्या लिङ्गपूजैव सर्वदा॥'—इति

तथा शिवधर्मोत्तरे—

'ब्रह्मा पूजयते नित्यं लिङ्गं शैलमयं शुभम्।
तस्य संपूजनात्तेन प्राप्तं ब्रह्मत्वमुत्तमम्॥
शक्रोऽपि देवराजेन्द्रो लिङ्गं मणिमयं शुभम्।
भक्त्या पूजयते नित्यं तेन शक्रत्वमाप्तवान्॥
इन्द्रनीलमयं लिङ्गं विष्णुः पूजयते सदा।
विष्णुत्वं प्राप्तवांस्तेन सोऽद्भुतैकं सनातनम्॥'

एवं वरुणः कांस्यलिङ्गम्, लिङ्गमन्नमयं पुण्यमग्निः, ताम्रं लिङ्गं दिवाकरः, मुक्ताफलमयं लिङ्गं सोमः, प्रवालमयं पन्नगोत्तमाः, कार्ष्णायसमसुरोत्तमाः, त्रपुसीसमयं पिशाचाः, त्रैलोहिकमयं गुह्यकोत्तमाः, बहुलोहमयं मातरः। एवं सर्वे पूजां कृत्वा तत्तत्फलं लब्धवन्त इति प्रसिद्धम्। 'त्रिविष्टपेश्वरः' इत्यादीश्वरघटितनामनवकस्य श्रुतिः 'तव श्रिये मरुतः' इति पूर्वमुदाहृता। न्यायाय—प्रमाणानुग्राहकस्तर्को न्यायः। तदनुगृही-

तोपनिषदेकसमधिगम्यत्वात् लक्षितलक्षणया परमेश्वरोऽपि न्यायः, 'तं त्वौपनिषदं पुरुषम्' इति श्रुतेः। यद्वा–नीयते प्राप्यते गम्यते ज्ञायतेऽनेन इति न्यायो वेदान्तः, तद्वेद्यत्वात् लक्षणया परशिवोऽपि न्यायः; 'वेदैरनेकैरहमेव वेद्यः' इति श्रुतेः। यद्वा–नीयते प्राप्यते सर्वैः प्रलयकाले इति न्यायः परमेश्वर एव, 'यत्प्रयन्त्यभिसंविशन्ति' इति श्रुतेः। न्यायनिर्वाहकाय—न्यायस्य मानानुग्राहकस्य तर्कस्य निर्वाहका व्यासजैमनिप्रभृतयः, तद्रूपत्वान्न्यायनिर्वाहकः। यद्वा–नीयते प्राप्यते सुखमनेनेति न्यायो धर्मः तन्निर्वाहकः तत्प्रतिपादकश्रुतिकर्तृत्वात्। 'अस्य महतो भूतस्य' इत्यादिश्रुतिः ॥ १३१ ॥

**शरण्याय सुपात्राय कालचक्रप्रवर्तिने ।**
**विचक्षणाय दंष्ट्राय वेदाश्वाय नमो नमः ॥११४॥**

शरण्याय—शरणं परायणं प्राप्यस्थानं न दहतीति शरण्यः। 'सर्वस्य प्रभुमीशानं सर्वस्य शरणं बृहत्' इति श्रुतिः। सुपात्राय—शोभनं पात्रं सुपात्रं। शोभनपात्रत्वं स्वेनैवोक्तं शिवगीतायाम्—

'पुष्पं फलं सुमूलं वा पत्रं सलिलमेव वा ।
यो दद्यात् प्रणवैर्मह्यं तत्कोटिगुणितं भवेत् ॥'—इति ।

यद्वा—शोभनं पात्रं कपिलादि विद्याप्रदानेन यस्य स सुपात्रः। तदुक्तम्—

'युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा ॥'—इति ।

स्वयंभूः परशिवः। 'ऋषिं प्रसूतं कपिलं यस्तदग्रज्ञानैर्बिभर्ति जायमानं च पश्येत्' इति श्रुतिः। अस्यार्थः—ऋषिं कपिल-

नामकं सांख्यसूत्रकर्तारम्, 'सांख्यानां कपिलो देवः' इति स्मरणात्। अथवा—सगरपुत्राणां प्रतप्ता वासुदेवांशः 'कपिलर्षिर्भगवतः सर्वभूतस्य वै किल। विष्णोरंशो जगन्मोहनाशाय समुपागतः ॥' इति स्मरणात्। तं ज्ञानैर्धर्मज्ञानवैराग्यैश्वर्यैः, बिभर्ति बभार। जायमानं च पश्येदपश्यमिति। यद्वा—'ब्रह्मा देवानां प्रथमः संबभूवः विश्वस्य कर्ता भुवनस्य गोप्ता। स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह ॥ अथर्वणे यां प्रवदेत ब्रह्माऽथर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम्। स भारद्वाजाय सत्यवाहाय प्राह भारद्वाजोऽङ्गिरसे परावराम्॥ शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ।' इति तत्सम्प्रदायप्रवर्तकः ब्रह्मा शोभनं विद्यापात्रं यस्य स तथा, 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति श्रुतेः। कालचक्रप्रवर्त्तिने—कालः निमेषकाष्ठाकलामुहूर्ताहोरात्रपक्षमासर्त्वयनवत्सरयुगमन्वन्तरकल्पादिः स एव चक्रवत् पुनः पुनः परिवर्तमानश्चक्रमित्युच्यते, तस्य प्रवर्तयिता सूर्यरूपेण कालचक्रप्रवर्ती; 'कालचक्रप्रणेतारं श्रीसूर्यनारायणं य एवं वेद' इति श्रुतेः। यद्वा—कालः संवत्सरात्मा प्रजापतिः। यस्मिन् कालात्मनि सर्वमिदं जगदर्पितं स एव कालात्मा चक्रस्वरूपः, करस्थानीयषड़ृतुमत्त्वात् सन्ततगतिमत्त्वाच्च स सर्वात्मककालचक्रात्मकस्वरूपः। तत्र श्रुतिः 'सप्तचक्रे षडर आहुरर्पितम्' इति। सप्तचक्रे सन्ततगतिमति। तस्य प्रवर्तयिता कालचक्रप्रवर्ती; 'येनेदं भ्राम्यते ब्रह्मचक्रम्' इति श्रुतेः। विचक्षणाय—विचक्षणो निपुणः सर्वज्ञ इति यावत्। दंष्ट्राय—दंष्ट्रे दंष्ट्रा वा अस्य सन्तीति दंष्ट्रः।

'दंष्ट्राकरालवदनं ज्वलदनलमूर्धजम्।
त्रिभ्राणं त्रिशिखं दीप्तं ध्यायेद्भुजगभूषणम् ॥'

—इति रहस्यम्। 'तं वो जम्भे दध्मः' इति श्रुतिः।

वेदाश्वाय—ऋग्यजुःसामाथर्वनामका वेदा अश्वा यस्य स तथा। पाद्मे—

'जगतीं तु रथं कृत्वा संयोज्य श्रुतिवाजिनः।'—इति।

'अश्वीकृतस्वीकृतवेदराशि-
र्नाङ्गीकृताङ्गीकृतशम्बरारिः।
अस्त्रीकृतस्त्रीकृतदानवारिः
पायात्स नो दैवतसार्वभौमः॥'

—इति शिवरहस्ये प्रथमांशे। 'नमोऽश्वेभ्योऽश्वपतिभ्यश्च वो नमः' इति श्रुतिः॥ ११४॥

## ॥ इति षष्ठशतकभाष्यम्॥

---

# ॥ अथ सप्तमशतकभाष्यम्॥

**नीलजीमूतदेहाय परात्मज्योतिषे नमः।**
**शरणागतपालाय महाबलपराय च॥११५॥**

नीलजीमूतदेहाय—नीलजीमूतो नीलमेघः, तादृशो देहो यस्य स तथा नीलमेघश्याम इति यावत्। यथोक्तं ब्रह्माण्डपुराणे—'भण्डासुरपीडिता ब्रह्मविष्णुरुद्रेन्द्रादय ऊर्ध्वाण्डं बहुप्रयत्नेन भित्वाऽण्डाद् बहिर्निर्गतास्तत्र महाकाशरूपेण विद्यमानं पराशक्तिसहितं परशम्भुं स्तुवन्तः।

'तदानीमाविर्बभूव भगवान् परशक्त्या निषेवितः।

कालमेघसमच्छायः स्कन्धशूलकपालधृक् ।
द्विभुजश्च त्रिनेत्रश्च स्मयमानमुखाम्बुजः ॥'—इति ।

'कृष्णाय पिङ्गलाय' इति श्रुतिः। परात्मज्योतिषे—परश्चासौ आत्मा च परात्मा, तद्रूपं ज्योतिः प्रकाशः परात्मज्योतिः, सच्चिदानन्दपूर्णात्मेत्यर्थः । 'सच्चिदानन्दपूर्णात्मानं परमात्मानम्' इति श्रुतिः । शरणागतपालाय - शरणत्वेन आश्रयत्वेनाऽस्माकं रक्षक इति मत्वा गतानां कालकूटविषादिना भीतानां विष्ण्वादीनां पालकः शरणागतपालकः । 'एष भूताधिपतिरेष भूतपालः' इति श्रुतिः । महाबलपराय—महद्बलं शारीरसामर्थ्यं सैन्यरूपं वा येषां ते महाबला इन्द्रोपेन्द्रप्रभृतयः तेषां परः श्रेष्ठः परमेश्वरः । तथा हि—इन्द्रस्य पर्वतभेदनम्, कृष्णरूपिणो विष्णोर्गोवर्धनधारणम्, कमठरूपिणो मन्दरोद्धारणम्, वराहरूपिणो भूम्युद्धारणम्, त्रिविक्रमरूपिणोऽण्डभेदनम्; एवं वायुहनुमत्प्रभृतीनां पर्वतादिचालनानयनादिकं च शारीरबलम्; एवमिन्द्रस्य वसुरुद्रादित्यादिगणदेवतादिनियमितं सैन्यबलम्; विष्णोर्विश्वक्सेनजयविजयादिनियमितम्; एवं धर्मराजादीनामपि मृत्युचित्रगुप्तादिनियमितं यथायोग्यं पुराणादिष्ववगन्तव्यम् । एवं बलद्वययुतानामपि विष्णुजिष्ण्वादीनां कालकूटविषत्रिपुरादिकृतार्तिमतामीषत्प्रयत्नेन आर्तेर्निवारकत्वात् महाबलपरत्वम् । 'तमीश्वराणां परमं महेश्वरम्' इति श्रुतिः ॥ ११५ ॥

सर्वपापहरायाऽथ महानादाय ते नमः ।
कृष्णस्य जयदात्रे ते बिल्वकेशाय ते नमः॥११६॥

सर्वपापहराय—सर्वाणि पापानि महापातकातिपातका-

दीनि हरति स्वनामसहस्रशतरुद्रियादिजपकीर्तनपराणामिति सर्वपाण रः।

'स्तेयं कृत्वा गुरुदारां च गत्वा
सुरां पीत्वा ब्रह्महत्यां च कृत्वा।
भस्मच्छन्नो भस्मशय्याशयानो
रुद्राध्यायी मुच्यते सर्वपापैः ॥'—इति।

अत्र शङ्खः—'रहसि कृतानां महापातकानामपि शतरुद्रियं प्रायश्चित्तम्' इति।

'नामसङ्कीर्तनाद्यस्य भिद्यते पापपञ्जरम् ।'—इति च। 'यः शतरुद्रियमधीते सोऽग्निपूतो भवति स वायुपूतो भवति स आत्मपूतो भवति स सुरापानात् पूतो भवति स ब्रह्महत्यायाः पूतो भवति स स्वर्णस्तेयात्पूतो भवति' इति श्रुतिः। **महानादाय**—महान्तो नादाः शब्दास्तत्त्वमस्यादिमहावाक्यानि प्रतिपादकत्वेन यस्य स महानादः ; वाक्यस्य महत्त्वं प्रत्यगभिन्नब्रह्मप्रतिपादकत्वात्। **कृष्णस्य जयदात्रे**—कृष्णस्य विष्णोः असुरजये चक्रप्रदानेन कृष्णस्य जयदाता इत्यर्थः। तदुक्तम् आदित्यपुराणे—'देवासुराणां संग्रामः, असुरैर्देवानां पराभवः, तदनु देवानां विष्णुं प्रति गमनम् , स्तुतिरसुरनिग्रहप्रार्थना च, तदनु शिवलिङ्गप्रतिष्ठापनपूर्वकं भवादिनामसहस्रेण पुण्डरीकैः शिवपूजनम्। तत्रैकस्मिन् पुण्डरीके शिवेन तिरोहिते तत्स्थाने विष्णुना नेत्रार्पणम् , अनन्तरं शिवाविर्भावः, शिवेन चक्रप्रदानं कमलनिभनेत्रप्रदानं चेति। 'वरदं वरेण्यम्' इति श्रुतिः। **बिल्वकेशाय**—बिल्वकनामक ईशो बिल्वकेशः गङ्गातीरे प्रसिद्धः। उक्तं च पुराणे—

'गङ्गाद्वारे कुशावर्ते बिल्वके नीलपर्वते।
स्नात्वा कनखले तीर्थे पुनर्जन्म न विद्यते ॥'—इति।

'तव श्रिये मरुतः' इति श्रुतिः ॥ ११६ ॥

**दिव्यभोगाय दूताय कोविदाय नमो नमः ।**
**कामपाशाय चित्राय चित्राङ्गाय नमो नमः ॥११७॥**

दिव्यभोगाय—दिव्या अप्राकृता देवयोग्याः परशिव-गौरीसङ्कल्पमात्रनिष्पन्नाः शिवरहस्ये तृतीयांशे प्रसिद्धा यस्य स दिव्यभोगः । 'अथ कस्मादुच्यते भगवान्', 'यः सर्वान् भावानीक्षते' 'सत्यकामः सत्यसङ्कल्पः' इत्येवमादिश्रुतिः । दूताय—दूतः परसैन्यवृत्तान्तज्ञानकुशलः सन्देशहराग्निरूपी वा ; यद्वा—शिवस्य साक्षाद्दूतत्वं देवीमाहात्म्ये प्रसिद्धम् । 'नमो दूताय च प्रहिताय च' इति श्रुतिः । कोविदाय—कोविदः सर्वज्ञः । कामपाशाय - कामः रागस्तत्स्वरूपः पाशः रज्जुविशेष आयुधस्थानीयो यस्य स कामपाश इति ।

'ब्रह्माद्याः स्थावरान्ताश्च पशवः परिकीर्तिताः ।
तेषां पतित्वाद्विश्वेशो भवः पशुपतिः स्मृतः ॥
मायापाशेन बध्नामि पशूनेतान् सरस्वति ।'

—इति पुराणे । 'पशूनां पतये नमः' इति श्रुतिः । चित्राय—आश्चर्यप्रपञ्चचित्रवत्त्वात् चित्रः । यथोक्तं वासिष्ठे-

'अकर्तृकमरङ्गं च गगने चित्रमुत्थितम् ।
अद्रष्टृकं स्वानुभवं ... ... ... ॥'—इति ।

अस्यार्थः— लोके चित्रं केनचिच्छिल्पिवरेण रञ्जनद्रव्येण कस्मिंश्चिद्भित्तिविशेषे कृतं सत् सर्वैर्दृश्यमानं भवति । इदं तु जगच्चित्रमकर्तृकं परमार्थत ईश्वरेणाकृतत्वात् । अतएव अरङ्गम्—रञ्जनद्रव्यहीनम् । गगने—गगनोपमे अतिसूक्ष्मे निःसङ्गे ।

उत्थितम्—आविर्भूतम् । अद्रष्टृकम्, प्रपञ्चापेक्षया द्रष्टुरन्यस्याभावात् । ननु अनुभूयमानत्वात् कथमिदमत आह—स्वानुभवमिति । समस्तप्रपञ्चस्यानुभवात्मन्यध्यासकाल एवानुभूयमानत्वात् सुषुप्तिसमाधिकालादावभावाददोषः । 'मायामात्रमिदं द्वैतमद्वैतं परमार्थतः' इति श्रुतिः । चित्राङ्गाय—ईशानादिपञ्चब्रह्मावयवभूताष्टत्रिंशत्कलात्मकानि शिरःपाण्यादीनि अङ्गानि यस्य स चित्राङ्गः, द्वात्रिंशल्लक्षणयुक्तातिसुन्दराङ्गो वा ; स्त्रीपुंरूपात्मकत्वाद्वा । 'पुरुषं कृष्णपिङ्गलम्' इत्यादिश्रुतिः ॥ ११७ ॥

**नमो मातामहायाऽथ नमस्ते मातरिश्वने ।**
**निःसङ्गाय सुनेत्राय विद्येशाय जयाय च ॥११८॥**

मातामहाय—मातुः पिता मातामहः । चतुर्विधभूतग्रामस्य पार्थिवस्य माता पृथिवी, तस्याः पिता मातामहः । 'स भूमिमसृजत' इति श्रुतिः । पृथिव्या मातृत्वे 'त्वं वै माता' इति श्रुतिः । यद्वा चराचरात्मकस्य सर्वस्यापि जगतः जगदङ्कुरावस्थापन्ना मायाशक्तिरव्यक्तशब्दवाच्या मातृस्थानीया, तस्याः कारणं जनकः परमेश्वरः; 'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम' इति स्मृतेः । तद्धेदं तर्ह्यव्याकृतमसीत् 'तन्नामरूपाभ्यामेव व्याक्रियते' इति श्रुतिः । मातरिश्वने—मातरि आकाशे श्वयतीति मातरिश्वा वायुः, तद्रूपत्वात्तद्रूपत्वम् । वायुभावापन्नस्य परमेश्वरस्याग्न्यादिजगत्कारणत्वात्, 'वायोरग्निः' इति श्रुतेः ; शिवस्याष्टमूर्त्यात्मकत्वात् तदन्तःप्रविष्टत्वाद् वायुरूपत्वम् ।

'त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवह-
स्त्वमापस्त्वं व्योम त्वमु धरणिरात्मा त्वमिति च ।'

—इति शिवरहस्ये। 'स एव विष्णुः स प्राणः' इति श्रुतिः। निःसङ्गाय—सङ्गरहितो निःसङ्गः। 'असङ्गो ह्ययं पुरुषः' इति श्रुतिः। सुनेत्राय—शोभनं नेत्रं सर्वदा वस्तुप्रकाशनरूपं चैतन्यात्मकं स्वरूपत्वेन यस्य स सुनेत्रः। 'यः सर्वज्ञः स सर्ववित्' इति श्रुतिः। विद्येशाय—विद्या अष्टादश विद्याः, ताश्चोक्ताः—

'अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश॥
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेत्यनुक्रमात्।
अर्थशास्त्रं ततश्चैता विद्या ह्यष्टादश स्मृताः॥'

इति; तासामीशः कर्ता विद्येशः।

'अष्टादशानामेतासां विद्यानां भिन्नवर्त्मनाम्।
आदिकर्ता शिवः साक्षाच्छूलपाणिर्महेश्वरः॥'—इति।

यद्वा—ब्रह्मविद्यानामिकाया ईशः श्वेतारण्येश्वरनामको लिङ्गरूपी श्वेतारण्यवासी पुराणे प्रसिद्धः। यद्वा—अनन्तेशसूक्ष्मेशशिवोत्तमैकनेत्रैकरुद्रत्रिमूर्तिश्रीकण्ठशिखण्डाख्या अष्टौ विद्येशा आगमप्रसिद्धास्तद्रूपी इति। अथवा विद्या उमा। तदुक्तम्—

'विद्यारूपामुमां देवीं महाकारुणिकोत्तमाम्।'

इति पुराणे। यद्वा—सर्वासां विद्यानां श्रुत्यादीनां तत्प्रतिपादितानां सगुणनिर्गुणानां च ईशः उपदेष्टा गुरुः। 'ईशानः सर्वविद्यानाम्' इति श्रुतिः। जयाय—जयति अभिभवति रिपूनिति जयः। 'जेतारमपराजितम्' इति श्रुतिः॥ ११८॥

**व्याजसंमर्दनायाऽथ मध्यस्थाय नमो नमः।**
**अङ्गुष्ठशिरसा लङ्कानाथदर्पहराय च॥११९॥**

**व्याजसंमर्दनाय**—व्याजस्य कपटस्य आविद्यकस्य महामोहात्मकस्य संसारस्य श्रवणमननिदिध्यासनजन्यब्रह्मप्रतिफलितः सन् सम्यक् मर्दयिता व्याजसंमर्दनः। 'तमेवं ज्ञात्वा मृत्युपाशान् छिनत्ति' इति श्रुतिः। **मध्यस्थाय**—मध्ये तिष्ठतीति मध्यस्थः; वादिप्रतिवादिनोर्मध्ये स्थित्वा विवादपदनिर्णेता यथा मध्यस्थः, एवमीश्वरोऽपीत्यर्थः। ननु ईश्वरस्य कथं माध्यस्थ्यम्? कांश्चिदत्यन्तसुखभाजः करोति—देवान्, कांश्चिदत्यन्तदुःखभाजः—पश्वादीन्, कांश्चिच्च मध्यमभाजो मनुष्यादीन्। नैष दोषः। तत्तत्कर्मानुसारेण तथा करोतीश्वरः। 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन' इति श्रुतिः। **अङ्गुष्ठशिरसा लङ्कानाथदर्पहराय**—अङ्गुष्ठशिरसा पादाङ्गुष्ठाग्रेण लङ्कानाथस्य रावणस्य दर्पं गर्वं हरतीति लङ्कानाथदर्पहरः। इदं च रामायणादौ प्रसिद्धम्। शिवरहस्ये—

'अमुष्य त्वत्सेवासमधिगतसारं भुजवलं
बलात्कैलासेऽपि त्वदधिवसतौ विक्रमयतः।
अलभ्या पातालेऽप्यलसचलिताङ्गुष्ठशिरसि
प्रतिष्ठा त्वय्यासीद् ध्रुवमुपचितो मुह्यति खलः॥'—इति।

'नमः सहमानाय निव्याधिने' इति श्रुतिः॥११९॥

**वैयाघ्रपुरवासाय नमः सर्वेश्वराय च।**
**नमः परावरेशाय जगत्स्थावरमूर्तये॥१२०॥**

**वैयाघ्रपुरवासाय**—व्याघ्रपादनामर्षिसम्बन्धिपुरं वैयाघ्रपुरम्—तदेव विराजो हृदयपुण्डरीकस्थानम्। तदेव चिदम्बरमिति प्रसिद्धम्। ब्रह्मपुरनामक्षेत्रादुत्तरदिग्भागे योजनसमीपे उत्तरकावेर्या उत्तरदिग्भागे तिल्लवनमिति च प्रसिद्धम्—तस्मिन्

श्रीमूलस्थाननामकनाथकलिङ्गरूपेण भक्तानामानन्दनटप्रदर्शनार्थं वसतीति वैयाघ्रपुरवासः। एवं विराजः हृदयपुण्डरीके आधिभौतिके व्याघ्रपादपतञ्जलिप्रभृतिभिस्त्रिसहस्रमुनीश्वरैः अन्यैर्हिरण्यगर्भादिभिर्भक्तैश्च सेवित इत्यनेकपुराणेषु प्रसिद्धम्। स एव परमेश्वर आध्यात्मिके हृदयपुण्डरीके योगिभिः सेव्य इति श्रुतिषु—'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' इत्येवमादिच्छान्दोग्य-बृहदारण्यक-तैत्तिरीयक-कैवल्यादिषु प्रसिद्धम्। सर्वेश्वराय—सर्वस्य चेतनाचेतनात्मकस्य जगत ईश्वरो नियन्ता सर्वेश्वरः। स्कान्दे—

'विश्वम्भरा वारिशिखिमरुद्व्योम ··विन्।
अधिष्ठाय जगत्सर्वं सृजते ग्रसते नमः॥
त्वं कर्ता सर्वलोकानां भर्ता हर्ता नियामकः।
भुक्तिदो मुक्तिदस्त्वं च सिद्धिदः सिद्धवन्दितः॥
सर्वैश्वर्येण सम्पन्नो नाम्ना सर्वेश्वरः श्रुतः।'—इति।

'एष सर्वेश्वर एष सर्वज्ञः' इति श्रुतिः। परावरेशाय—अस्मदाद्यपेक्षया परे विराडादयो यस्मादवरे स परावरः परमेश्वरः, स चासावीशश्च परावरेशः। परे विराडादयोऽपरेऽस्मदादयस्तेषामीश इति वा। सर्वैश्वर्यसम्पन्नः सर्वेश्वरश्चेति। 'तस्मिन् दृष्टे परावरे' इति श्रुतिः। जगत्स्थावरमूर्तये—जगच्छब्देन जङ्गमाः प्राणिन उच्यन्ते, स्थावरशब्देन च वृक्षगुल्मलतादयः। जगद्रूपाः स्थावररूपाश्च मूर्तयो यस्य स जगत्स्थावरमूर्तिः। शैवे विष्णुं प्रति शिवः—

'अहं हि सर्वजन्तूनामात्मा सर्वत्र संस्थितः।
अन्तर्बहिश्च भूतानामहमेव न चाऽपरः॥

मया विना हरे नाऽस्ति न किञ्चिदिह विद्यते ।'—इति ।
'विग्रहो देवदेवस्य विश्वमेतच्चराचरम् ।'

—इति चाऽन्यत्र । 'द्वे वा ब्रह्मणो रूपे मूर्तं चैवाऽमूर्तं च' इति श्रुतिः ॥ १२० ॥

**नमोऽप्यनुपमेशाय शार्ङ्गिणे विष्णुमूर्तये ।**
**नारायणाय रामाय सुदीप्ताय नमो नमः ॥१२१॥**

अनुपमेशाय—न विद्यते उपमा येषां ते अनुपमा ब्रह्मविष्णुरुद्राः सृष्टिस्थितिसंहारकर्तारस्तेषामीशः अनुपमेशः । 'तमीश्वराणां परमं महेश्वरम्' इति श्रुतिः । न विद्यते उपमा यस्य सोऽनुपमः, स चासावीशश्च इति वा, 'न तत्समश्चाभ्यधिकश्च विद्यते' इति श्रुतेः ।

शार्ङ्गिणे—शार्ङ्गं शृङ्गविकारो धनुरस्य इति शार्ङ्गी । यद्वा-तपस्यतः कण्वस्य शिरःप्रदेशोद्भूतात् वल्मीकादुत्पन्नेन वेणुना शिवविष्णुसोमानुद्दिश्य ब्रह्मणा प्रणीतेषु त्रिषु चापेषु द्वितीयं धनुः शार्ङ्गम् । यथोक्तम् उमामहेश्वरसंवादे—

'युगान्ते च महादेवि कण्वो नाम महामुनिः ।
स हि दिव्यां तपश्चर्यां कर्तुमेवोपचक्रमे ॥'

—इत्यारभ्य—

'पिनाकं नाम मे चापः शार्ङ्गं नाम हरेर्धनुः ।
तृतीयमवशेषेण गाण्डीवमभवद्धनुः ॥'

—इत्यन्तेन, तद्वान् शार्ङ्गी ; तद्रूपी शिवः । तदेवाह । विष्णुमूर्तये—विष्णोर्मूर्तिरिव मूर्तिर्यस्य स विष्णुमूर्तिः ।

परशिव एव विष्णुरूपेण वर्तते, 'स एव विष्णुः स प्राणः' इति श्रुतेः । ब्रह्माण्डपुराणे वरदानार्थमागतं शिवं प्रति परशुरामः—

'श्रीकण्ठाय जगद्धात्रे लोककर्त्रे नमो नमः ।
रजोगुणात्मने तुभ्यं विश्वसृष्टिविधायिने ॥
हिरण्यगर्भरूपाय हराय जगदादये ।
नमो विश्वात्मने लोके स्थितिव्यापारकारिणे ॥'—इति ।

नारायणाय—नर आत्मा ततो जातानि आकाशादीनि नाराणि, तानि कार्याण्ययति कारणात्मना व्याप्नोति, अतश्च तान्यस्यायनमिति नारायणः, 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति श्रुतेः ।

'नराज्जातानि तत्त्वानि नाराणीति ततो विदुः ।
तान्येव चायनं तस्य तेन नारायणः स्मृतः ॥'

—इति महाभारते । अथवा नराज्जातानि नाराणि तेषामयनं लयस्थानम् , 'यत्प्रयन्त्यभिसंविशन्ति' इति श्रुतेः ।

'नारायणाय नम इत्ययमेव मन्त्रः
संसारघोरविषसंहरणाय दक्षः ।
शृण्वन्तु भव्यमतयो यतयोऽस्तरागा
उच्चैस्तरामुपदिशाम्यहमूर्ध्वबाहुः ॥'

—इति नारसिंहपुराणे । 'नारायणः परं ब्रह्म' इति श्रुतिः । रामाय—नित्यानन्दलक्षणत्वेन योगिनो रमन्तेऽस्मिन्निति रामः । स्वेच्छया रमणीयोमासहायादिवपुर्वहनाद्वा रामः । अथवा रमयति आनन्दयति सर्वानिति रामः, 'एष ह्येवानन्दयति' इति श्रुतेः । सुदीप्ताय—सर्वप्रकाशत्वेन प्रमाणं विना सर्वदा

दीप्त इति सुदीप्तः । 'दीप्ताय दीप्तरूपिणे' इति श्रुतिः ॥१२१॥

**नमो ब्रह्माण्डमालाय गोधराय वरूथिने ।**
**नमः सोमाय कूप्याय नमः पातालवासिने ॥१२२॥**

**ब्रह्माण्डमालाय**—ब्रह्माण्डैरनेकैः पुष्पस्थानीयैः एकेन मालारचनाऽसम्भवात् रचिता माला यस्य स ब्रह्माण्डमालः । अनेन नाम्ना युगपदनेकब्रह्माण्डोत्पादकत्वपालकत्वनियन्तृत्वादिकं सूचितम् । 'सर्वलोकानीशत ईशनीभिः' इति श्रुतिः । **गोधराय**—गावो वाग्रूपाः श्रुतिस्मृतीतिहासपुराणादयस्ताः प्रलयकालेऽपि धरतीति गोधरः ।

'युगान्तेऽन्तर्हितान् वेदान्सेतिहासान् महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा ॥'

—इति स्मरणात्, यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति श्रुतेश्च । **वरूथिने**—रथगुप्तिस्थानं वरूथस्तद्वान् वरूथी, तद्रूपीत्यर्थः । 'नमो वर्मिणे च वरूथिने च' इति श्रुतिः । **सोमाय**—उमा संविद्रूपा परा शक्तिः, तया सह सर्वदा वर्तत इति सोमः । ननु शक्तेर्जडरूपत्वात् कथं संविद्रूपत्वमिति चेत्, उच्यते ; द्विविधा हि शक्तयः—चिच्छक्तिर्जडशक्तिश्चेति । जडशक्तिर्माया, 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति श्रुतेः । चिच्छक्तिः परशिवादभिन्नैव । तयोर्भेदस्तु भ्रान्तिः, यथा जीवपरयोः । तथा च मायावच्छिन्नं चैतन्यं शिवः, तस्माज्जगदङ्कुररूपो य आद्यपरिणामस्तदवच्छिन्नचैतन्यं चिच्छक्तिरित्युच्यते । तदुक्तमागमिकैः—

'चिदचिदनुग्रहहेतोरस्य सिसृक्षोर्य आद्य उन्मेषः ।
तच्छक्तिमत्त्वमभिहितमविभागापन्नमस्यैव ॥'—इति ।

उक्तं च सूतसंहितायाम्—

'चिन्मात्राश्रयमायायाः शक्त्याकारे द्विजोत्तमाः ।
अनुप्रविष्टा या संविन्निर्विकल्पा स्वयंप्रभा ॥
सदाकारा परानन्दा संसारोच्छेदकारिणी ।
सा शिवा परमा देवी शिवाभिन्ना शिवङ्करी ॥
न शिवेन विना शक्तिर्न शक्तिरहितः शिवः ।
उमाशङ्करयोरैक्यं यः पश्यति स पश्यति ॥'—इति ।

अथवा—उमाशब्देन भक्तानुग्रहार्थं स्वीकृतलीलाविग्रहा परमकारुणिकी लोकोत्तरसौन्दर्यशालिनी परशिवाविनाभूता गौरी देवी प्रतिपाद्यते । तदुक्तं श्रुत्या—सह स्वस्राम्बिकया तं जुषस्व स्वाहा' इति; तया सह वर्तत इति सोमः । 'नमः सोमाय च' इति श्रुतिः । कूप्याय—कूपे जलाधारविशेषे भवो विद्यमानः कूप्यः । 'नमः कूप्याय च' इति श्रुतिः । पातालवासिने—पाताले पाताललोके रसातलादिनामत्वेन प्रसिद्धे अत्युदारत्वेन प्रसिद्धमहाबल्यादिरूपेण वसतीति पातालवासी, 'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवाऽवगच्छ त्वं मम तेजोंशसम्भवम् ॥' इति भगवद्वचनात् । 'नमः श्रुताय च श्रुतसेनाय च' इति श्रुतिः ॥ १२२ ॥

**नमस्ताराधिनाथाय वागीशाय नमो नमः ।**
**सदाचाराय गौराय स्वायुधाय नमो नमः ॥१२३॥**

ताराधिनाथाय—ताराधिनाथो नक्षत्रेशश्चन्द्रमाः, तद्रूपी 'यो वै रुद्रः स भगवान् यश्च सोमस्तस्मै वै नमो नमः' इति श्रुतिः । यद्वा—तारस्य प्रणवस्याधिनाथः, तत्प्रतिपाद्यत्वात् । ओङ्कारेण परमात्मप्रतिपादनप्रकारः कथ्यते—ॐकारस्य हि स्वाज्ञान-

कल्पितभूतभौतिकात्मप्रपञ्चविशिष्टः प्रत्यग्रूपः शिवो वाच्यार्थः। सर्वदृश्यविनिर्मुक्तः। स एव सच्चिदानन्दलक्षणः परशिवः प्रत्यगभिन्नो लक्ष्यार्थः। एवञ्चाधिकारी एकान्ते स्थित्वा निगृहीतबाह्यान्तःकरणः संक्षालितकामक्रोधादिमल ओङ्कारमनुसन्धाय तस्य वाच्यार्थं प्रपञ्चविशिष्टमात्मानमपि ईश्वररूपमनुचिन्त्य तस्यैवोङ्कारस्य लक्ष्यार्थं दृश्यप्रपञ्चविनिर्मुक्तं दृग्रूपं केवलप्रत्यगात्मानमपि परशिवस्वरूपमनुचिन्त्य तस्मिन् परशिवरूपे परमात्मनि भूतभौतिकप्रपञ्चं सर्वं दृश्यं प्रविलाप्य परशिवस्वरूपसच्चिदानन्दमात्रात्मनाऽवतिष्ठते इति। 'परं चापरं च ब्रह्म यदोंकारः' इति श्रुतिः। वागीशाय—वाचां लौकिकवैदिकरूपेण विद्यमानानां स्थूलानां वैखरीशब्दवाच्यानां परा-पश्यन्ती-मध्यमानां सूक्ष्मसूक्ष्मतररूपाणाम् एतदात्मकशब्दब्रह्मरूपायाश्च वाच ईशः कारणं वागीशः, सर्वासामपि शब्दब्रह्मादीनां वाचां तदधीनत्वात्। उक्तं च स्कान्दे—

'मातृका च क्रिया स्थूला सूक्ष्मा सूक्ष्मतरेति च।'—इति।

तत्रैवाऽन्यत्र—

'परात्परतरादस्माच्छिवाच्चैतन्यलक्षणात् ।
स्वशक्तिसहितादेव जगज्ज्योतिर्मयः परः ॥
शब्दसूक्ष्मस्वभावेन प्रादुरासीदखण्डितः ।
स शब्दः पुनराधारे प्राणिनामास्तिकोत्तमाः ॥
पिण्डीभूततया भाति तप्तजाम्बूनदप्रभः ।
स पुनर्ब्रह्म नाड्या तु प्रविश्य हृदयाम्बुजम् ॥
विभक्तः सूक्ष्मरूपेण भाति वह्निस्वभावतः ॥'—

—इत्यादि। अत्र परशब्देन बिन्दुरुच्यते, स एवेश्वरः; तस्मात् परात् परतरो निष्कलः परः शिवः। तस्मात् परशिवात्

स्वमायाविशिष्टचैतन्यरूपः परो बिन्दुर्जातः तदुक्तम्-आगमे—

'जगदुत्पत्तिहेत्वर्थं निष्कलात्परमाच्छिवात् ।
समुद्भूतः परस्तस्मात्··· ··· ··· ॥'—इति

परबिन्दुशब्दाभिधेयः । अचिदंशो बीजम् । चिदचिन्मिश्रोंऽशो नादः । चिदंशो बिन्दुरिति । क्रियाविभागसमये सूक्ष्मः शब्दो जात इत्याह— शब्दसूक्ष्म इति । अखण्डित इति । मूलकारणस्य विभज्यमानस्य बिन्दोः सर्वगतत्वात् तदात्मकतया सर्वत्राऽनुस्यूत इत्यर्थः । तथा सर्वगतस्यापि वैखरीरूपशब्दवच्छ्रोत्राग्राह्यत्वमेव सूक्ष्मत्वम् इन्द्रियागोचरत्वे कथं तदवभास इत्यत आह—स्वभावेन प्रादुरासीदिति। स्वप्रकाशबिन्दुकार्यतया तदात्मकत्वेन स्वयमपि स्वप्रकाशत्वस्वभावेन प्रादुर्भूतः । एष एवाखण्डितः । स्वप्रकाशत्वात् सर्वगतत्वात् जगत्कारणतादात्म्यात् तत्र शब्दब्रह्मेत्युच्यते । तस्यैव शब्दब्रह्मणः परा वाग्रूपलक्षणदशाविशेषलक्षणमाह—स शब्द इति । पिण्डीभूततयेति । तस्य सर्वगतस्यापि प्राणिनामर्थविवक्षाहेतुप्रयत्नजनितपवनसम्बन्धनिबन्धना मूलाधारलक्षणप्रदेशविशेषे याऽभिव्यक्तिः सा पिण्डीभावः, तयैवाऽभिव्यक्त्या स्वप्रकाशस्यापि तस्य यो वै शब्दः स स्वप्रकाशरूपतया साम्याज्जडप्रकाशेन प्रसिद्धेन तप्तजाम्बूनदरूपेणोपमीयते—तप्तेति। पिण्डीभावदशोपहितो मूलाधारस्थस्वप्रकाशो निष्पन्दशब्दः परा वागित्युच्यते । स एव मूलाधाराभिधानाभिविमर्शरूपेण मनसाऽभिव्यक्तो वै शब्दातिशयदशापन्नः सामान्यस्पन्दरूपः पश्यन्ती वागित्युच्यते। एते परापश्यन्त्यौ स्वप्रकाशत्वमनोविषयाभ्यां निष्पन्दत्वसामान्यस्पन्दत्वाभ्यां वा पृथक्त्वेन क्वचिन्निर्दिश्येते । इह तु विशेषस्पन्दनविरहसाम्येन एकीकृत्य पिण्डीभावजम्बूनदप्रभाभ्यां विशिष्टैकरूपतया निर्दिश्येते इति

मन्तव्यम्। अनेनैवाऽभिप्रायेण 'मातृका च क्रिया स्थूला' इत्यत्र परापश्यन्त्यौ सूक्ष्मतररूपत्वेन एकीकृत्य त्रैविध्यं वर्णित-मिति। तस्यैवेदानीं नाभेर्हृदयं प्राप्तस्य निश्चयात्मिकया बुद्ध्या विषयीकृतस्य विशेषस्पन्दरूपस्य मध्यमावाग्रूपतामाह--स पुन-र्ब्रह्म ति। ब्रह्मनाड्या सुषुम्णया। विभक्त इति। तत्तदर्थविशेष-माह--सूक्ष्मरूपेणेति। परश्रोत्रग्रहणाविषयशब्दः शब्दरूपो विशेषोल्लेखिन्या बुद्ध्या निश्चित्य कल्पितो विशेषस्पन्दरूप इत्यर्थः। अनेन मध्यमायाः परापश्यन्तीभ्यां विशेषो वर्णितः। वैखरीतो विशेषमाह— सूक्ष्मरूपेणेति। परश्रोत्रग्रहणायोग्यत्वं सूक्ष्मत्वं स्वत इति सगोचरया निश्चयात्मिकया बुद्ध्या इत्यर्थः। वह्निप्रभ इति। पश्यन्तीवाग्रूपादपि वै शब्दातिशयो मध्यमाया वाच उच्यते। वह्निप्रभा हि बाह्यतमोपहरणसमर्था तत्सामर्थ्यात् जाम्बूनदप्रभामतिशेते। वैखरीशब्दस्तु सर्वमनुष्यैरुच्चार्यमाणः सर्वैः प्राणिभिर्ग्राह्यः प्रसिद्ध एव। अत्र श्रुतिः--'वाक् चातुर्विध्ये चत्वारि वाक्परिमितपदानि तानि विदुर्ब्राह्मणा ये मनीषिणो गुहा त्रीणि निहितान्येजयन्ति। तुर्यं वचो मनुष्या वदन्ति।' वाच ईश्वराधीनत्वे 'तस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' इत्यादिका। सदाचाराय—सत् ब्रह्मस्वरूपम् आचरति आस-मन्तादवगच्छतीति सदाचारः; सच्चिदानन्दरूपं स्वात्मानं सर्वदाऽनुसन्दधातीति यावत्। एतच्च चिन्मुद्रया परशिवया परशिवेन स्पष्टीकृतम्। तथा च पराशरः—

'ज्ञानात्मकस्यामलसत्त्वराशे-
रपेतदोषस्य सदा स्फुटस्य।'—इति।

स्वात्मतत्त्वसुखवृत्तिप्रमोदात्ताण्डवप्रियेति स्कान्दे। 'अथ कस्मादुच्यते महादेवो यः सर्वान् परित्यज्यात्मज्ञानयोगैश्वर्य महति

महीयते' इति श्रुतिः । गौराय—धवलो गौरः, सत्त्वमूर्तिरिति यावत् । 'सुभासं शुक्रशोचिषम्' इति श्रुतिः । स्वायुधाय—शोभनमायुधं त्रिशूलरूपं यस्यासौ स्वायुधः । 'नमः स्वायुधाय च सुधन्वने च' इति श्रुतिः ॥१२३॥

**संसारमोचकायाऽथ वर्णिने लिङ्गरूपिणे ।**
**सच्चिदानन्दरूपाय पापराशिहराय च ॥१२४॥**

संसारमोचकाय—ब्रह्मविद्याविषयभूतः सन् अविद्यातत्कार्यभूतसंसारपाशविमोचकः संसारविमोचकः । स्कान्दे शिवं प्रति विष्णुः—

'एवं निशम्य पुरुषोत्तम आत्मभूत-
　　मम्बासहायममलेन्दुकलावतंसम् ।
सर्वामरैरखिलयोगिभिरर्चनीयं
　　संसारमोचक इति प्रतिपद्य भक्त्या ॥'

—इत्यादि । 'ज्ञात्वा देवं सर्वपाशापहानिः' इति श्रुतिः । वर्णिने—वर्णी ब्रह्मचारी । वर्णित्वमपर्णायै वरप्रदानसमये शिवस्य प्रसिद्धम् । 'उत्तमपुरुषाय ब्रह्मचारिणे नमः' इति श्रुतिः । लिङ्गरूपिणे—लीनमर्थं गमयतीति लिङ्गम्, तद्रूपी । अविद्यातिरोहितजडप्रपञ्चस्य गमकत्वं भासकत्वं प्रकाशात्मकस्य चैतन्यस्य । तद्रूपी शिव इत्यर्थः । तदुक्तं स्कान्दे । सूतः—

'अथाऽतः संप्रवक्ष्यामि शिवलिङ्गं समासतः ।
यस्य विज्ञानमात्रेण विमुक्तो मानवो भवेत् ॥
शिव एव स्वयं लिङ्गं लिङ्गं गमकमेव हि ।
शिवेन गम्यते सर्वं शिवो नाऽन्येन गम्यते ॥

जडं हि गम्यतेऽन्येन नाऽजडं मुनिपुङ्गवाः ।
शिवो नैव जडः साक्षात् स्वप्रकाशैकलक्षणः ॥'—इति ।

'त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् । तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः ॥' इति श्रुतिः । **सच्चिदानन्दरूपाय**—सत्पदेन कालत्रयाबाध्यं स्वरूपमुच्यते, चित्पदेन प्रकाशान्तरनिरपेक्षतया प्रकाशमानम्, आनन्दपदेन निरतिशयप्रेमास्पदतया सुखरूपमेतत्त्रितयात्मकं रूपं स्वरूपं यस्य स सच्चिदानन्दरूपः । तदुक्तं सूतसंहितायाम्—

'स शिवः सच्चिदानन्दः सोऽन्वेष्टव्यो मुमुक्षुभिः ।
स च जिज्ञासितव्यश्च विना सङ्कोचमास्तिकाः ॥'—इति ।

'ततस्तु जातं सकलं विचित्रं सत्यवत्सुराः ।
स सत्योऽसत्यसाक्षित्वात् साक्षित्वाच्चित्सुखं तथा ।
प्रेमास्पदत्वादद्वैतो भेदाभावात् सुरर्षभाः ॥'—इति ।

'एव साक्षात् सच्चिदानन्दरूपं
भावाभावाशेषलोकस्य हेतुम्
श्रुत्या युक्त्या ब्रह्म जानन्ति मर्त्या
विद्यायोगादेव मुक्ता भवन्ति ॥'—इति च ।

'ब्रह्मैवेदं सर्वं सच्चिदानन्दरूपमभवत्' इति श्रुतिः । **पापराशिहराय**—पापानां महापातकातिपातकोपपातकादीनां राशिं समूहं स्वभक्तानां स्वविषयज्ञानिनां वा हरतीति पापराशिहरः । तदुक्तं —

'बहुनाऽत्र किमुक्तेन यस्य भक्तिः शिवे दृढा ।
महापापोपपापौघकोटिग्रस्तोऽपि मुच्यते ॥'—इति ।

ब्रह्माण्डपुराणे—

'कृतान्यखिलपापानि भूयो जन्मनि जन्मनि ।
मेरुमन्दरतुल्यानि नश्यन्तीशे सुतोषिते ॥'—इति

'आत्मन्येवाऽऽत्मानं पश्यति सर्वमात्मानं पश्यति नैनं पाप्मा तरति सर्वं पाप्मानं तरति नैनं पाप्मा तपति सर्वं पाप्मानं तपति विपापो विरजः' इति श्रुतिः ॥ १२४ ॥

**अतर्क्यायाऽप्रमेयाय प्रमाणाय नमो नमः ।**
**कलिग्रासाय भक्तानां भुक्तिमुक्तिप्रदायिने ॥१२५॥**

अतर्क्याय—अतर्क्यं स्वबुद्ध्यूहाविषयस्वरूपम् । 'अणीयान् ह्यतर्क्यमणुप्रमाणात्' इति श्रुतिः । अप्रमेयाय - प्रत्यक्षादिप्रमाणागम्योऽप्रमेयः । तदुक्तं [महाभारते] आरण्यपर्वणि । शिवं प्रति अर्जुनः—

'सम्प्राप्तं जन्मसाफल्यं कृतार्थोऽस्मि घृणानिधे ।
अप्रमेयैः प्रमाणैस्त्वमहो प्रत्यक्षितोऽसि यत् ॥
निष्कलो निर्मलो नित्यो नित्यानन्दो निरञ्जनः ।
निरन्वयो निराचारो निरीहो निर्गुणोऽमितः ॥
चिद्घनं परमं ब्रह्म परं ज्योतिः सनातनः ।'—इति ॥

'अप्रमेयमनादिं च' इति श्रुतिः । प्रमाणाय—सर्वावभासकत्वात् प्रमाणम् । 'सर्वद्रष्टारं सर्वसाक्षिणम्' इति श्रुतिः । कलिग्रासाय—कलिनाशकः कलिग्रासः, मुख्यप्राणस्य वागादीनां मुख्यप्राणानां चाहं श्रेष्ठोऽहं श्रेष्ठ इति योऽयं कलहः परस्परमभूत्तस्य प्रजापतिरूपेण निवारक इत्यर्थः । तदुक्तं छान्दोग्ये—'अथ ह प्राणा अहँ श्रेयसि व्यूदिरेऽहँ श्रेयानस्म्यहं श्रेयानस्मीति । ते ह प्राणा प्रजापतिं पितरमेत्योचुर्भगवन् को नः श्रेष्ठ इति । तान्

होवाच यस्मिन् व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्येत स वः श्रेष्ठ इति' इति। भक्तानां भुक्तिमुक्तिप्रदायिने—भक्तानां भोगमोक्षार्थिनां चतुर्विधानां वा भुक्तिमुक्तिप्रदायी लैङ्गे वसिष्ठः—

'प्रमाणं वेद एव स्याद्धर्माधर्मे च मय्यपि ।
वर्णाश्रमसमाचारात् पूज्यो देवो न चाऽन्यथा ॥
प्रथमायां द्विजः स्नात्वा वाग्यतो भक्तिमान्नरः ।'

—इत्यारभ्य तिथिवारनक्षत्रेषु ब्राह्मणानां धनधान्यादिसन्तर्पणपूर्वकं तत्तद्दिनविशेषेषु शिवपूजाविशेषात् ब्रह्महत्यादिपातकनिवृत्तिपूर्वकमिह लोके आरोग्यादिसर्वाभीष्टफलप्राप्तिपूर्वकं परलोके नरकादिप्राप्तिनिवृत्तिपूर्वकं स्वर्गादिशिवलोकप्राप्तिपर्यन्तं ज्ञानं चाऽवाप्नोतीति प्रतिपादितं ब्रह्मवैवर्ते—

'भक्त्या यः शिवमर्चयेदनुदिनं लिङ्गे मखानां फलं
दानानां तपसां त्रिविष्टपमहातीर्थाप्लुतीनां फलम् ।
पापान्याशु विनाश्य शङ्करगणश्रैष्ठ्यं समेत्याऽप्यसौ
विज्ञानात् परिभाव्य मोहमखिलं ज्ञानी परं गच्छति ॥'—इति ।

'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते' इति 'अन्नादो वसुदानो विन्दते' इति च श्रुतिः ॥१२५॥

**गजारये विदेहाय त्रिलिङ्गरहिताय च ।**
**अचिन्त्यशक्तयेऽलङ्घ्यशासनायाऽच्युताय च ॥१२६॥**

गजारये—गजस्य गजासुरस्य अरिः शत्रुः गजारिः । तदुक्तं स्कान्दे—

'वाराणस्यां पुरायातो गजरूपो महासुरः ।
तापसान् शिवभक्तांश्च हन्तुं कोपाग्निदीपितः ॥
तमागतमथाऽऽलोक्य कालमेघमिवाऽन्तकम् ।

अविमुक्तगताः सर्वे प्राणिनश्चुक्रुशुर्भयात् ॥
ततो विश्वेश्वरो देवः करुणारक्षिताश्रयः ।
आस्थाय भैरवाकारं बहुबाह्वायुधोद्धतम् ॥
अञ्जनाचलसंकाशं बालेन्दुद्वयदंष्ट्रकम् ।
पित्तपिङ्गलनेत्राणां त्रयेणाऽतीव भीषणम् ॥
नूपुरध्वनियुक्तं च नागाभरणभूषितम् ।
जग्राह गजमायान्तं महान्तं नादभैरवम् ॥
ततो दृष्ट्वा गिरेः पुत्रीं बिभ्यतीं पार्श्वतः स्थिताम् ।
रक्ष रक्षेति सहसा भाषमाणामनिन्दताम् ॥
ईषदुत्स्मयमानस्तु मा भैर्मा भैरिति ब्रुवन् ।
हत्वा तं कुञ्जरं भीममप्रधृष्यं सुरैरपि ॥
पादहस्तयुतं चर्म विशस्याऽच्छिद्रमाततम् ।
आवृत्याऽऽत्मानमात्मेशं स्तूयमानोऽखिलैः सुरैः॥’-इति ।

तथा—

‘गजचर्मावृततनुं स्फुरत्प्रहरणोज्ज्वलम् ।
सर्वरोगहरं ध्यायेद्देवं कुञ्जरभेदिनम् ॥’

—इति रहस्यम्। ‘पिनाकहस्तः कृत्तिवासाः’ इति श्रुतिः । विदेहाय—देहरहितो विदेहः । ‘स पर्यगाच्छुक्रमकायमव्रणम्’ इति श्रुतिः । त्रिलिङ्गरहिताय—पुंस्त्व-स्त्रीत्व-नपुंसकत्वरहितः त्रिलिङ्गरहितः ।

‘नैव स्त्री न पुमानेष नैव चाऽयं नपुंसकः ।
अमूर्तः पुरुषः पूर्णो द्रष्टादेही सजीवनः ॥’—इति ।

‘व्यापकोऽलिङ्ग एव च’ इति श्रुतिः। अचिन्त्यशक्तये—अचिन्त्या चिन्ताऽविषयीभूता शक्तिश्चिच्छक्तिर्यस्य सोऽचिन्त्य-

शक्तिः । यद्वा—अचिन्त्याः चिन्तितुमशक्या इयत्तारहिताः शक्तयो जगत्सर्गादौ सहकारित्वेन अपेक्षिता यस्य सोऽचिन्त्यशक्तिः । स्कान्दे—

'जगत्कारणमापन्नः शिवो यो मुनिपुङ्गवाः ।
सा तस्याऽपि भवेच्छक्तिस्तया हीनो निरर्थकः ।
सर्वज्ञत्वं गतो यस्तु शिवः साक्षादुपाधिना ।
सा तस्याऽपि भवेच्छक्तिस्तया हीनो निरर्थकः ॥'

—इत्यादि । 'अपाणिपादोऽहमचिन्त्यशक्तिः' इति श्रुतिः । —अलङ्घ्यशासनाय—अलङ्घ्यं लङ्घयितुमशक्यं शासनं शास्तिर्यस्य स तथा । 'एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत एतस्य वाऽक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ' इत्यादिश्रुतिः । अच्युताय—च्युतिरहितोऽच्युतः । श्रीविष्णुपुराणे—

'महापापवतां नृणां शिवः सत्यादिलक्षणः ।
अनादिमध्यान्तमजमवृद्धिक्षयमच्युतम् ।
प्रणतोऽस्मि सदानन्दं सर्वकारणकारणम् ॥'—इति ।
'शाश्वतं शिवमच्युतम्' इति श्रुतिः ॥१२६॥

**नमो राजाधिराजाय चैतन्यविषयाय च ।**
**नमः शुद्धात्मने ब्रह्मज्योतिषे स्वस्तिदाय च ॥१२७॥**

राजाधिराजाय—राज्ञां सर्वेषामधिकृत्वेन यः स्वामी सोऽयं राजाधिराजः कुबेरः, तद्रूपी इत्यर्थः । 'राजाधिराजाय' इति प्रस्तुत्य 'कुबेराय वैश्रवणाय' इति श्रुतिः । अथवा—राज्ञामीश्वरत्वेन प्रसिद्धानां विष्ण्वादीनामधिराजः । तदुक्तं पराशरोपपुराणे—

'महापापवतां नॄणां शिवः सत्थादिलक्षणः ।
परतत्त्वतया साम्बः स्वप्रभो न विभासते ॥
अनेकजन्मसिद्धानां श्रौतस्मार्तानुवर्तिनाम् ।
परतत्त्वतया साम्बः शिवो भाति सनातनः ॥
शिवदृष्टिस्तु सर्वत्र कर्तव्या सर्वजन्तुभिः ।
राजदृष्टिर्यथाऽमात्ये क्रियते सर्वजन्तुभिः ॥
राजाधिराजः सर्वेषां त्र्यम्बकस्त्रिपुरान्तकः ।
तस्यैवाऽनुचराः सर्वे ब्रह्मविष्ण्वादयः सुराः ॥'—इति ।

तमीश्वराणां परमं महेश्वरम्' इति श्रुतिः । चैतन्यविषयाय—स्वरूपचैतन्येनैव प्रकाशते, न तु वृत्तिविषयः । वृत्तिविषयत्वनिवृत्त्यर्थमेव विषयपदम् , स्वयमेव स्वप्रकाशकत्वेन जडबुद्धिवृत्तीनामपि प्रकाशकत्वात् । 'स्वप्रकाशोऽप्यविषयज्ञानत्वात्' इति श्रुतिः ।

'.......................ज्योतिरानन्दसान्द्रं
शान्तात्मानो मुनीन्द्राः प्रमुदितमनसः सन्ततं भावयन्ति ।'

—इति प्रबोधचन्द्रोदये । 'ज्योतिर्ज्वलति ब्रह्माहमस्मि' इति श्रुतिः । शुद्धात्मने—शुद्धः सत्त्वादिमलरहितः, स चासौ आत्मा च शुद्धात्मा, देहेन्द्रियादिविलक्षणः प्रत्यगात्मेत्यर्थः । 'आत्मा शुद्धः सदा नित्यः सुखरूपः स्वयम्प्रभः । अज्ञानान्मलिनो भाति ज्ञानाच्छुद्धो विभात्ययम् ॥' इति श्रुतिः । ब्रह्मज्योतिषे—ब्रह्म नित्यं परिपूर्णं ज्योतिश्च ब्रह्मज्योतिः, परिपूर्णः स्वप्रकाश इत्यर्थः । 'पूर्णं तदद्प्रकाशं परतरममलम्' इति श्रुतिः । स्वस्तिदाय - भक्तानां स्वस्ति मङ्गलं ददातीति स्वस्तिदः । 'विघ्नः स्वस्ति' इति श्रुतिः ॥१२७॥

मयोभवे च दुर्ज्ञेयसामर्थ्याय च यज्वने ।
चक्रेश्वराय रुचये नमो नक्षत्रमालिने ॥१२८॥

मयोभवे—मयः परममोक्षसुखं भावयतीति मयोभूः । 'नमः शम्भवे च मयोभवे च' इति श्रुतिः । दुर्ज्ञेयसामर्थ्याय —दुःखेन ज्ञातुं योग्यं सामर्थ्यं शक्तिर्यस्य स दुर्ज्ञेयसामर्थ्यः । एतावांश्छक्तिमांश्चेति देवैरपि दुर्विज्ञेयः परः शिवः । स्कान्दे—

'चरितानि विचित्राणि गुह्यानि गहनानि च ।
ब्रह्मादीनां च सर्वेषां दुर्विज्ञेयो हि शङ्करः ॥'—इति ।

'अपाणिपादोऽहमचिन्त्यशक्तिः' इति श्रुतिः । यज्वने—मूर्त्यष्टकमध्ये यजमानमूर्तिर्यज्वा । यद्वा—चेतनात्मकसर्वप्रपञ्च-रूपं हविः स्वनिटिलनेत्राहवनीये कालरूपी सन् जुहोतीति यज्वा । तदुक्तमभियुक्तैः—

'पद्मालीपिङ्गलिम्नः कण इव तडितां यस्य कृत्स्नः समूहो
यस्मिन् ब्रह्माण्डमीषद्विघटितमुकुले कालयज्वा जुहाव ।—इति ।

अथवा—महायागकर्ता यज्वा पराशक्तिपत्नीसमेतो महाशम्भुरेव यज्वा । तथा हि ब्रह्माण्डपुराणे—उत्तरखण्डे दशमाध्याये हयग्रीवागस्त्यसंवादे—देवासुरयक्षगन्धर्वादीनां मनुष्यादीनां च वीर्ये भण्डासुरेण माययाऽपहृते, तदनु वीर्यलाभार्थं ते विष्णुं प्रति गत्वा स्तुतिं कृतवन्तः । अथ ते सह विष्णुना ब्रह्माण्डभित्तिमनेकयोजनविस्तृतामैरावतादिदन्ताग्रेण अतिप्रयत्नेन भेदनं कृत्वा, तद्द्वारा अण्डाद्बहिर्महाकाशे गत्वा, तत्र विद्यमानं महाशम्भुं स्तुत्वा भण्डासुरनिग्रहं प्रार्थितवन्तः । तेन च स्वयमेव पुरोडाशादिरूपेण स्थिताश्चेदहं यजमानः सन् महामा

करिष्यामि, तदनु युष्माकं वीर्यलाभः भण्डासुरनिग्रहश्च भविष्यतीत्युक्तम् । तैरप्यङ्गीकृतम्, परशम्भुश्चान्तर्दधे—इत्येतत्सर्वं दशमाध्याये । अथैकादशाध्यायोऽत्र लिख्यते—

'हयग्रीव महाप्राज्ञ विचित्रं प्रश्रुतं मया ।
महायागोऽभवत् कीदृक् किंफलो जगतां प्रिय ॥
विस्तरेण ममाऽऽचक्ष्व तत्र मे कौतुकं महत् ।
संश्रूयमाणमपि यत्परानन्दाय कल्पते ॥
हयग्रीव उवाच—
'कथयामि महाप्राज्ञ महायागमहोदयम् ।
पठितं सर्वपापघ्नं श्रुतं सर्वमलापहम् ॥
आवर्तितं तु संसिद्धेः सर्वस्य मूलभाजनम् ।
एकवारं श्रुतं ह्येतन्महायागप्रवर्तनम् ॥
राजसूयसहस्रस्य दत्ते फलमनुत्तमम् ।
श्रीमन्महाशम्भुनाथः प्रविश्याण्डं महत्तरम् ॥
स्वयं होताऽभवत्तत्र यज्ञपत्नी पराऽभवत् ।
ललिताम्बां महाविद्यामुच्चरन् स्वात्मसंविदम् ॥
सप्तस्कन्धमहावायुमयमात्मानमातनोत् ।
पराशक्त्यम्बिका चाऽस्य क्रियाशक्तिः किलाऽभवत् ॥
तया प्रबलया युक्तः श्रीमहाशम्भुनायकः ।
वायुरूपं समास्थाय धुनोति स्म जगत्त्रयम् ॥
प्रवेपमानं त्रैलोक्यं महाशम्भुनभस्वता ।
विलोक्याऽज्ञासिषुर्देवाः समारब्धं महामखम् ॥
स महाशम्भुरुत्थाय विधुन्वन् भुवनत्रयम् ।
सप्तमं शुद्धजलधिं कुण्डार्थं समशोषयत् ॥
शोषिते सप्तमे सिन्धौ शाम्भवानिलचूर्णिते ।
आपातालगभीराऽभूदतिदीर्घा महाखनी ॥

तां सागरखनीं देवो हेमकुण्डमकल्पयत् ।
समस्तमुद्भिजां जालं चतुर्धा व्यभजत् पुनः ॥
उद्भिज्जालं प्रचिक्षेप राशीकृत्य महाखनौ ।
सिंहासनमहाविद्यां जपन् हुंकारमास्थितः ॥
तेन घोरेण हुंकारशब्देन ध्मातविग्रहः ।
आमूलमाब्रह्मबिलं तस्य जज्वाल चिच्छिखी ॥
तं संविदनलं फालक्रोधलोचनकोटरात् ।
ववाम वामदेवोऽयं सचलाग्नौ महाखनौ ॥
अथ सागरकुण्डान्तरुद्भिज्जालसमुद्भवः ।
जज्वाल विततं ज्वालाजटाभिर्जटिलोऽनलः ॥
एवं प्रणीय सद्विद्यापूतमग्निं चिदात्मकः ।
तारकापुष्पनिकरैः कुण्डमण्डलमार्चयत् ॥
तत्राग्नेरष्टधा मूर्तिं सङ्कल्प्याऽभ्यर्चयच्छिवः ।
षण्मूर्तिमपि चाऽभ्यर्च्य मध्ये मूर्तित्रयं तथा ॥
एवं संस्कारमग्नेर्हिर्व्यदधादिति शम्भुराट् ।
जातवेदाः सदाजिह्वो हव्यवाहन एव च ॥
अश्वोदरश्चतुर्थः स्यादथ वैश्वानरः परः ।
विश्वेदेवमुखा वह्नेरष्टं मूर्तीश्च षड् ब्रुवे ॥
सहस्रार्चिः स्वस्तिपूर्ण उत्तिष्ठपुरुषस्तथा ।
धूमव्यापी सप्तजिह्वो धनुर्धर इतीह षट् ॥
अथ वैश्वानरोत्तिष्ठपुरुषौ च तृतीयकः ।
...गल इति ख्याता त्रिधा मूर्तिश्च शुष्मिणः ॥
अथ जिह्वाः संविदग्नेः सप्ताभ्यर्चयच्छिवः ।
हिरण्या कनका रक्ता कृष्णा चैव तु सुप्रभा ॥
अतिरक्ता च षष्ठी स्यात् बहुरूपा च सप्तमी ।

एवं संविन्महा ............... शुचः ॥
पुष्कलार्तकौ घ्री (?) गृहीत्वा हेतुमास्थितः ।
अथ सर्पिस्समुद्रस्य सर्पिरादाय सर्वशः ॥
महानलदर्व्या च जुहावासिन् महानले ।
श्रीशम्भुराजरंहस्शी मारुतप्रेरितस्ततः ॥
पुष्कलावर्तकाः सर्वे समुद्रं सकलं पुनः ।
सहस्रधा लक्षधा च कोटिधा ज्ञानपावके ॥
धारा घृतस्य संपेतुरेकैकाः पर्वतोपमाः ।
पतन्तीष्वाज्यधारासु प्रजज्वाल हुताशनः ॥
शतयोजनपर्यन्तं ऊर्ध्वं ज्वाला प्रधाविता ।
उद्भिज्जालचतुर्थांशमपस्समिधमुत्क्षिपत् ॥
अथेक्षुसारजलधिं पुष्कलावर्तकस्रुचा ।
आदाय सांविदे वह्नावहौषीच्छम्भुनायकः ॥
कल्पान्तवारिद इव प्रतिगर्जन् मुहुर्मुहुः ।
स जज्वाल महावह्निर्योजनैस्त्रिशतोच्छ्रितः ॥
उद्भिज्ज्वालचतुर्थांशं ततः समिधमुत्क्षिपत् ।
ततः सुरामहासिन्धुं पुष्कलावर्तकस्रुचा ॥
जुहाव तीव्रज्वलने श्रीशाम्भवसमीरणः ।
तेन मुक्त इवात्यर्थं नृत्यन्निव मुहुर्मुहुः ॥
चतुश्शतं योजनानामूर्ध्वं जज्वाल चिच्छिखी ।
सर्वमप्युद्भिदां जालं समादाय हुताशने ॥
लवणाम्बुनिधिस्रोतस्समस्तं स्रुच्यधारयत् ।
जुहाव च ततस्तीव्रे सांविदे हव्यवाहने ॥
ततश्चटचटाकारो महानासीद् भयंकरः ।
तेन भण्डादिदैत्यानां चेतांसि प्रचकम्पिरे ॥

अथ क्षीरसमुद्रं च महावारिददर्विभिः ।
गृहीत्वा सकलं शम्भुराजुहोत्स्वर्णरेतसि ॥
रुद्राट्टहासधवलज्वालस्तेनाज्वलच्छिखी ।
घोरनिर्घातनिर्विण्णस्फटिकाचलसन्निभः ॥
इत्थं सिन्धुषु सर्वेषु स्थलशेषेषु शम्भुराट् ।
लोकान् जिहीर्षुः क्रमशः प्रावर्तत महानले ॥
अथ स्वेनैव सत्येन धारयन् मेदिनीमयः ।
वायुरूपः समाजह्रे शेषाद्यान्फणिपुङ्गवान् ॥
ते तेन रभसाकृष्टाः स्फुरत्फणिमणिप्रभाः ।
द्योतयन्त इवाकाशं बद्धाञ्जलिपुटं मुदा ॥
तक्षकर्कोटकमुखाः पेतुस्तस्मिन् हुताशने ।
इत्थं हुत्वा महानागानष्टौ दिक्करिणोऽपि च ॥
आजुहोच्छम्भुनाथस्तान् स्थूलकुम्भकटस्थलान् ।
अव्यथा एव दिङ्नागाः प्रीतान्तःकरणा मुहुः ॥
रक्तपद्माकरमिव प्राविशन् हव्यवाहनम् ।
अथ भारतवर्षस्थान् मनुष्यान्राजभिस्सह ॥
भद्राश्वमुख्यवर्षस्थानप्यन्यानमितौजसः ।
उत्तरांश्च कुरून्प्राच्यान् उदीच्यान्मध्यदेशजान् ॥
नानादेशगतान् मर्त्यान् नानाद्वीपसमाश्रितान् ।
सर्वानानीय जुहवाम्बभूव ज्वलितेऽनले ॥
इत्थं रसातलद्वन्द्वे निश्शेषफणिमानुषे ।
ज्योतिश्चक्रगतान् सर्वान् ग्रहराशिसमायुतान् ॥
नक्षत्रतारासंयुक्तान् श्वासनिर्भासकत्विषः ।
तेजश्शरीरिणो देवो जुहाव ज्वलितेऽनले ॥
अथ शक्रादयो देवा दिक्पालाश्चाग्निसंयुताः ।

असुराश्चैव गन्धर्वाश्चारणाश्चैव गुह्यकाः ॥
सकिन्नराः किंपुरुषास्साध्याः सिद्धाश्च खेचराः ।
देवयोनिप्रभेदाश्च सर्वे संतोषशालिनः ॥
सुस्नाताः शुचिवस्त्राढ्या नानाभूषणधारिणः ।
बद्धाञ्जलिपुटाः प्रीता हाससंफुल्लदाननाः ॥
स्वैः स्वैश्च वाहनैः स्वैः स्वैः स्वैः स्वैः स्वैःस्वैः परिच्छदैः ।
भण्डेन दूषितान्यङ्गान्यवमोक्तुं समुद्यताः ॥
अपतन् सांविदे तेन हुताः कल्याणरेतसि ।
आदित्या वसवोऽष्टौ च दस्रौ पितृगणास्तथा ॥
एकादश महारुद्राश्चन्द्रार्धमुकुटोज्ज्वलाः ।
समं निजैः पार्षदैश्च निजैश्च गणनायकैः ॥
अपतन् शम्भुनाथेन हूयमाना महानले ।
सनन्दसनकाद्यैश्च योगिभिः परमार्थिभिः ॥
भृत्यैश्च विविधैर्युक्तो विष्वक्सेनपुरस्सरैः ।
निजैः पञ्चायुधैर्युक्तो लक्ष्म्या साकमनिन्दया ॥
भूशक्त्या च स्फुरत्कान्त्या सानन्दस्मितमांसलः ।
सर्वैरनुचरैस्सार्धं भगवानब्जलोचनः ॥
ज्ञानाग्निमभिनृत्यन्तं प्रविवेश शुचिस्मितः ।
नन्दीभृङ्गीमहाकालप्रमुखैश्च गणेश्वरैः ॥
आनीलकन्धरश्चन्द्रचूडो गङ्गावतंसभृत् ॥
भोगिभूषितसर्वाङ्गो भस्मोद्धूलितविग्रहः ।
स्वमूलाङ्गस्वरूपेण शम्भुनाथेन दर्शितः ॥
प्रविवेश महाज्वालमुज्ज्वलच्चिद्धुताशनम् ।
ब्रह्मणा प्रेरितास्सर्वा (?) अपि षट्षष्टिकोटयः ॥
अपतन्नप्सरःसंघा ज्वलद्रूपे हुताशने ।

तारकाद्या दुरात्मानः भण्डाद्याश्च महासुराः ॥
तत्कर्म सुविनिन्दन्तः प्रमत्ता जोषमास्थिताः ।
अथ ब्रह्मा स्वसदृशैर्मरीचिप्रमुखैः सह ॥
ब्रह्मभिस्तापसेन्द्रैश्च सत्यलोकनिवासिभिः ।
महर्लोकगतैर्लोकैस्तपोलोकादिषु स्थितैः ॥
अन्येष्वपि च लोकेषु वर्तमानैर्महात्मभिः ।
सह संतुष्टहृदयैर्युक्तः कमलविष्टरः ॥
स्मयमानमुखाम्भोजश्चतुर्मुख्या कृतस्तुतिः ।
सावित्र्या चैव गायत्र्या सरस्वत्या च संयुतः ॥
निजवाहनहस्तेन तत्प्रभूतैः खगैस्समम् ।
प्रविवेश महाज्वालालङ्कितांशं हुताशनम् ॥
एवंप्रकारतः सर्वान् मानसानौद्भिदानपि ।
जरायुजानण्डजांश्च स्वेदजांश्च शरीरिणः ॥
जुहाव स महाहोता श्रीमहाशम्भुमान्त्रिकः ।
अवशिष्टा केवलोर्वी निर्वृक्षाश्चापि भूधराः ॥
अवशिष्टो महायागे होता चान्तेऽपि शाम्भवः ।
अन्यत्सर्वं हुतं तस्मिन् महति ज्ञानशुष्मणि ॥
दर्शनानि च सर्वाणि विद्यास्सर्वाश्च भूमयः ।
नानाविधानि वेद्यानि मतानि मतशालिना ॥
सुहुतानि हुताशेऽस्मिन्नादिशाम्भववायुना ।
इत्थं शम्भुमहेशेन हुतैस्सर्वैश्च वस्तुभिः ॥
ऊर्ध्वाण्डभित्तिपर्यन्तं ज्वालाविद्धवपुर्बुधः ।
स नित्यहोता परमः शम्भुनाथोऽपि चिन्मयः ॥
पराशक्त्याऽखिलं हुत्वा स्वाकारं प्रत्यपद्यत ।
संप्रपन्ननिजाकारो वायुरूपं परित्यजन् ॥

आजुहाव चिदग्निस्थां कारिकाष्टकपाठतः ।
विश्वरूपिणि सर्वात्मे विश्वभूतैकनायिके ॥
ललितापरमेशानि संविद्वह्नेस्समुद्भव ।
आनन्दरूपिणि परे जगदानन्ददायिनि ॥

ज्ञातृज्ञानज्ञेयरूपे महाज्ञानप्रकाशिनि । ललिता० ॥
लोकसंहाररसिके कालिके भद्रकालिके । ललिता० ॥
लोकसंत्राणरसिके मङ्गले सर्वमङ्गले । ललिता० ॥
विश्वसृष्टिपराधीने विश्वनाथे विशङ्कटे । ललिता० ॥
संविद्वह्नौ हुताशेषसृष्टिसंपादिताकृते । ललिता० ॥

भण्डाद्यैस्तारकाद्यैश्च पीडितैश्च सभांमुदे ।
ललितापरमेशानि संविद्वह्नेः समुद्भव ॥
इत्यष्टकारिकापाठं कुर्वाणे शम्भुनायके ।
आविर्बभूव चिद्वह्नेर्ललिता परमेश्वरी ॥
चतुर्योजनविस्तारं दशयोजनमुन्नतम् ।
नवपर्वसमायुक्ता सर्वतेजोमयाकृतिः ॥
चतुर्वेदमहाचक्रं पुरुषार्थमहाहयम् ।
आनन्दध्वजसंयुक्तं तप्तकार्तस्वरोज्ज्वलम् ॥
सर्वाग्रे बिन्दुपीठेन सहितं बिन्दुचारुणा ।
मेरुप्रस्ताररूपाढ्यं चक्रराजरथोत्तमम् ॥
आरूढा ललिता देवी स्वयं प्रथममुद्गता ।
पश्चात् स्रष्टुं समुद्युक्ता पुंरूपं स्वात्मनासृजत् ॥
स्वपुंरूपमयं देवं श्रीकामेश्वरनायकम् ।
तमेव शम्भुनाथं सा सृष्ट्यर्थं पतिमातनोत् ॥
तेन श्लिष्टा भगवती श्रीकामेश्वरकामिना ।
वाञ्छामात्रेण चत्वारि महास्त्राण्यम्बिकासृजत् ॥

पाशांकुशेक्षुधनुर्बाणायुधलसत्करा ।
उद्यत्सहस्रचंण्डांशुप्रतिमानवपुर्द्युतिः ॥
चन्द्रार्धनद्धमुकुटा कुचभारेण मन्थरा ।
सदा षोडशवर्षीया स्मयमानमुखाम्बुजा ॥
सर्वाभरणशोभाढ्या सर्वसौन्दर्यरूपिणी ।
त्रैलोक्यममृताकारैः स्नपयन्तीव रश्मिणैः ॥
ददर्श शम्भुनाथं वै महाहोत्रमयी हि सा ।
तेन नानाविधैः स्तोत्रैर्वेदार्थैर्भावगर्भितैः ॥
स्तुता सा ललिता देवी नन्दिता च मुहुर्मुहुः ।
आत्मानं बहुधाकर्तुं स्त्रीपुंरूपव्यवस्थया ॥
ब्रह्मविष्णुमहेशानशक्रादिसुररूपतः ।
प्रचक्रमे भगवती ललिता परमेश्वरी ॥
कामेश्वरेण संयुक्ता परानन्दस्वरूपिणी ।
अथ सोमात्मकाद् वामान्नेत्राद् ब्रह्मा तथा रमा ॥
दक्षिणात् सूर्यरूपाच्च ललिताया विलोचनात् ।
विष्णुश्चैव मृडानी च द्वौ जन्म प्रापतुः शुभम् ॥
अथ रुद्रश्च वाग्देवी ललिताया ललाटजात् ।
वह्निरूपादभिमताः संभवत्कुम्भसंभव ॥
ब्रह्मलक्ष्म्यौ तटित्कान्ती विष्णुगौर्यौ घनद्युती ।
सर्ववाग्देवते शुभ्रे सौन्दर्यं च परस्परम् ॥
तासां विनिमयं चक्रुः भार्यात्वेन च तेऽखिलाः ।
लक्ष्मीर्विष्णोरभूज्जाया शर्वाणी सर्वभामिनी ॥
सरस्वती ब्रह्मणश्च पत्न्यभूत्कुम्भसंभव ।
सकलत्रांश्च तान् देवान् प्रणतान् ललिताम्बिका ॥
आदिदेश जगत् स्रष्टुं पातुं हन्तुं तथाज्ञया ।

कुमारा ललिता देव्यास्ते प्राथमिकसंभवाः ॥
स्वं स्वं स्थानं ययुः प्राप्तनवीननिजविग्रहाः ।
सर्वं विश्वं नवमिव प्ररूढानन्दनिर्भरम् ॥
ललितापरमेश्वर्याः प्रादुर्भावेन चाऽभवत् ।'—इति ।
'आ वो राजानमध्वरस्य रुद्रं होतारम्' इति श्रुतिः ॥

चक्रेश्वराय—चक्रस्य सुदर्शनाख्यस्य ईश्वरो नियन्ता निर्मातेति यावत् । पाद्मे—

चरणाङ्गुष्ठरेखोत्थे जलमध्ये सुदर्शनम् ।
गु·········क·········शक्तिक्रियात्मकम् ।
शिवः कालात्मकं चक्रं दक्षिणाङ्गुष्ठरेखया ।
निर्ममेऽमोघसंकल्पः क्षणकाष्ठाकलात्मकः ॥'—इति ।
'नमः स्वायुधाय च सुधन्वने च' इति श्रुतिः ।

रुचये—।

नक्षत्रमालिने—नक्षत्राणां कृत्तिकादीनामुपलक्षणमेतद् ग्रहादीनां माला सास्यास्तीति नक्षत्रमाली । तथा च कौर्मे—दिव्यां विशालां ग्रथितां ग्रहैस्सार्केन्दुतारकैः । मालामप्यद्भुताकारां धायरन् पादलम्बिनीम् ॥' इति । 'दीप्ताय दीप्तरूपिणे' इति श्रुतिः । यद्वा—नक्षत्राणि हस्तादीनि पञ्च नक्षत्राणि तेषां माला पङ्क्तिः सा हस्ताद्यवयवत्वेनास्यास्तीति । अत्र श्रुतिः—'यो वै नक्षत्रियं प्रजापतिं वेद । उभयोरेनं लोकयोर्विदुः । हस्त एवास्य हस्तः । चित्रा शिरः । निष्ट्या हृदयम् । उरू विशाखे । प्रतिष्ठानूराधाः । एष वै नक्षत्रियः प्रजापतिरिति ॥१२८॥

**अनर्थनाशनायाऽथ भस्मलेपकराय च ।**
**सदानन्दाय विदुषे सद्गुणाय विरोधिने ॥१२९॥**

**अनर्थनाशनाय**—अनर्थः प्रतिकूलत्वेन वेदनीयः—संसारदुखं रजःकार्यम्, तन्नाशयति तत्त्वमस्यादिमहावाक्यजन्यवृत्त्यारूढः सन्निति अनर्थनाशनः। 'निचाय्य तन्मृत्युमुखात् प्रमुच्यते' इति श्रुतिः। **भस्मलेपकराय**—भस्मना उद्धूलनरूपेण त्रिपुण्ड्ररूपेण स्ववपुषि लेपं करोतीति भस्मलेपकरः। पराशरोपपुराणे चतुर्दशाध्याये—

'त्रिपुण्ड्रधारणं तिर्यग् भस्मना चाऽवकुनण्ठम्।
सुदुर्लभमिति ज्ञात्वा खलु सर्वेश्वरोऽकरोत्॥
निर्दुःखो निर्मलः साक्षान्नित्यानन्दो निरञ्जनः।
किमर्थमकरोद् ब्रूहि शिवः साक्षान्निरामयः॥
अनियोज्यः सदा कर्ता सदा भोक्ता महेश्वरः।
किमर्थकमरोद् ब्रूहि साधकस्योदितं मुने॥
तस्मात् सुदुर्लभं नृणामिति ज्ञात्वा महेश्वरः।
त्रिपुण्ड्रधारणं भस्मकुण्ठनं चाऽकरोत्सदा॥
अनिष्पन्नस्य कर्तव्यं त्रिपुण्ड्रादेस्तु धारणम्।
विशेषेण स्वलाभाय नाऽन्यलाभाय सत्तम॥
स्वलाभमन्तरेणाऽपि पराचारार्थमास्तिक।
निष्पन्नेनाऽपि कर्तव्यं यथा सर्वेश्वरेण तु॥'—इति।

'एष ह्येव साधु कर्म कारयति' इति श्रुतिः। **सदानन्दाय**—कालत्रयाबाधितनिरतिशयसुखस्वरूपः सदानन्दः। 'विज्ञानमानन्दं ब्रह्म' इति श्रुतिः। **विदुषे**—विद्वान् विपश्चित्, सर्वज्ञ इति यावत्। 'न जायते म्रियते वा विपश्चित्' इति श्रुतिः। **सगुणाय**—गुणातीतोऽपि सृष्टिस्थितिसंहारार्थं सत्त्वरजस्तमोगुणवान् सगुणः। तदुक्तमभियुक्तैः—

'गुणातीतोऽपीशस्त्रिगुणसचिवस्त्र्यक्षरमय-
त्रिमूर्तिर्यः सर्गस्थितिविलयकर्माणि तनुते ।' —इति ।

'सर्वमेतद्विश्वमधितिष्ठत्येको गुणांश्च सर्वान् विनियोजयेद्यः' इति श्रुतिः । विरोधिने—दुष्टदैत्यानामुद्धतानां कामक्रोधादीनां वा विरोधी शमयिता' कल्पान्ते सर्वप्रपञ्चसंहर्ता वा । 'नमः सहमानाय निव्याधिने इति, 'तस्मादुपसंहर्त्रे महाग्रासाय वै नमो नमः' इति श्रुतेः । अथवा—ब्रह्मविद्यारूढः सन्नज्ञानं तत्कार्यरूपं व्यतिरिक्तं सर्वं संहरतीति वा सर्वसंहारसमर्थः । 'परिभवासहः' इति श्रुतिः ॥१२९॥

**दुर्गमाय शुभाङ्गाय मृगव्याधाय ते नमः ।**
**प्रियाय धर्मधाम्ने ते प्रयोगाय विभागिने ॥१३०॥**

**दुर्गमाय**—दुःखेन गम्यते ज्ञायते इति दुर्गमः, तद्विषयज्ञानसाधनस्य श्रवणमनननिदिध्यासनरूपस्य दुर्घटत्वात् । 'दुर्गं पथस्तत्कवयो वदन्ति' इति श्रुतिः । **शुभाङ्गाय**—शोभनानि भक्तानां ध्यानविषयार्थं स्वीकृतानि अङ्गानि स्मरणकथनमात्रेण सर्वापन्निवारणपूर्वकसर्वाभीष्टफलप्रदानि यस्य स शुभाङ्गः । 'नमः शङ्कराय च' इति श्रुतिः । **मृगव्याधाय**—मृगव्याधो मृगहिंसकः, किरातवेषधारीत्यर्थः । यथोक्तं भविष्योत्तरपुराणे—

'इत्युच्यमाने नृपनन्दने तदा
किरातरूपी भगवान् महेश्वरः ।
प्रसन्नतामाप तदा किरीटिने
वरं प्रदातुं विजयाय शत्रुषु ॥'—इति ।

'पञ्चविंशतिवर्षोऽसौ मायूरकृतशेखरः ।
समावृतो वलाकैश्च बर्हिश्चातिमनोहरैः ॥

गच्छद्भिरग्रतो दृप्तैः किरातवपुरीश्वरः ।
एवंरूपो महातेजाः सिद्धो यो जगतां गुरुः ॥'

—इति रहस्यम् । 'नमो मृगयुभ्यः श्वनिभ्यश्च वो नमः' इति श्रुतिः । **प्रियाय**—परमप्रेमास्पदत्वेन प्रत्यगात्मरूपत्वात् सर्वेषां प्रियः । 'प्रेयोऽन्यस्मात् सर्वस्मात्' इति श्रुतिः । **धर्मधाम्ने**—धर्मः स्वीयस्वभावः, 'धर्माः पुण्ययमन्यायस्वभावाचारसोमपाः' इत्यमरः ; स धाम प्रतिष्ठा न तु पृथिव्यादिर्यस्य स धर्मधामा । 'स भगवः कस्मिन् प्रतिष्ठित इति, स्वे महिम्नि ।' इति श्रुतिः । यद्वा—सर्वज्ञतादीनि अङ्गानि यस्येति । यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिरूपयोगाष्टाङ्गानि स्वज्ञानसाधनत्वेन यस्येति वा, 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुतेः । **प्रयोगाय**—प्रयुज्यते संवर्ध्यते धर्मज्ञानवैराग्यादिषु भक्तोऽनेन इति प्रयोगः । 'एष ह्येव साधु कर्म कारयति' इति श्रुतिः । **विभागिने**—वर्णाश्रमादिधर्मानुष्ठानवतां फलविभागः परमेश्वराधीन इति विभागी । 'अन्नादो वसुदानः' इति श्रुतिः ॥१३०॥

**नाद्यायाऽमृतपानाय सोमपाय तपस्विने ।**
**नमो विचित्रवेषाय पुष्टिसंवर्धनाय च ॥१३१॥**

**नाद्याय**—नदीगतजलरूपो नाद्यः । 'नमो नाद्याय च' इति श्रुतिः । **अमृतपानाय**—स्वात्मानन्दामृतमनुसन्धानेन सर्वदा पिवतीत्यमृतपानः । 'आनन्दरूपममृतं यद्विभाति' इति श्रुतिः । **सोमपाय**—सोमं पिवति सर्वयज्ञेषु यष्टव्यदेवतारूपेणेति सोमपः । 'आ वो राजानमध्वरस्य रुद्रम्' इति श्रुतिः । **तपस्विने**—स्रष्टव्यजगद्विषयपर्यालोचनं तपः, तद्वान् तपस्वी ।

स तपस्तप्त्वा इदं सर्वमसृजत' इति श्रुतिः । विचित्रवेषाय—भक्तानुग्रहार्थं बालवृद्धरूपेण अन्त्यादिरूपेण वा विचित्रा वेषा यस्य स विचित्रवेषः । अथवा—चन्द्रशेखरदाक्षायणं (?) प्रति वृषभारूढता वा (?) कृतिकल्याणसुन्दरभिक्षाटनगजासुरान्तक-कालसंहारी त्रिपुरारिजलन्धरवधवीरभद्रभैरवशरभार्धनारी-श्वरकिरातकङ्कालधारी चण्डेशानुग्रहदायी कालकूटविषादनः विष्णोश्चक्रप्रदायी विघ्नराजस्य प्रसन्नवदनः सोमास्कन्द एकपाद-धरहरविष्ण्वाद्यैः सेव्यमानः सुखासनदक्षिणामूर्तिः ब्रह्मविष्ण्वो-र्मध्यदेशे तयोर्युद्धप्रशान्तये महालिङ्गोद्भवरूपेणेति पञ्चविंशति-संख्यकाः चित्रा वेषा यस्येति । 'य एको जालवानीशत ईशि-नीभिः सर्वांल्लोकानीशत ईशनीभिः । य एवैक उद्भवे संभवे च' इति श्रुतिः । पुष्टिसंवर्धनाय—पुष्टीनां दशविधानां सम्यग्वर्ध-यिता पुष्टिसंवर्धनः । पुष्टयः पूर्वमुक्ताः । 'सुगन्धिं पुष्टिवर्धनम्' इति श्रुतिः ॥१३१॥

**चिरन्तनाय धनुषे वृक्षाणां पतये नमः ।**
**निर्मायायाऽग्रगण्याय व्योमातीताय ते नमः ॥१३२॥**

चिरन्तनाय—कालसंख्यारहितश्चिरन्तनः । 'तमादिम-ध्यान्तविहीनमेकम्' इति श्रुतिः । धनुषे—धनुः पिनाकाख्यम्, तद्रूपः परमेश्वरः । अथवा शिवोपकरणत्वात् प्राधान्येन धनुष एव नमस्कार इषुमन्युबाहूनामिव । यथोक्तं श्रीरुद्रे—'नमस्ते रुद्रमन्यव उतोत इषवे नमः । बाहुभ्यामुत ते नमः' इति । किञ्च—आयुधमध्ये धनुषः प्राधान्यम्, श्रुत्यादिषु तस्मिन्नतिशयस्य दर्शनात् । तथा हि 'पिनाकहस्तः कृत्तिवासाः', 'पिनाकी', 'धनुर्गृहीत्वौपनिषदं महास्त्रम्', 'कृत्तिं वसान आचर पिनाकम्', 'प्रणवो धनुः शरो

ह्यात्मा', 'शिवं बभूव ते धनुः', 'प्रमुञ्च धन्वनस्त्वम्', 'अवतत्य धनुष्ट्वम्', 'विज्यं धनुः कपर्दिनः', 'हस्ते बभूव ते धनुः', बाहुभ्यां तव धन्वने', "धन्वायिभ्यश्च वो नमः', 'शतधन्वने च नमः, 'अत्र धन्वानि तन्मसि', 'सुधन्वने च' इति मन्त्रदशके। 'यस्त्विषुः सुधन्वा' इत्येवमादिश्रुतिषु। 'यः कृत्वा धनुरोङ्कारम्' इति महाभारते। 'इन्द्रो धनुः' इति शिवरहस्ये। 'रत्नसानु शरासनम्' इत्यादिपुराणेषु बहुधा द्रष्टव्यम्। वृक्षाणां पतये— वृक्षा अश्वत्थवृक्षादयस्तेषां पतिः स्वामी। 'वृक्षाणां पतये नमः' इति श्रुतिः। **निर्मायाय**—मायाया निर्गतो निर्मायः। यद्यपि 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति मायासम्बन्धः श्रुतिषु दृश्यते; तथापि मायायाः कल्पितत्वेन वास्तवसम्बन्धाभावात् कल्पितसम्बन्धपरेयं श्रुतिः। अत एव 'अव्यक्तात् पुरुषः परः', 'अक्षरात् परतः परः', 'अविद्याकार्यहीनः', 'अतमस्कममायम्' इत्येवमादिः श्रुतिः। **अग्रगण्याय**—अग्रे गण्यत इति अग्रगण्यः। ईश्वरत्वगुरुत्वादौ। 'ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम्' इति, 'तमीश्वराणां परमं महेश्वरम्' इति च श्रुतेः। 'स पूर्वेषामपि गुरुः कालेनानवच्छेदात्' इति योगसूत्रे। **व्योमातीताय**—अव्याकृताकाशात् परो व्योमातीतः। 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति' इति प्रश्नस्य अव्याकृताधिष्ठानविषयस्य उत्तरम् 'एतदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनणु' इत्यारभ्य 'एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' इत्यनेन श्रुतिरूपेण ॥१३२॥

**संवत्सराय लोप्याय स्थानदाय स्थविष्णवे।**
**व्यवसायफलान्ताय महाकर्त्रे प्रियाय च ॥१३३॥**

संवत्सराय—संवसन्ति भूतान्यस्मिन्निति संवत्सरः। 'कर्माध्यक्षः सर्वभूताधिवासः' इति श्रुतिः। लोप्याय—लुप्यते तृणादिकमस्मिन्निति लोपः कठिनप्रदेशः, तत्र भवो लोप्यः। 'नमो लोप्याय च' इति श्रुतिः। स्थानदाय—तिष्ठन्त्यस्मिन्निति स्थानं ब्रह्मादिपदानि स्वकीयं परमं पदं च [ स्थान-शब्दार्थः ], तद्देवेभ्यो भक्तेभ्यश्च यथार्हं ददातीति स्थानदः। 'एष ह्येव साधु कर्म कारयति यमेभ्यो लोकेभ्य उन्निनीपते', 'अन्नादो वसुदानः' इति श्रुतिः। स्थविष्णवे – सर्वदा वर्तमानः स्थविष्णुः, नित्य इति यावत्। 'अजो नित्यः शाश्वतोऽयम्' इति श्रुतिः। व्यवसाय-फलान्ताय—व्यवसायो व्यवस्थितिः ज्ञानविशेषः, निश्चयरूप इति यावत्। तस्य फलं संशयज्ञानानां निवृत्तिः। तथा च यस्य यद्विषयकनिश्चयो जायते तस्य तद्विषयार्थिनस्तत्र प्रवृत्तिर्भवति। यथा – रज्ज्वार्थिनः रज्जुनिश्चयसर्पादिभ्रान्त्यादिनिवृत्तौ तत्र प्रवृत्तिः। यथा धर्मानुष्ठानार्थिनः धर्मविषयकनिश्चये तत्र प्रवृत्तिः। परशिवविषये तु निश्चये परशिवस्य प्रत्यगभिन्नत्वेन उत्पन्ने अज्ञानादिनिवृत्तिः फलम्। अनन्तरं रज्जुधर्मादिप्रवृत्तिवदत्र अनुष्ठानापेक्षा नास्तीति ज्ञानफलमेवान्त इति व्यवसायफलान्तो मोक्षरूपः। तदुक्तं भाष्यकारैः—'अभ्युदयफलं धर्मज्ञानम्, तच्चा-नुष्ठापेक्षम्। निःश्रेयसफलं तु ब्रह्मज्ञानं न चानुष्ठानान्तरापेक्षम्' इति। 'ब्रह्म वेद ब्रह्मैव भवति' इति श्रुतिः।

॥ इति सप्तमशतकभाष्यम् ॥

———–

# ॥ अथ अष्टमशतकभाष्यम् ॥

महाकर्तृप्रियाय—महाकर्त्रे प्रियो महाकर्तृप्रियः, तस्याऽनुग्राहक इति यावत् । ज्ञानवासिष्ठे—

'रागद्वेषौ सुखं दुःखं धर्माधर्मे फलाफले ।
यः करोत्यनपेक्ष्यैव महाकर्ता स उच्यते ॥'—इति ।

यः पुमान् रागद्वेषादीन् कारणत्वेन कार्यत्वेन वाऽनपेक्ष्यैव करोति, रागादिकं स्वप्रवृत्तौ हेतुत्वेनापि नापेक्षते, प्रयोजनत्वेनापि नापेक्षते, स महाकर्ता उच्यते ।

'मौनवान्निरहंभावो निर्मानो गतमत्सरः ।
यः करोति गतोद्वेगं महाकर्ता स उच्यते ॥'—इति ।

यः पुमान् मौनवान् करिष्यामीति न वक्ति; निरहम्भावः—अहमेवास्य कर्तेति नाहङ्करोति । निर्मानः—स्वस्मिन् स्वकार्ये वा उत्कर्षं न मन्यते; गतमत्सरः—परशुभप्रद्वेषरहितः । इत्थंभूतः सन् गतोद्वेगमव्याकुलमेव करोति, स महाकर्तेत्युच्यते ।

'सर्वत्र विगतस्नेहो यः साक्षिवदवस्थितः ।
निरिच्छो वर्तते कार्ये महाकर्ता स उच्यते ॥'

इत्यन्तेन ब्रह्मपरत्वं सूच्यते, न तु विषयाभिलषितम् । 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वाम्' इति श्रुतिः ॥ १३३ ॥

**गुणत्रयस्वरूपाय नमः सिद्धिस्वरूपिणे ।**
**स्वरूपरूपरूपाय स्वेच्छाय पूरुषाय च॥१३४॥**

गुणत्रयस्वरूपाय—गुणत्रयं सत्त्वरजस्तमांसि कार्य-

कारणरूपेण विद्यमानानि तदुपाधिकाश्च जीवाः। 'ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः। तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः॥ श्रीभगवानुवाच—त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा। सात्त्विकी राजसी चैव तामसी चेति तां शृणु॥'—इत्यादिना प्रतिपादितं स्वरूपं यस्य स गुणत्रयस्वरूपः। 'सर्वं खल्विदं ब्रह्म' इति श्रुतिः। सिद्धिस्वरूपिणे—सिद्धिर्द्विविधा उत्पत्तिर्ज्ञप्तिश्चेति। अत्र सिद्धिशब्देन ज्ञप्तिर्ब्रह्मविद्योच्यते, तद्वान् सिद्धः; ब्रह्मनिष्ठ इति यावत्। तत्स्वरूपी परशिवः, 'ज्ञानी त्वात्मैव मे मतम्' इति भगवद्वचनात्। यद्वा—नित्यसिद्धस्वरूपी। सर्वदा विद्यमानश्च सर्वदा प्रकाशमानश्च इति यावत्। 'सिद्धं ब्रह्म' इति श्रुतिः। स्वरूपरूपरूपाय—स्वीयं सर्वदा विद्यमानं सच्चिदानन्दात्मकं रूपं स्वरूपं तदेव रूपं सर्वदा भासमानं न त्वनृतजडदुःखात्मकं प्रपञ्चरूपं वास्तवं कालत्रयेऽपि रूपं यस्य स स्वरूपरूपरूपः। 'स्वात्मस्थमानन्दचिद्घनम्' इति श्रुतिः। स्वेच्छाय—स्वा स्वीया इच्छा यस्य स स्वेच्छः स्वतन्त्र इति यावत्। 'शाश्वतोऽजोऽनन्तयः स्वतन्त्रः' इति श्रुतिः। पूरुषाय—स्वस्य कार्यस्य प्रपञ्चस्य स्वरूपेण पूरयिता। यद्वा—सर्वासु पूर्षु शेते इति पूरुषः। ब्रह्मगीतायाम्—

'पुरुषो नाम सुपूर्णः शिवः सत्यादिलक्षणः।
साम्बमूर्तिधरो नाऽन्यो रुद्रो विष्णुरजोऽपि वा॥'—इति।

गारुडे—

'वेदाऽहमेतं पुरुषं चिद्रूपं तमसः परम्।
सोऽहमस्मीति मोक्षाय नाऽन्यः पन्था विमुक्तये॥'—इति।

'अव्यक्तात् पुरुषः परः' इति श्रुतिः॥१३४॥

कालात्पराय वेद्याय नमो ब्रह्माण्डरूपिणे ।
अनित्यनित्यरूपाय तदन्तर्वर्तिने नमः ॥१३५॥

कालात्पराय—कालः सर्वभूतानां परिणामहेतुस्तस्मात् परः, तस्य कालानवच्छिन्नत्वात् कालस्यापि कारणत्वाच्च । 'ज्ञः कालः' इति श्रुतिः । वेद्याय—निःश्रेयसार्थिभिः वेदनार्हत्वात् वेद्यः । 'वेदैश्च सर्वैरहमेव वेद्यः' इति श्रुतिः । ब्रह्माण्डरूपिणे—ब्रह्माण्डं ब्रह्मणः सम्बन्ध्यण्डं 'तदण्डं निरवर्तत' इत्यादिश्रुतिप्रसिद्धं रूपम्—राजतसौवर्णकपालद्वयात्मकं पक्ष्यण्डावयवसदृशावयवात्मकं सत्यलोकादिचतुर्दशलोकसहितं मानसादिपञ्चविधसृष्टिसहितं गिरिनद्यादिसहितं च पृथिव्याद्यष्टावरणावृतं स्वरूपम्—कार्यत्वेनाऽस्यास्तीति ब्रह्माण्डरूपी । 'सर्वं खल्विदं ब्रह्म' इति श्रुतिः । अनित्यनित्यरूपाय—अनित्या ब्रह्माण्डं तदन्तर्वर्तिगिरिनदीसमुद्रचतुर्विधभूतग्रामादि, नित्या ब्रह्मादिपिपीलिकान्तर्वर्तिनः सर्वे आत्मानः अनित्यनित्याः, तदुभयात्मकः अनित्यनित्यरूपः । तदुक्तं स्कान्दे—

'नमः पिनाकहस्ताय नमः शूलधराय ते ।
नित्याय चैवाऽनित्याय नित्यानित्याय ते नमः ॥'—इति ।

'सोऽहं नित्यानित्योऽहं व्यक्ताव्यक्तो ब्रह्माब्रह्माहम्' इति श्रुतिः । तदन्तर्वर्तिने—तेषामनित्यनित्यत्वेन उक्तानामन्तर्यामितया वर्तते इति तदन्तर्वर्ती । 'पृथिव्यां तिष्ठन्' इति प्रस्तुत्य 'यः पृथिवीमन्तरेण यमयति' इति, 'य आत्मानमन्तरो यमयति' इत्यादिश्रुतिः ॥१३५॥

नमस्तीर्थ्याय कूल्याय पूर्णाय बटवे नमः ।
पञ्चतन्मात्ररूपाय पञ्चकर्मेन्द्रियात्मने ।

विशृङ्खलाय दर्पाय नमस्ते विषयात्मने ॥१३६॥

तीर्थ्याय - तीर्थं प्रयागादि, तत्र भवः तीर्थ्यः। कूल्याय—कूले गङ्गा-नर्मदा-गोदावरी-कावेर्यादिनदीतीरे प्रतिष्ठापितलिङ्गरूपेण अवतिष्ठतीति कूल्यः। 'नमस्तीर्थ्याय च कूल्याय च' इत्युभयत्र श्रुतिः। पूर्णाय—कालतो देशतो वस्तुतः परिच्छेदरहितः पूर्णः। स्कान्दे—

अन्यच्चाऽस्तितया भातं तथा नाऽस्तीति शब्दितम्।
सर्वं पूर्णं शिवं पश्यन् स्वयं पूर्णः शिवो भवेत् ॥'-
इति।

'स्वपूर्णात्मशिवानन्दनिष्ठामासाद्य मानवः।
तदेव लभते मुक्तिं स्वपूर्णात्मशिवात्मिकाम् ॥'-इति च।

'पूर्णमदः पूर्णमिदम्' इति श्रुतिः। बटवे—बटुः ब्रह्मचारी, तद्रूपः। पाद्मे—

'अथाऽऽस्थाय महादेवः प्रथमाश्रमिणो वपुः।
प्रगल्भवाग्गुमायाश्च तपोवनमुपागमत् ॥
आषाढमजिनं मौञ्जीं कौपीनमुपवीतकम्।
अक्षमालां जटामेकां भस्मधारां च धारयन् ॥
प्रथमाश्रमधर्मं तं मूर्तिमन्तमुपागतम्।
उमासखीनां चेतांसि विलोक्याऽस्मिन्नवापतन् ॥'-इति।

'पुरुषाय ब्रह्मचारिणे नमो नमः' इति श्रुतिः। पञ्चतन्मात्ररूपाय—अपञ्चीकृतपञ्चमहाभूतानि आकाशादिपृथिव्यन्तानि पञ्चतन्मात्राणि तानि रूपमस्येति पञ्चतन्मात्ररूपः। पञ्चकर्मेन्द्रियात्मने—पञ्चसंख्याकानि कर्मेन्द्रियाणि वाक्पाणिपाद-

पायूपस्थरूपाणि आत्मा स्वरूपं यस्य सः पञ्चकर्मेन्द्रियात्मा । उपलक्षणमेतत्—ज्ञानेन्द्रियान्तःकरणप्राणानाम् । पञ्चतन्मात्रपदेन पञ्चीकृतपञ्च-महाभूतानि उपलक्ष्यन्ते । यद्वा-उत्तरत्र 'विषयात्मने' इति विषयपदेनैव तेषामुक्तिः । 'विश्वं भूतं भव्यं भुवनं चित्रं बहुधा जातं जायमानं च यत् । सर्वो ह्येष रुद्रः' इति श्रुतिः । विशृङ्खलाय—स्वेच्छाव्यवहारो विशृङ्खलः, ब्रह्मपञ्चमशिरश्छेदकालसंहारादिकारणात् । दर्पाय—दर्पोऽस्यास्तीति दर्पः, अर्शाद्यच्प्रत्ययान्तः । स्वात्मामृतरसास्वादेन नित्यमुदितत्वात् दर्पत्वम् । 'कस्तं मदामदं देवम्' इति श्रुतिः । विषयात्मने— शब्दस्पर्शरूप-रसगन्धवचनादानगमनविसर्गानन्दादयो विषयाः, ते आत्मा स्वरूपं यस्य स विषयात्मा ॥१३६॥

अनवद्याय शास्त्राय स्वतन्त्रायाऽमृताय च ।
नमः प्रौढाय प्रज्ञाय योगारूढाय ते नमः ॥१३७॥

अनवद्याय—अगर्हणीयः अनवद्यः । 'निरवद्यं निरञ्जनम्' इति श्रुतिः । शास्त्राय—शास्त्रम् ऋग्वेदादि, तद्रूपः । 'ऋग्यजुःसामाथर्वाङ्गिरसोऽहम्' इति श्रुतिः । स्वतन्त्राय—सृष्टिस्थितिसंहारेषु अन्यानपेक्षः स्वतन्त्रः । 'शाश्वतोऽनन्त्यः स्वतन्त्रः' इति श्रुतिः । अमृताय— अविनाशिस्वभावः अमृतः । 'तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते' इति श्रुतिः । प्रौढाय—प्रौढः प्रकृष्टः, श्रेष्ठ इति यावत् । 'श्रेष्ठोऽहं वरिष्ठोऽहम्' इति श्रुतिः । प्रज्ञाय—प्रज्ञः प्रत्यक्स्वप्रकाशसाक्षी चिद्रूपः । 'स एतेन प्रज्ञेनात्मना' इति श्रुतिः । योगारूढाय—युज्यतेऽनेन इति योगः आत्मज्ञानम्, तस्मिन् आरूढः सर्वदा ज्ञाननिष्ठ इत्यर्थः । तदुक्तं पराशरोपपुराणे—

स्वात्मभूतपरानन्दपराशक्तिसमन्वितम् ।
पराहन्तानुसन्धानं परमक्रीडयाऽन्वितम् ॥'–इति ।

तथा सूतसंहितायाम्—

'परतत्त्वतया रुद्रः स्वात्मानं मनुते भृशम् ।
परतत्त्वप्रकाशेन न तथा देवतान्तरम् ॥'–इति ।

तथा शिवगीतायाम्—

'महत्यात्मज्ञानयोगैश्वर्ये यस्तु महीयते ।
सर्वान् भावान् परित्यज्य महादेवस्ततोऽस्म्यहम्* ॥'–इति ।

'अथ कस्मादुच्यते महादेवो यः सर्वान् भावान् परित्यज्य आत्मज्ञानयोगैश्वर्ये महति महीयते†' इति श्रुतिः ॥ १३७ ॥

**मन्त्रज्ञाय प्रगल्भाय प्रदीपविमलाय च ।**
**विश्वावासाय दक्षाय वेदनिःश्वसिताय च ॥१३८॥**

मन्त्रज्ञाय—मन्त्रालोचने समर्थो मन्त्रज्ञः । परमेश्वरस्य परशम्भुरूपस्य मन्त्रज्ञत्वं ब्रह्माण्डपुराणे प्रसिद्धम् । तथा हि—

---

* मुद्रितशिवगीतायामयं श्लोक इत्थं पठितो दृश्यते—
"महत्स्वात्मज्ञानयोगैरैश्वर्यैस्तु महीयते ।
सर्वान् भावान् महादेवः सृजत्यवति सोऽस्म्यहम् ॥"–शिवगीता ६।४२ ।

† श्रुतिरेषाऽथर्वशिरसि इत्थं पठिताऽस्ति—
अथ कस्मादुच्यते भगवान् महेश्वरः यस्माद्भक्ता ज्ञानेन भजन्त्यनुगृह्णाति च वाचं संसृजति विसृजति च सर्वान् भावान् परित्यज्यात्मज्ञानेन योगेश्वर्येण महति महीयते'

भण्डासुरेण ब्रह्मादीनां वीर्ये विनाशिते, ब्रह्मविष्ण्वादिभिः हिरण्यगर्भाण्डात् बहिर्निर्गत्य तत्रत्यपराकाशरूपे परशम्भुनाथे स्तुते, तस्मिन् प्रसन्ने, प्रलयत्रैविध्यकथनपूर्वकं 'महाप्रलयस्याहं कर्ता, अवान्तरप्रलयस्य विधिः, इदानीन्तनयुष्मदीयकामप्रलयस्य ललिताम्बिकैव कर्त्रीति तदुत्पत्तिः सम्पादनीया' इति तेनैवोक्ते, अनन्तरं देवा ऊचुः—

'कथं तस्या महादेव्याः समुत्पत्तिर्भविष्यति ।
कुतः स्थानात् समुत्पत्तिः केन वा कर्मणा भवेत् ॥
श्रीमहाशम्भुनाथैतद्विस्पष्टं प्रतिपाद्यताम् ।
त्वमेव सर्वोपाधीनां प्रज्ञाता परमेश्वरः ॥'—इति ।

महाशम्भुरुवाच—

'तत्र कल्पो भवद्भिस्तु तदुत्पादनकर्मणि ।
संश्रोतव्यः प्रयत्नेन सर्वकार्यस्य सिद्धये ॥
महायागः प्रकर्तव्यो महाहोमविधानतः ।'

—इत्यादिना । 'मन्त्रिणे वाणिजाय' इति श्रुतिः । प्रगल्भाय—प्रकर्षेण धृष्टा गणा नन्दीभृङ्गीमहाकालप्रभृतयो यस्य स प्रगल्भः । 'नमो गणेभ्यो गणपतिभ्यश्च' इति श्रुतिः । प्रदीपविमलाय—प्रदीपवद्विमलः स्वच्छः प्रदीपविमलः, स्वयंप्रकाश इति यावत् । 'दीपोपमेनेह युक्तः प्रपश्येत्' इति श्रुतिः । विश्वावासाय—विश्वेषां सर्वेषां भूतानामावासः अधिष्ठानम् , तदुपन्नत्वात् सर्वेषां भूतानाम् , स परमेश्वरो विश्वावासः । 'कर्माध्यक्षः सर्वभूताधिवासः' इति श्रुतिः । यद्वा—विश्वेषु आवासोऽस्येति विश्वावासः । 'यः सर्वेषु भूतेषु तिष्ठन्' इति श्रुतिः । दक्षाय—दक्षः अभिज्ञः, 'दक्षः प्रजापतौ वह्नौ ताम्रचूडे हरे मनौ । त्रिष्व-

भिज्ञः' इति रत्नमालायाम् । प्रजापतिर्वा दक्षः, सोऽनुग्राह्यत्वेना-स्यास्तीति मत्वर्थीयाच्प्रत्ययान्तः । अत्र कौर्मं वचनम्--

'तच्चापि शृणु मे दक्ष वचनं सर्वरक्षणम् ।
त्यक्त्वा च धिषणामेतां भक्तो भव प्रयत्नतः ॥
भविष्यसि गणेशानः कल्पान्तेऽनुग्रहान्मम ।
तावत्तिष्ठ ममाऽऽदेशात् स्वाधिकारेषु निर्वृतः ॥'—इति ।

सर्वकर्माणि क्षिप्रं करोतीति वा जगद्रूपेण वर्तमानत्वाच्च परमेश्वर एव दक्षः । 'सर्वं खल्विदं ब्रह्म' इति श्रुतिः । वेदनिःश्वसिताय—वेदा ऋग्वेदादयो निःश्वसितमिव यथाऽप्रयत्नेन पुरुषनिःश्वासो भवति एवं यस्य स वेदनिःश्वसितः । 'अस्य महतो भूतस्य निःश्वसितमेवैतद्यदृग्वेदः' इत्यादिश्रुतिः ॥१३८॥

**यज्ञाङ्गाय सुवीराय नागचूडाय ते नमः ।**
**व्याघ्राय बाणहस्ताय स्कन्दाय दक्षिणे नमः ॥१३९॥**

यज्ञाङ्गाय—यज्ञस्य अङ्गानीव अङ्गानि यस्य स यज्ञाङ्गः वराहमूर्तिः । तदुक्तं हरिवंशे—

'वेदपादो यूपदंष्ट्रः क्रतुदन्तश्चितीमुखः ।
अग्निजिह्वो दर्भरोमा ब्रह्मशीर्षो महातपाः ॥
अहोरात्रेक्षणधरो वेदाङ्गश्रुतिभूषणः ।
आज्यनासः स्रुवातुण्डः सामघोषस्वरो महान् ॥
सत्यधर्ममयः श्रीमान् क्रमविक्रमसत्कृतः ।
क्रियासत्रमहाघोणः पशुजानुर्मखाकृतिः ॥
उद्गात्रान्तो महालिङ्गो बीजौषधिमहाफलः ।
वाय्वन्तरात्मा मन्त्रस्पृग्विक्रमः सोमशोणितः ॥

वेदिस्कन्धो हविर्गन्धो हव्यकव्यातिवेगवान् ।
प्राग्वंशकायो द्युतिमान् नानादीक्षाभिरर्चितः ।।
दक्षिणाहृदयो योगी महासत्रमयो महान् ।
उपाकर्मोष्ठरुचकः प्रवर्ग्यावर्तभूषणः ।।
नानाछन्दोगतिपथो गुह्योपनिषदासनः ।
छायापत्नीसहायो वै मणिशृङ्ग इवोच्छ्रितः ।।'—इति ।

तद्रूपी । यद्वा—यज्ञस्य सोमयागादेः अङ्गानि सोमपश्वादीनि स्वीयत्वेन यस्य स तथा । अत्र श्रुतयः—'इमं पशुं पशुपते तेऽद्य बध्नामि' इति, 'अयं सोमः कपर्दिने' इति, 'रौद्रं गवि रौद्रं वै पश्वादयः' इति च। अथवा—यज्ञस्य अङ्गानि अग्निकुण्ड-पश्वादीनि तानि वाङ्गानि यस्य महायागकर्तुः महाशम्भुनाथस्य यजमानस्य स यज्ञाङ्गः । तदुक्तं ब्रह्माण्डपुराणे—

'एकाग्निको महायागो होताहं वायुरूपधृक् ।
मम चिद्वह्निरेवाग्निः सामवह्निस्तु हव्यवान् ।।
शुष्कसर्वजलः सिन्धुः सप्तमः कुण्ड इष्यते ।
अभिघारः सिन्धुषट्कः पशवः पञ्च सृष्टयः ।।'—इति ।

विशेषस्तु यज्वनामव्याख्यानावसरे प्रदर्शितः । 'आ वो राजानमध्वरस्य रुद्रं होतारं सत्ययजम्' इति श्रुतिः। सुवीराय—शोभनाः तत्तत्कर्मानुसारेण तत्तकार्यकर्तारः मर्यादामनतिक्रान्ताः वीराः वीरभद्रप्रभृतयो गणा यस्य स सुवीरः । 'नमो गणेभ्यो गणपतिभ्यश्च वो नमः' इति श्रुतिः । नागचूडाय—नागो वासुकिः कोटीरबन्धनार्थं चूडायां यस्य स नागचूडः । व्याघ्राय—व्याघ्रवत् व्याघ्रः क्रौर्यशौर्यादिमान् ; सर्वेषां भीषण इति यास्कः , 'भीषाऽस्माद्वातः पवते भीषेदिति सूर्यः'

इत्यादिश्रुतेः 'रुद्रो वै क्रूरः' इत्यादिश्रुतेश्च । बाणहस्ताय—बाणः अग्निसोमविष्ण्वादिरूपः 'अग्निमग्निकं सोमं शल्यं विष्णुं तेजनम्' इति श्रुतेः, स हस्ते यस्य स बाणहस्तः । बाणः सामान्यरूपः शरः हस्ते यस्य इति वा । 'यामिषुं गिरिशन्त हस्ते बिभर्षि' इति श्रुतिः । स्कन्दाय—स्कन्दति अमृतरूपेण गच्छति स्रवतीति वा स्कन्दः । यथोक्तम्—

'गङ्गाधरं विशालाक्षं चन्द्रालङ्कृतमस्तकम् ।
सुधासंसक्तसर्वाङ्गं प्लावयन्तं सुधां सदा ॥'—इति ।

अथवा—स्कन्दं शुष्कं रेतः, [तदस्यास्तीति] स्कन्दः तारकासुरजित् । तदुक्तम् आदित्यपुराणे—

'गोपयामास तत्तेजः पिङ्गलं प्रेक्ष्य शङ्करः ।
गोप्यमानं च तत्तस्मिन्नैकसूर्यायुतप्रभम् ॥
वर्षाणां च सहस्रेण कथञ्चित्स्कन्दतां गतम् ।
स्कन्द इत्युच्यते तेन तदाप्रभृति सुव्रताः ॥'—इति ।

अथवा—स्कन्दयति शोषयति अरीन् शूरप्रभृतीन् इति । 'तं स्कन्द इत्याचक्षते' इति श्रुतिः; तद्रूपी । स्कन्दयति शोषयति वायुरूपेण समुद्रादीन् इति वा । तदुक्तं ब्रह्माण्डपुराणे—

'सप्तस्कन्धी महावायुमयमात्मानमातनोत् ।
पराशक्त्यम्बिका चास्य क्रियाशक्तिः किलाऽभवत् ॥'
तया प्रबलया युक्तः श्रीमहाशम्भुनायकः
वायुरूपं समास्थाय धुनोति स जगत्त्रयम् ॥'—इति

'अस्मिन्नर्थे श्रुतिरुक्ता । दक्षिणे—दक्षाः मुनयः सनकादयः अनुग्राह्यत्वेन सन्तीति दक्षी दक्षिणामूर्तिरूप इत्यर्थः । 'ईशानः सर्वविद्यानाम्' इति श्रुतिः ॥१३९॥

**क्षेत्रज्ञाय रहस्याय स्वस्थानाय वरीयसे ।**
**गहनाय विशमाय सिद्धान्ताय नमो नमः ॥१४०॥**

**क्षेत्रज्ञाय**—'महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥
इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः ।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥'

इत्युक्तप्रकारं क्षेत्रमनात्मत्वेन जानातीति क्षेत्रज्ञः । मोक्षधर्मे—

'क्षेत्राणि च शरीराणि बीजानि च शुभाशुभे ।
तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते ॥
प्रकृतेश्च विकाराणां द्रष्टारमगुणान्वितम् ।
क्षेत्रज्ञमाहुर्जीवं तु कर्तारं गुणसंभृतम् ॥'—इति ।

'क्षेत्रज्ञः सङ्कल्पाध्यवसायाभिमानी लिङ्गः' इति श्रुतिः । **रहस्याय**—रहस्यज्ञानविषयत्वात् परमेश्वरो रहस्यः । रहस्या-भयब्रह्मरूपत्वात् रहस्यमिति वा । श्रुतिस्तु—'नात्र काचन भिदास्ति नैव तत्र काचन भिदास्त्यत्र हि भिदामिव मन्यमानः शतधा सहस्रधा भिन्नो मृत्योः स मृत्युमाप्नोति तदेतदद्वयं स्वप्रकाशं महानन्दमात्मैवैतदमृतमभयमेतद् ब्रह्माभयं वै ब्रह्मा भयं हि वै ब्रह्म भवति य एवं वेदेति रहस्यम्' इति । **स्वस्थानाय**—स्वं स्वयंरूपं स्थानं यस्य स स्वस्थानः । 'स्वे महिम्नि' इति श्रुतिः । **वरीयसे**—अतिशयेन वरः, वरीयान् उत्कृष्टः । 'परो वरीयान्' इति श्रुतिः । **गहनाय**—गहनवत् दुःखप्रवेश्यत्वाद् गहनः । प्राकृतविषयविज्ञानप्रश्नो वा । 'तं दुर्दर्शं गूढम्' इति श्रुतिः । यद्वा—अवस्थात्रयविद्यमान-भावाभावपदार्थाध्यासाधिष्ठानतया तत्साक्षी । 'त्रिषु धामसु

यद्भोग्यं भोक्ता भोगश्च यद्भवेत् । तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः ॥' इति श्रुतिः ।

विरामाय — विरामोऽवसानं प्राणिनां यस्मिन्निति विरामः । 'यत् प्रयन्त्यभिसंविशन्ति' इति श्रुतिः । विरमणं विरामः सविलासाऽविद्यानिवृत्तिरूपमवसानं सोऽस्यास्तीति वा, 'अविद्यातत्कार्यहीनः' इति श्रुतेः ॥

सिद्धान्ताय—सर्वद्वैतविनिर्मुक्तं मायाविद्यादिशब्दितोपाधिविनिर्मुक्तं परशिवस्वरूपमेव सिद्धान्तः ।

'सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ।

नाविद्या स्तीह नो माया शान्तं ब्रह्मेदमक्रमम् ॥'

इति वासिष्ठे ।

'नेह नानास्ति किंचनेति ।' 'अथात आदेशो नेति नेति ।' इत्यादिश्रुतयः ॥

**महीधराय गृह्याय वटवृक्षाय ते नमः ॥**

**ज्ञानदीपाय दुर्गाय सिद्धान्तैर्निश्चिताय च ॥**

**श्रीमते मुक्तिबीजाय कुशलाय विवासिने ॥१४१॥**

महीधराय—महीं गिरिरूपेण धत्त इति महीधरः । 'भूतानि शम्भुर्भुवनानि शम्भुर्गिरयश्च' इति स्कान्दे । यद्वा—महायागसमये शम्भुर्महावायुरूपेण महीं धत्त इति । ब्रह्माण्डपुराणे-

'अथ स्वेनैव सत्त्वेन धारयन्नवनीमयः ।

वायुरूपं समाजह्रे शेषाद्यान् फणिपुङ्गवान् ॥'—इति ॥

'इत्थं हुत्वा महानागानष्टौ दिक्करिणोऽपि च—इति ।' 'स होवाच यदूर्ध्वं गार्गि दिवो यदवाक् पृथिव्या यदन्तरे द्यावापृथिवी इमे यत् । भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाश एव

तदोतं च प्रोतं चेति' इति श्रुतिः ॥ गृह्याय— जगत्सृष्ट्यादि-कारणत्वेन सर्वैर्देवादिभिः सर्वैः प्रत्यक्षादिप्रमाणैर्गृह्यते इति गृह्यः, 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतेः । यद्वा—सुर-नरतिर्यगादिभिरात्मत्वेन गृह्यत इति ।

'तमहंप्रत्ययव्याजात् सर्वे जानन्ति जन्तवः ।' इति स्कान्दे ।

'या तिर्यङ्नरदेवताभिरहमित्यन्तः स्फुटा गृह्यते ।' इत्या-चार्याः । 'सोऽहमस्मीत्यग्रे व्याहरत्' इति श्रुतिः ॥

वटवृक्षाय—वटनामको वृक्ष आवासयोग्यत्वेन यस्यास्ति स वटवृक्षः । 'वटविटपसमीपे भूमिभागे निषण्णम् ।' इति । 'उपासकानां यदुपासनीयमुपात्तवासं वटवृक्षमूले ।' 'अत्रायं पुरुषः स्वयंज्योतिः' इति श्रुतिः ॥

ज्ञानदीपाय—।

दुर्गाय—दुःखेन गन्तुमगवन्तुं योग्यो दुर्गः । 'दुर्गं पथ-स्तत्कवयो वदन्ति' इति श्रुतिः ॥ सिद्धान्तैर्निश्चिताय—सिद्धान्तैः शून्यवादादिसिद्धान्तैर्निश्चितः संशयनिरसनपूर्वकं सम्यग्ज्ञातः ।

'स्वभक्तहृदयाम्भोजकर्णिकामध्यवर्तिने ।
सकलागमसिद्धान्तसाररूपाय ते नमः ॥'—इति ब्रह्माण्डपुराणे ।

अन्यत्र—

'सौराणां भास्कराकारं ब्रह्म च ब्रह्मवादिनाम् ।
सौगतानां च विज्ञानं महाशम्भुमुपास्महे ।
लोकायतिकविद्यानां स्वभावमयविग्रहम् ।
क्षणिकानां क्षणाकारं महाशम्भुमुपास्महे ॥'

शून्यं माध्यमिकानां च सांख्यानां पुरुषात्मकम् ।
पातञ्जलानां शब्दं च महाशम्भुमुपास्महे ॥
कारूणां विश्वकर्माणं शैवानां शिवरूपिणम् ।
विष्णुं च पाञ्चरात्राणां महाशम्भुमुपास्महे ॥
अर्थेश्वरं निधिविदां कामेशं कामसत्रिणाम् ।
वैश्वानरं च वेद्यानां महाशम्भुमुपास्महे ॥
दयावतां धर्मदेवमुग्राणां चण्डदैवतम् ।
कर्मठानामपूर्वाख्यं महाशम्भुमुपास्महे ॥
विप्राणामग्निनिलयं हृत्स्थं योगवतामपि ।
प्रतिमास्थमबुद्धानां महाशम्भुमुपास्महे ॥
सर्वेषामादिभूतं च स्वयमादिविवर्जितम् ।
सर्वान्तं च स्वतो नान्तं महाशम्भुमुपास्महे ॥' इति ।

ज्ञानवासिष्ठेऽपि—

यत् सर्वशास्त्रसिद्धान्तो यत्सर्वहृदयानुगम् ।
यत्सर्वं सर्वगं वस्तु तत्तत्त्वं तदसौ स्थितः ॥' —इति ।

'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद् वदन्ति' इत्यादिश्रुतिः ॥

श्रीमते—श्रीमान् कान्तिमान् । 'सस्पिञ्जराय त्विषीमते' इति श्रुतिः ॥ मुक्तिबीजाय—मुक्तेः कर्माविद्यासिताक्लेशतन्मूलभूताज्ञानरूपपाशमुक्तेर्बीजं कारणं साधकैः सम्यग् ज्ञातः सन् । 'ज्ञात्वा देवं सर्वपाशापहानिः' इति श्रुतिः ।

कुशलाय—सर्वेषामविशेषेण दुःखनिवृत्तिसुखप्राप्तिकरः कुशलः । 'नमः शङ्कराय च मयस्कराय' इति श्रुतिः ॥

विवासिने—लोकविरुद्धदेशे काले च वासोऽस्यास्तीति विवासी महाप्रलये ब्रह्मादिपिपीलिकान्तप्राणिरहिते देशे महा-

श्मशाने तदुपसंहारानन्तरकाले च विद्यमानत्वात् । 'यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः' इति श्रुतिः॥

**प्रेरक्षाय विशोकाय हविर्धानाय ते नमः ॥**
**गम्भीराय सहायाय भोजनाय सुभोगिने ॥१४२॥**

प्रेरक्षाय—प्रकर्षेण सर्वेषां प्राणिनां स्थितिकाले शुभाशुभकर्मप्रवर्तनम्, तत्कर्मफलभूतस्वर्गनरकादिप्रवर्तनमन्तकाले क्षयश्च स्वकर्तव्येनास्यास्तीति प्रेरक्षः । मत्वर्थीयोऽच्प्रत्ययः । यद्वा-अश्च इश्च विष्णुब्रह्माणौ, प्रकृष्टयोर्विष्णुब्रह्मणो रक्षा रक्षणं परस्परं युद्धसमये येन स प्रेरक्षः । स्कान्दे—

'तयोर्युद्धं महद्दिव्यमब्दानां च शतं पुरा ।
ब्रह्मणा प्रेरितास्त्रस्य ज्वालाः पेतुः समन्ततः ॥
तदस्त्रज्वालया दग्धं त्रैलोक्यमखिलं तथा ।
विष्णुना प्रेरितं चास्त्रं ब्रह्माणं हन्तुमागमत् ॥
ज्वालामालासमाकीर्णौ ब्रह्मविष्णू तदा स्थितौ ।
हिताय सर्वलोकानां ब्रह्मविष्ण्वोश्च यः पिता ।
यः शिवः सर्वलोकानां कृपां चक्रे तयोरपि ॥' इति ।

'एष लोकाधिपतिरेष लोकपालः' इति श्रुतिः ॥ विशोकाय—विगतः शोको यस्मात् स विशोकः । 'विशोको विजिघत्सः' इति श्रुतिः ॥ हविर्धानाय—पञ्चविधसृष्टिरूपहविरस्मिन् धीयत इति हविर्धानम्, 'विश्वस्यायतनं महत्' इति श्रुतेः । मानसाद्युद्भिजान्तसृष्टेर्हवीरूपत्वं ब्रह्माण्डपुराणे वर्णितम्—'महायागः प्रकर्तव्यः' इति प्रस्तुत्य

'मानसी प्रथमा सृष्टिरथ जारायुजी परा ।
आण्डी चैव तृतीया स्यात् स्वेदीयान्या तथौद्भिजी ॥

एषा पञ्चविधा सृष्टिः पुरोडाशतया भवेत्'—इति ।

गम्भीराय—अगाधत्वात्तत्स्पर्शपुरस्सरं समुद्रो निर्धारयितुमशक्यः । एवं ज्ञानैश्वर्यादिशक्तिभिः परमेश्वरोऽपि निर्धारयितुमशक्यत्वात् गम्भीरः। गूढाभिप्रायत्वाद्वा । 'स वेत्ति वेद्यं न च तस्याऽस्तिवेत्ता तमाहुरग्र्यं पुरुषं महान्तम्' इति श्रुतिः ॥

सहायाय—सहायः ब्रह्मादीनामपि आपत्काले रक्षक इत्यर्थः ॥ भोजनाय—स्वाभिन्नपरशक्तिविलासभूताकाशादिभूतभौतिकः सर्वोऽपि प्रपञ्चो विषयं भोजनम्, विषयी भगवानीशो विषयः परमेश्वरी इति शैवे ।

तत्रैव—'यथा शिवस्तथा देवी यथा देवी तथा शिवः ।
नानयोरन्तरं विद्याच्चन्द्रचन्द्रिकयोरिव' ॥—इति ।

'भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' इति श्रुतिः ॥

सुभोगिने—शोभना भोगा पारावारमध्ये, मन्दारपारिजातादिपरिवृते रत्नमये द्वीपे, नीपोपवनवति चिन्तामणिगृहे, शिवाकारे मञ्चे स्ववामाङ्कस्थानन्दमयपराशक्त्या सह संल्लापादिरूपा अनुभवा अस्य सन्तीति सुभोगी । 'उमासहायं परमेश्वरं प्रभुम्' इति श्रुतिः ॥

**महायज्ञाय तीक्ष्णाय नमस्ते भूतचारिणे**
**नमः प्रतिष्ठितायाथ महोत्साहाय ते नमः॥१४२॥**

महायज्ञाय—महान्तो यज्ञा यागाः पञ्चहविर्होमरूपा यस्य स महायज्ञः । ब्रह्माण्डपुराणे देवान् प्रति महाशम्भुः—

'महायागः प्रकर्तव्यो महायागविधानतः ।

महायागे च कर्तव्ये पञ्च हव्यानि देवता: ॥'–इति । श्रुतिरुक्ता । तीक्ष्णाय—विरोधिनो नाशयितुं क्रोधयुक्तस्तीक्ष्णः । 'तीक्ष्णाय तीक्ष्णरूपिणे' इति श्रुतिः ॥

भूतचारिणे—भवन्तीति भूतास्ते च देवांशविशेषाः । तैरनुचरभूतैः सह चरति दुष्टनिग्रहार्थमिति भूतचारी । 'नमो गणेभ्यो गणपतिभ्यश्च' इति श्रुतिः ॥

प्रतिष्ठिताय–लिङ्गरूपतया सेतुप्रभृतिषु रामादिभिः प्रतिष्ठितत्वात् प्रतिष्ठितः । 'नमः काट्याय च' इति श्रुतिः । यद्वा—सर्वजनानां हृदये प्रत्यगात्मत्वेन तिष्ठतीति प्रतिष्ठितः, 'सदा जनानां हृदये सन्निविष्टः' इति श्रुतेः । यद्वा—स्वात्मन्येव प्रतिष्ठितः इति । 'स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि' इति श्रुतिः ॥

महोत्साहाय—जगदुत्पत्तिस्थितिलयकारणे उद्युक्तत्वान्महोत्साहः । 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतिः ॥

**परमार्थाय शिशवे प्रांशवे च कपालिने ॥**
**सहजाय गृहस्थाय सन्ध्यानाथाय विष्णवे ॥१४४॥**

परमार्थाय—परमश्चासावर्थश्च परमार्थः । उत्कृष्टपरमार्थरूपः । अविद्यातत्कार्यविनिर्मुक्तमोक्षस्वरूप इति यावत् । 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' इति श्रुतिः ॥

शिशवे—बालरूपधरः शिशुः । लैङ्गे गौरीस्वयंवरे—

'कथं हिमवतः पुत्री बभूवाम्बा सती तु सा ।
कथं वा देवमीशानमवाप पतिमीश्वरम् ॥' इति प्रस्तुत्य

'अथ दृष्ट्वा शिशुं देवास्तस्य उत्संगवर्तिनम् ।
कोऽयमत्रेति संमन्त्र्य चुक्रुधुर्भृशमागताः ॥' इति ।
'स्तम्भितः शिशुरूपेण देवदेवेन लीलया ।
वज्रं क्षेप्तुं न शशाक बाहुं चालयितुं तथा ॥' इति ।

'नमो मध्यमाय चापगल्भाय च' इति श्रुतिः ॥ 'अपगल्भोऽत्यन्तशिशुः' इति वेदभाष्यकाराः ॥ **प्रांशवे—प्रांशुः** सर्वोन्नतः कोऽप्यलङ्घ्यस्वरूप इति भावः । आदित्यपुराणे ब्रह्मविष्णुसन्निधौ—

'माघकृष्णचतुर्दश्यां तयोर्मध्ये महानिशि ।
आत्मानं दर्शयामास लिङ्गरूपी महेश्वरः ॥
कोटिसूर्यप्रतीकाशं मध्ये लिङ्गमुपस्थितम् ।' इति प्रस्तुत्य
'तदूर्ध्वं गतवान् ब्रह्मा हंसरूपी तदा किल ।
वराहरूपमास्थाय ह्यधो द्रष्टुं गतो हरिः ।
बहुवर्षसहस्राणि गत्वा दृष्ट्वाऽऽगतो पुनः ॥' इति ।

'हरिब्रह्ममृग्यं परब्रह्मरूपं मनोवागतीतं महः शैवमीडे ।' इति भाष्यकारः । 'नमो बृहते च वर्षीयसे च' इति श्रुतिः ॥

**कपालिने—**कपालमस्यास्तीति कपाली । ब्रह्माण्डपुराणे शक्रं प्रति द्वारपालाः—

'कश्चित् कपालमादाय चन्द्रमण्डलसन्निभम् ।
आयाति भगवन्नाथ भस्मभूषितविग्रहः ॥' इति ।

उपरि ब्रह्माण्डपुराणे—

'कालमेवसमच्छायः कन्थाशूलकपालधृक् ।
द्विभुजश्च त्रिनेत्रश्च स्मयमानमुखाम्बुजः ॥' इति ।
'नमः स्वायुधाय च सुधन्वने च' इति श्रुतिः ॥

सहजाय गृहस्थाय—इदं पदद्वयं सविशेषणमेकं नाम। देव्या सहैव जायते आविर्भवतीति सहजः। गृहे च दशलोकात्मके तिष्ठतीति गृहस्थः। उक्तं च आगमे—

'पावकस्योष्णतेवेयमुष्णांशोरिव दीधितिः।
चन्द्रस्य चन्द्रिकेवेयं शिवस्य सहजा ध्रुवा'—इति।

वायवीयसंहितायाम्—

'चन्द्रो न खलु भात्येष यथा चन्द्रिकया विना।
न भाति विद्यमानोऽपि तथा शक्त्या विना शिवः॥'-इति।

तत्रैव—यथा न जायते पुत्रः पितरं मातरं विना।
तथा भवं भवानीं च विना नैतच्चराचरम्॥'—इति।

'सह स्वस्राम्बिकया' इति श्रुतिः॥ सन्ध्यानाथाय—सन्ध्यायास्तदुपलक्ष्यस्नानजपादेर्नाथः सन्ध्यानाथः ईश्वरार्पणबुद्ध्यैव कर्मणां कर्तव्यत्वात्। 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः।' इति भगवद्वचनात्। 'तमेव वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इति श्रुतिः॥

विष्णवे—व्याप्नोतीति विष्णुः। यथोक्तं वायवीयसंहितायाम्—

'शिवतत्त्वादिभूम्यन्तं शरीरादि घटादि च।
व्याप्याधितिष्ठतीशश्च ततो विष्णुरुदाहृतः॥'—इति।

'सर्वव्यापी सर्वभूतान्तरात्मा' इति श्रुतिः॥१४४॥

**सद्भिः संपूजितायाथ वितलासुरघातिने॥**
**जनाधिपाय योग्याय कामेशाय किरीटिने॥१४५॥**

सद्भिः संपूजिताय—सद्भिः सात्त्विकैर्दधीच्यादिभिः भक्तिश्रद्धादिना गन्धपुष्पादिभिः प्रदक्षिणास्तुतिनमस्कारादिभिश्च पूजितः संपूजितः। स्कान्दे—

'भगवन् कः सुरैः सर्वैरसुरैः सिद्धकिन्नरैः ।
मुनिभिर्यक्षगन्धर्वैः तथान्यैः सर्वजन्तुभिः ।
भुक्त्यर्थं च विमुक्त्यर्थं पूज्यः पुण्यवतां वर ॥' इति प्रस्तुत्य
'ततो विश्वाधिकं रुद्रं महर्षिं सर्वसाक्षिणम् ।
ब्रह्मविष्ण्वादयो देवाः पूजयामासुरादरात् ॥
तथा लक्ष्म्यादयो देव्यस्तथान्ये सर्वजन्तवः ।
पूजयामासुरीशानं पुरुषं कृष्णपिङ्गलम् ॥' इति ।

'तव श्रिये' इति श्रुतिः ॥

वितलासुरघातिने—वितलोपलक्षितपाताललोके विद्यमानानां दुष्टदैत्यानां संहर्ता वितलासुरघाती । दुष्टदैत्या जलन्धरान्धकत्रिपुरादयः । 'नमः सहमानाय निव्याधिने' इति श्रुतिः॥

जनाधिपाय—जनानां लोकानामधिपो जनाधिपः । 'एष लोकाधिपतिः' इति श्रुतिः ॥

योग्याय—सर्वविद्यावत्त्वान्महाब्राह्मणत्वाच्च योग्यः । 'त्वं देवेषु ब्राह्मणः' इत्यादिश्रुतिः ॥

कामेशाय—काम्यन्त इति कामाः पुत्रपशुस्वर्गादयस्तेषामीशः कामेशः । 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां विदधाति कामान्'—इति श्रुतिः ॥

किरीटिने—किरीटमस्यास्तीति किरीटी । किरीटं केयूराङ्गदकटकाङ्गुलीयादीनामुपलक्षणम् । सर्वाभरणहेतुभूतस्य हिरण्यस्य परमेश्वराधीनत्वात्—'आप्रणखात् सर्व एव सुवर्णः' । 'नमो हिरण्यबाहवे' इति च श्रुतिः । विद्यारण्यस्वामिभिः हिरण्यनिर्मितान्याभरणानि बाह्वोर्यस्य स हिरण्यबाहुरिति व्याख्यातम् । भट्टभास्करैस्तु 'हिरण्यबाहुः' इति नामव्याख्या-

नावसरे उपलक्षणपरतया 'आप्रणखात् सर्व एव सुवर्णः' इति व्याख्यातम् ॥ १४५ ॥

अमोघविक्रमायाथ नग्नाय दलघातिने ।
संग्रामाय नरेशाय नमस्ते शुचिभस्मने ।
भूतिप्रियाय भूम्ने ते सेनाय चतुराय च ॥१४६॥

**अमोघविक्रमाय**—अमोघः अवन्ध्यः फलपर्यवसायी इति यावत् । तादृशो विक्रमः पराक्रमः यस्य स तथा । 'अभि त्वा शूर नो नुमः' इति श्रुतिः ॥

**नग्नाय**—नग्नो यतिविशेषः तद्रूपधरः । स्कान्दे—

'तेष्वेवं तप्यमानेषु महाविष्णुर्महेश्वरः ।
रागद्वेषगतिं तेषां परित्यक्ष्येऽहमिति स्मरन् ॥
नग्नवेषो जटाधारी भस्मभूषितविग्रहः ।
भिक्षुरूपमुपादाय त्वरमाणः समाययौ ॥' इति 'तत्र परमहंसा नाम संवर्तकारुणिश्वेतकेतुदुर्वासः' इति श्रुतिः ॥

**दलघातिने**—दलान्यसुरसम्बन्धीनि वृषभरूपेण घातितवानिति श्वेतारण्यमाहात्म्ये प्रसिद्धम्—

'वेगेन कांश्चिदपरान् नादेन भ्रमणेन च ।
निःश्वासपवनेनान्यान्नाशयामास दानवान् ॥' इत्यादि ।
'निव्याधिने' इति श्रुतिः ॥

**संग्रामाय**—संग्राम···'इषुमद्भ्यश्च' इत्यादिना 'विध्यद्भ्यश्च वो नमः' इत्यन्तेन युद्धं कुर्वतां धानुष्काणामवस्था प्रदर्शिता ।···संग्रामावस्थाविशेषवत्त्वात् परमेश्वरश्च संग्रामरूपी चेत्युक्तो भवति । अथवा संग्रामशब्दो मत्वर्थीयाच्प्रत्ययान्तः । तस्मिन्नपि पक्षे 'इषुमद्भ्यः' इत्यादिरेव श्रुतिः ॥

नरेशाय—नरा नेतारः ब्रह्मादयस्तेषामीशः स्वामी नरेशः। 'तमीश्वराणां परमं महेश्वरम्' इति श्रुतिः ॥

शुचिभस्मने—शुचि अविद्याकार्यहीनं तदेव भस्म प्रकाशकं तत् शुचिभस्म। अनेन महाभस्मोक्तम्। तदुक्तं स्कान्दे सूतसंहितायां यज्ञवैभवखण्डे—

'यथातः संप्रवक्ष्यामि भस्मधारणवैभवम्।
यस्य विज्ञानमात्रेण नरो मुच्येत बन्धनात् ॥
भस्म नानाविधं प्रोक्तं धार्मिकैस्तत्त्वचिन्तकैः।
एकं विप्रा महाभस्म स्वल्पमन्यत् प्रकीर्तितम् ॥
महाभस्म महादेवो महामायावभासकः।
भर्त्सनात् सर्वपापानां भासनं तस्य विद्यया ॥
विद्या वेदोद्भवा साक्षान्मुनयः संशितव्रताः।
अविद्या फलतश्चान्या सत्यमेव मयोदितम् ॥
यस्य साक्षान्महाभस्म भाति स्वात्मतया स्वतः।
न तस्य भस्मना कार्यं न जटाभिर्न चीवरैः ॥
यस्य भस्म स्वतो भाति स्वात्मना मुनिपुङ्गवाः।
न तस्य वर्णधर्मेण कार्यं नाश्रमधर्मतः ॥
यस्य भस्मस्वरूपेण विभाति परयोगिनः।
न तस्य तपसा कार्य्यं न दानेन न चेज्यया ॥'-इति।

'आनन्दं ब्रह्मणो विद्वान् न विभेति कुतश्चन'-इति श्रुतिः ॥

भूतिप्रियाय—धूलनरूपेण त्रिपुण्ड्ररूपेण च भूतिः प्रिया यस्य स भूतिप्रियः। अनेन भूतिधारणजनप्रिय इति सूचितम्। यद्वा—भूतिः स्वार्चनसाधनत्वेन प्रिया यस्येति।

'यश्च भस्म समादाय विशुद्धं श्रोत्रियालयात्।
अग्निरित्यादिभिर्मन्त्रैरभिमन्त्र्य यथाविधि ॥

उद्धूलयति गात्राणि तेनाश्रयति मामपि ।
तस्मात्परमभक्तो ना मम राम न विद्यते ॥'—इति ।

'त्रिपुण्ड्रं भस्मना करोति यो विद्वान्' इति प्रस्तुत्य 'शिवसायुज्यमेति'—इति श्रुतिः ॥

भूम्ने—भूमा महान् निरतिशयस्वरूपः परमात्मेत्यर्थः । 'यो वै भूमा तत्सुखम्'—इति श्रुतिः ॥

सेनाय—सेना प्रमथसंघातात्मिका अस्यास्तीति सेनः । मत्वर्थीयाच्प्रत्ययान्तः । 'हिरण्यबाहवे सेनान्ये' इति श्रुतिः ॥

चतुराय—चतुरः समर्थः दुष्टदैत्यादिनिग्रहे भक्ताभीष्टप्रदाने जगत्सृष्टिस्थितिलयकरणे वा । 'यतो वा इमानि भूतानि जायन्ते'—इति श्रुतिः ॥१४६॥

## मनुष्यबाह्यगतये कृतज्ञाय शिखण्डिने ॥
## निर्लेपाय जटार्द्राय महाकालाय भैरवे ॥ १४७ ॥

मनुष्यबाह्यगतये—मनुष्यापेक्षया बाह्याः पशुपक्षिकीटादयः तेषामपि गतिः प्राप्यस्थानम् । इदं च श्रीकालहस्तिमाहात्म्यादौ प्रसिद्धम् । 'पशूनां पतये नमः'—इति श्रुतिः ॥

कृतज्ञाय—सर्वैः सर्वप्रकारेण सर्वावस्थासु कृतं लौकिकं वैदिकं कर्म जानातीति कृतज्ञः । 'कर्माध्यक्षः सर्वभूताधिवासः'—इति श्रुतिः ॥

शिखण्डिने—शिखण्डः काकपक्षः सोऽस्यास्तीति शिखण्डी । बालरूपधर इति यावत् । 'नमो ज्येष्ठाय च कनिष्ठाय च'—इति श्रुतिः ॥

निर्लेपाय—आगन्तुकस्वाभाविकदोषद्वयरहितोऽतो निर्लेपः ॥ 'अलेपोऽव्यग्रः'—इति श्रुतिः ॥

जटाद्रीय—जटासु कपर्दनामिकासु गङ्गाप्रयुक्तमार्द्रत्वं यस्य स जटार्द्रः । 'कपर्दिने च'—इति श्रुतिः ॥ महाकालाय—महाकालो नाम गणश्रेष्ठो नन्दीभृङ्गीतुल्यः । 'नमो गणेभ्यः' इति श्रुतिः ॥ भैरवे—भूरादिलोकानात्मप्रणवेनो(नात्मप्रेरणयो ?)त्तरोत्तरयोर्ध्वं क्षिपतीति मेरुः । यद्वा—मेरुवदचलत्वात्सौवर्णरूपत्वाद्वा । 'तं शान्तमचलमद्वयानन्दविज्ञानघन एवास्मि ।' इति श्रुतिः, 'आप्रणखात्सर्व एव सुवर्णः' इति च ॥१४७॥

नमो विरूपरूपाय शक्तिगम्याय ते नमः ॥
नमः सर्वाय सदसत्सत्याय सुव्रताय च ॥१४८॥

विरूपरूपाय—विरूपो नग्नमुण्डादिस्तस्य रूपमिव रूपं यस्य स विरूपरूपः । भैरवदुर्वासादिरूप इति यावत् । यद्वा—विरूपो रूपरहितः । निर्गुण इति यावत् । रूपशब्दो मत्वर्थीयाचप्रत्ययान्तः, परमार्थतो रूपरहितत्वेऽपि, मायाशक्तिवशाद् रूपं वा यस्य विरूपरूपः ।

ब्रह्माण्ड पुराणे—

संधाता सर्वलोकानां प्रकृतेः परतः स्थितः ।
अस्माकममरेशानामिच्छया रूपवान् भवान् ॥' इति ।
'असद्वा इदमग्र आसीत्ततो वै सदजायत' इति श्रुतिः ॥

॥ इत्यष्टमशतकविवरणम् ॥

---

## ॥ अथ नवमशतकभाष्यम् ॥

शक्तिगम्याय—शक्त्या सामर्थ्येन ब्रह्मचर्यवैराग्यशम-दमोपरतितितिक्षा-समाधान-श्रद्धा-श्रवण-मननादिरूपेण गम्यः, 'नायमात्मा बलहीनेन लभ्यः' इत्यादिश्रुतेः। सर्वाय—सर्वः सर्वस्वरूपः क्षितिसलिलहुतवहपवनगगनहिमकरदिनमणियजमाना-त्मभिः अष्टाभिर्मूर्तिभिः सर्वं व्याप्य स्थितः। तदुक्तं विष्णुपुराणे—

'नमामि सर्वं सर्वेशमनन्तमजमव्ययम्।
लोकाधारमनाधारमप्रकाशमभेदिनम् ॥'—इति।

'सर्वो वै रुद्रः' इति श्रुतिः। सदसत्सत्याय—सदसतोः कार्यकारणयोः सत्यः अधिष्ठानभूतः, अधिष्ठानस्यैव सत्यत्वात्। अध्यस्तयोः सदसतोः कार्यकारणयोः अव्याकृतनामकाव्यक्त-तत्कार्यभूतव्यक्तस्वरूपाकाशादिप्रपञ्चयोः अधिष्ठानब्रह्मसत्तयैव सत्तावत्त्वात्। 'आनन्दरूपः सर्वाधिष्ठानः सन्मात्रः' इति श्रुतिः। सुव्रताय—शोभनानि व्रतानि दुष्टनिग्रहशिष्टपरिपालनादीनि यस्य स सुव्रतः।

'नमामि त्वां महादेवं महाभयविनाशिनम्।
महादारिद्र्यशमनं महाकारुण्यरूपिणम् ॥'

इति श्रुतिः ॥ १४८ ॥

**नमो भक्तप्रियायाऽथ श्वेतरक्षापराय च।**
**सुकुमारमहापापहराय रथिने नमः ॥१४९॥**

भक्तप्रियाय—भक्तः प्रियो यस्य स भक्तप्रियः ।
'यो वेदाध्ययनं नित्यं दानानि च तपांसि च ।
मदर्पणधिया कुर्यात् स मे भक्तः स मे प्रियः ॥'-इति,
'सर्वदा शिरसा कण्ठे रुद्राक्षं धारयेत्तु यः ।
पञ्चाक्षरीजपरतः स मे भक्तः स मे प्रियः ॥'
—इति च शिवगीतायाम् ।

'अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहङ्कारः समदुःखसुखः क्षमी ॥
सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ॥
सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ।'

—इति भगवद्गीतादिषु । 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वाम्' इति श्रुतिः ॥

श्वेतरक्षापराय—श्वेतो नाम कुरुवंशाधिपः कश्चन राजा मोक्षार्थी सन् अनेकतीर्थाटनपुरस्सरं श्वेताटवीं प्राप्तः । तत्र तीर्थेषु स्नात्वा श्वेताटवीनाथं स्तुत्वा तदनु तद्वरदानार्थमागतं देवं प्रति मोक्षं प्रार्थितवान् । तदनु—

'प्रत्यक्षमगमत्तत्र वरं दातुं महेश्वरः ।
यथा ध्यातः पुरा देवो राज्ञा श्वेतेन भूमिप ॥
तादृग्रूपधरो भूत्वा स्वप्रकाशो निरञ्जनः ।
उवाच कृपया राजन् दर्शयन् भक्तवश्यताम् ॥'

—इति प्रस्तुत्य

'मामुपेत्य तु राजेन्द्र शाश्वतं मामकं पदम् ।
तस्माद् दुःखहणो भूत्वा मत्सायुज्यमुपेष्यसि ॥'—इति

ब्रह्मवैवर्तके प्रसिद्धा। यस्मादेव श्वेतनामकस्य राज्ञो रक्षां कृतवान् इति श्वेतरक्षापरः। किञ्च, ज्योतिष्मन्नामकस्य नर्मदातीरवासिनः पुत्रं श्वेतकुष्ठिनं श्वेतकुष्ठरोगात् रक्षितवान् इति तत्रैव पुराणे प्रसिद्धम्। किञ्च, श्वेतकेतुं मृत्युभयात् रक्षति स इति पाद्मे प्रसिद्धम्। 'प्रथमो दैव्यो भिषक्' इति श्रुतिः ॥' सुकुमारमहापापहराय—सुकुमारस्य ब्राह्मणस्य महापापानि हरतीति सुकुमारमहापापहरः। तदुक्तं शैवे ईशानसंहितायाम्—

'शिवरात्रिव्रतं दृष्ट्वा कथं पातककोटिभिः।
मुक्तः शिवपुरं प्राप्तः तन्मे विस्तरतो वद ॥'

—इति प्रस्तुत्य, सिन्धुनदीतीरे कुब्जानामके पुरा कश्चिद् ब्राह्मणकुमारः सुकुमारनामकः कामशास्त्रकलाभिज्ञः षडङ्गप्रवरः अनुलोमप्रतिलोमजसर्वनारीमोहकः राज्ञा तद्देशान्निःसारितः कस्मिंश्चिद्वने चण्डाल्या रतिप्रियया सह मधुमांसातिभक्षणशील-स्तत्प्रीत्यर्थमनेकब्राह्मणक्षत्रियादिकं हत्वा तद्द्रव्येण चण्डाल्या तदुत्पन्नपुत्रपञ्चकेन कन्याद्वयेन च सह स्वगृहे स्वशरीरपोषणं कुर्वन् कदाचित् पुष्पग्रहणार्थं तत्समीपविद्यमाननागेश्वरालयसमीपे शिवचतुर्दश्यां रात्रौ गतवान्। तदानीमनेकजनकृतशिवपूजां दृष्ट्वा दैवात् तत्र मृतः। तदनु यमदूतैर्नीतः। तदनु तन्निवारणपुरस्सरं शिवदूतैः शिवपुरं नीतः। तदनु..................

..................इति वदन्तं यमं प्रति शिवः—

'आश्चर्यमत्र मा कार्षीः सुकुमारकृते यम।
मय्येव क्षम्यता(?)नास्ति शृणु वक्ष्यामि कारणम् ॥
अनेन सुकुमारेण यद्यद्धि दुरितं कृतम्।
संख्यातुमप्यशक्यं तद् व्योम्नि तारकखण्डवत् ॥

न तस्य दुरितं नष्टं सर्वशास्त्रेषु चाऽन्तक ।
तथाविधं महत्पापं सर्वं दग्धं क्षणेन तु ॥
शिवरात्रिव्रतं दृष्ट्वा मत्पुरं समुपैष्यति ।
सन्देहं कुरु मा किञ्चित् सुकुमारकृते यम ॥

महापातकलक्षाणि नष्टान्येतत्कृतानि च ।
शिवरात्रिव्रतं दृष्ट्वा यत्पुण्यं प्राप्तवान्निशि ॥
तत्पुण्याग्नेः प्रदग्धा हि महापातककोटयः ।
राजसूयसहस्रस्य अश्वमेधायुतस्य च ॥

कपिलाकोटिदानस्य भूमौ कृत्स्नस्य यत्फलम् ।
दशवर्षसहस्रान्ते तपः कृत्वा तु यत्फलम् ॥

पुण्यक्षेत्रनिवासाच्च सर्वतीर्थावगाहनात् ।
एतेषां यत्फलं प्रोक्तं शास्त्रेषु विविधेषु च ॥
तत्पुण्यं कोटिगुणितं सुकुमारो हि लब्धवान् ।
शिवरात्रिव्रतं दृष्ट्वा पुष्पव्याजेन चाऽऽगतः ॥

तपस्विभ्योऽधिको ह्येष यज्वभ्योऽप्यधिको मतः ।
सर्वेभ्यः पुण्यकृद्भ्यश्च सुकुमारोऽधिको मतः ॥
तेन पुण्येन महता गणेश्वरपदं गतः ।
भोगान् भुक्त्वा तु विपुलान् कल्पान्ते मम सन्निधौ ॥

ततश्चापि च्युतः कालाद् दधीचाख्यो भविष्यति ।
ततो माहेश्वरो भूत्वा ज्ञानं लब्ध्वा च मामकम् ॥
देवानामुपकारार्थं तनुं त्यक्त्वा सुदुस्त्यजाम् ।
महिम्ना विष्णुनाऽजेयो मम सायुज्यमेष्यति ॥'—इति ।

'धर्मावहं पापनुदं भगेशम्' इति श्रुतिः ॥ 'रथिने—रथमारूढो योद्धा रथस्वामी वा रथी । आदित्यपुराणे—

'अथ रुद्रस्य देवस्य निर्मितो विश्वकर्मणा ।
सर्वलोकमयो दिव्यो रथो यत्नेन सादरम् ॥

सर्वभूतमयश्चैव सर्वदेवमयस्तथा ।
सर्ववेदमयश्चैव सौवर्णः सर्वसम्मतः ॥

रथाङ्गं दक्षिणं सूर्यो वामाङ्गं सोम एव च ।
दक्षिणं द्वादशारं हि षोडशारं तथोत्तरम् ॥'—इत्यादि ।

'नमो रथिभ्योऽरथेभ्यश्च वो नमः' इति श्रुतिः ॥ १४९ ॥

**नमस्ते धर्मराजाय धनाध्यक्षाय सिद्धये ।**
**महाभूताय कल्पाय कल्पनारहिताय च ॥१५०॥**

**धर्मराजाय**—धर्मराजो यमः, तद्रूपी । 'यो देवानामथ एक एव' इति श्रुतिः । यद्वा—धर्मस्य वृषभस्य राजा स्वामी । अयमर्थः प्रथममेवोपपादितः । **धनाध्यक्षाय**—धनानां हिरण्यानामध्यक्षोऽधिष्ठाता, अधिपतिरिति यावत् । 'नमो हिरण्यबाहवे हिरण्यपतये' इति श्रुतिः । **सिद्धये**—सर्ववस्तुसिद्धिरूपत्वात् सिद्धिः, परमेश्वरस्यैव सर्ववस्तुरूपेण आविर्भूतत्वात् । यद्वा—सर्ववस्तुविषयप्रकाशरूपत्वात् । 'सर्वस्य साक्षी' इति श्रुतिः । **महाभूताय**—महाभूतानि आकाशादीनि सृज्यत्वेन अस्य सन्तीति महाभूतः । 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यादिश्रुतिः । **कल्पाय**—कल्पः संहारकालः, तद्रूपी, 'कालाय नमः' इति श्रुतेः । **कल्पनारहिताय**—कल्पना प्रपञ्चसृष्टिस्तद्रहितः, वास्तवप्रपञ्चनिर्मुक्तः, 'नेह नानाऽस्ति किञ्चन' इति श्रुतेः ॥ १५० ॥

ख्याताय जितविश्वाय गोकर्णाय सुचारवे ।
श्रोत्रियाय वदान्याय दुर्लभाय कुटुम्बिने ॥१५१॥

ख्याताय—श्रुतिस्मृतीतिहासपुराणागमेषु लोकेषु च ख्यातः प्रसिद्धः । 'सर्वे वेदा यत्पदमामनन्ति' इति श्रुतिः ॥ जितविश्वाय—जितः विश्वः सर्वो येन स तथा । 'जेतारमपराजितम्' इति श्रुतिः। गोकर्णाय—गोकर्णनामकः क्षेत्रविशेषः पश्चिमसमुद्रतीरस्थः अस्यास्तीति गोकर्णः । मत्वर्थीयाच्प्रत्ययान्तः शब्दः । 'क्षेत्राणां पतये नमः' इति श्रुतिः। सुचारवे – सुतरां दर्शनीयः सुचारुः, निरतिशय परमानन्दरूपत्वात् । 'विज्ञानमानन्दं ब्रह्म' इति श्रुतिः । श्रोत्रियाय—महाब्राह्मणत्वात् श्रोत्रियः । 'त्वं देवेषु ब्राह्मणः' इति श्रुतिः । यद्वा—श्रोत्रियः अधीतवेदः तद्रूपी, 'नारुद्रः क्रमपाठकः' इति स्मरणात् । वदान्याय—योगिभ्यः स्वरूपदातृत्वाद् वदान्यः। 'यमेवैष वृणुते तेन लभ्यः' इति श्रुतिः ॥ दुर्लभाय—दुर्लभया भक्त्या लभ्यत्वाद् दुर्लभः, 'कोटिजन्मार्जितैः पुण्यैः शिवे भक्तिः प्रजायते।' इति वचनात् । 'भावग्राह्यमनीडाख्यम्' इति श्रुतिः । कुटुम्बिने—जायापत्यपरिजनबन्धवाभ्यागतातिथ्यादिबहुजनपोषकः कुटुम्बी, तद्रूपी । यद्वा—भार्यास्थानीयपराशक्तिज्ञानेच्छाक्रियाशक्त्यादि - पुत्रस्थानीयब्रह्मविष्णुरुद्रेन्द्रादित्यादि - भृत्यस्थानीयनन्दीभृङ्गीमहाकालादि-बन्धुस्थानीयगौतमाद्यभागवतातिथिस्थानीयागस्त्यादिदीनान्धकृपणस्थानीयस्थावरादिसमस्तप्राणिपोषकत्वात् कुटुम्बी, 'एष लोकाधिपतिरेष लोकपालः । एष लोकेशः' इति श्रुतेः । यद्वा—श्रोत्रियाय कुटुम्बिने इति दानप्रकरणे दातृत्वेन प्रसिद्धाः श्रोत्रियादयः एवं परमेश्वरमुद्दिश्य पत्रपुष्पसलिलादिकं वा दातव्यमक्षयफलत्वसिद्ध्ये

इत्येतादृशस्तुतिसाधनत्वेन उपात्तानि नामानि ॥ १५१ ॥

**विरजाय सुगन्धाय नमो विश्वम्भराय च ।**
**भवातीताय तिष्याय नमस्ते सामगाय च ॥१५२॥**

**विरजाय**—विरजो निर्मलः । 'विरजं ब्रह्म निष्कलम्' इति श्रुतिः । **सुगन्धाय**—शोभनश्चासौ गन्धश्च सुगन्धः । यथा सुगन्धः पुष्पेषु अतिसूक्ष्मत्वेन चक्षुरिन्द्रियाग्राह्यः, एवं परमेश्वरोऽपि सर्वेषु भूतेषु सर्वेन्द्रियमनःप्राणेषु अधिष्ठानत्वेन सत्तास्फूर्तिप्रदत्वेन वर्तत इति सुगन्धः । तदुक्तं स्कान्दे—

'सर्वभूतेषु सर्वत्र गुणेषु प्रकृतौ तथा ।
इन्द्रियेषु तथाऽर्थेषु देवेषु च गणेषु च ॥
पुष्पेषु गन्धवत् सूक्ष्मं सुलिङ्गं परमेश्वरम् ॥'—इति ।

'सुगन्धि पुष्टिवर्धनम्', 'एको देवः सर्वभूतेषु गूढः' इत्यादिका च श्रुतिः ॥

**विश्वम्भराय**—विश्वं बिभर्तीति विश्वम्भरः । 'विश्वं बिभर्ति भुवनस्य नाभिः' इति श्रुतिः । **भवातीताय**—भवात् संसाराद् अतीतः अतिगतः भवातीतः । 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' इति श्रुतिः । **तिष्याय**-तिष्यः कलियुगं तद्रूपी । यद्वा—पापवशात् वैदिकत्वेन प्रसिद्धं भस्मरुद्राक्षधारणशिवलिङ्गपूजनपरमेश्वरभजनशिवक्षेत्रवासादिकं न रोचते यतः, तस्मात् राजा यथा एतत्सर्वमवश्यं कर्तव्यमित्यादिशति तथैवायमित्यत एतन्नाम प्रवृत्तम् । स्कान्दे—

'कलौ जगद्विधातारं शिवं सत्यादिलक्षणम् ।
नार्चयिष्यन्ति मोहेन पाखण्डोपहताजनाः ॥

वेदोक्तेनैव मार्गेण भस्मनैव त्रिपुण्ड्रकम् ।
धूलनं नाचरिष्यन्ति पाखण्डोपहता जनाः ॥
रुद्राक्षधारणं भक्त्या वेदोक्तेनैव वर्त्मना ।
न करिष्यन्ति मोहेन पाखण्डोपहता जनाः ॥
लिङ्गे दिने दिने देवं शिवरुद्रादिसंज्ञितम् ।
नाऽऽर्चयिष्यन्ति वेदेन पाखण्डोपहता जनाः ॥
वेदसिद्धं महादेवं साम्बं चन्द्रार्धशेखरम् ।
नार्चयिष्यन्ति वेदेन पाखण्डोपहता जनाः ॥'—इति ।

एवं शिवक्षेत्रव्यासाद्वा आचार्यमुखात् वेदान्तश्रवणपरमहंस संन्यासिवैदिकस्मार्तानुष्ठानादिकं न करिष्यन्ति । एतद्विरुद्धाचारं पूर्वोक्तेषु प्रद्वेषं च करिष्यन्तीत्युक्त्वा—

धीराप्रविष्टश्च(?) महेश्वरस्य
प्रसादयुक्ताश्च महत्तराश्च ।
वेदोदितं केवलमेव देवा
मुदा चरिष्यन्ति विमुक्तिसिद्ध्यै ॥'—इति ।

'आ वो राजानमध्वरस्य रुद्रम्' इति श्रुतिः । सामगाय—साम्ना समीचीनस्तोत्रेण लौकिकेन वैदिकेन वा गम्यते इति सामगः ।

'आदरेण यथा स्तौति धनवन्तं धनेच्छया ।
तथा चेद्विश्वकर्तारं को न मुच्येत बन्धनात् ॥'

—इति महाभारते । 'यः शतरुद्रियमधीते' इति प्रस्तुत्य 'अनेन ज्ञानमाप्नोति संसारार्णवनाशनम्' इति कैवल्योपनिषदि । यद्वा—साम्ना सामविशेषेण बृहद्रथन्तरवामदेव्यादिना स्वसन्निधौ गीयमानेन गम्यते इति सामगः । तदुक्तं शिवगीतायाम्—

'बृहद्रथन्तरं वामदेव्यं देवव्रतानि च ॥
तद्योगयाज्यदेहांश्च यो गायति ममाग्रतः ।
इह श्रियं परां भुक्त्वा मम सायुज्यमाप्नुयात्॥'-इति॥१५२॥

**अद्वैताय द्वितीयाय कल्पराजाय भोगिने ।**
**चिन्मयाय नमः शुक्लज्योतिषे क्षेत्रगाय च ॥१५३॥**

**अद्वैताय**—भेदविकल्परहितः अद्वैतः । 'प्रपञ्चोपशमः शिवोऽद्वैतः' इति श्रुतिः । **द्वितीयाय**—आत्मनो भेदाभावे परमात्मन एव भोक्तृत्वं प्राप्तं तन्निवृत्त्यर्थमिदं नाम । परमात्मापेक्षया द्वितीयो जीवः । ननु अद्वैतत्वहानिः ? न; परशिवापेक्षया द्वितीयवस्तुनः सर्वस्यापि मायिकत्वात्—'मायामात्रमिदं द्वैतमद्वैतं परमार्थतः' इति श्रुतेः । **कल्पराजाय**—कल्पः संहारकालस्तस्य राजा, तदानीं रुद्ररूपेण सर्वसंहर्तृत्वात् । 'तस्मा उपसंहर्त्रे महाग्रासाय वै नमः' इति श्रुतिः । **भोगिने**—सुखदुःखानुभवो भोगः' सोऽस्यास्तीति भोगी—भोक्ता सर्वो जीवः—तद्रूपी, 'भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' इति श्रुतेः । यद्वा—दिवि भोगसम्पन्नो भोगी परमेश्वरध्यानपूजादिना शिवलोकं प्राप्तः गौरवविशेषः(?) । तदुक्तं शिवगीतायाम्—

'मां पूजयति निष्कामः सदा ज्ञानविवर्जितः ।
स मे लोकं समासाद्य भुङ्क्ते भोगान् यथेप्सितान् ॥
ज्ञात्वा मां पूजयेद्यस्तु सर्वकामविवर्जितः ।
मया समानरूपः सन् मम लोके महीयते ॥
इष्टापूर्तादिकर्माणि मत्प्रीत्यै कुरुते तु यः ।
यत्करोति यदश्नाति यज्जुहोति ददाति यत् ॥

यस्तपस्यति तत्सर्वं यः करोति मदर्पणम् ।
मल्लोके सः श्रियं भुङ्क्ते मत्तुल्यं प्राभवं भजन् ॥'-इति।

'नमो गणेभ्यो गणपतिभ्यश्च' इति श्रुतिः । चिन्मयाय चिन्मयः चिद्रूपः । 'चिन्मयो ह्ययम्' इति श्रुतिः । शुक्लज्योतिषे—शुक्लमविद्यातत्कार्यविनिर्मुक्तं ज्योतिः स्वयंप्रकाशरूपम्, शुक्लं च तज्ज्योतिश्च शुक्लज्योतिः । ननु ज्योतिरित्येवालम्, 'प्राणेषु ज्योतिः पुरुषः' इति श्रुतेः । शुक्लमित्येव वाऽलम्, 'यच्छुक्लम्' इति श्रुतेः । न; ज्योतिरित्युक्ते सूर्यादिकमपि स्यात् । शुक्लमित्युक्ते...... ..स्यात् । अतः शुक्लज्योतिरिति । क्षेत्रगाय—क्षेत्रं शरीरं तत्र गच्छति अभिव्यक्तो भवतीति क्षेत्रगः । 'परात् परं परशिवं पुरुषमीक्षते'—इति श्रुतिः ॥१५३॥

## सर्वभोगसमृद्धाय साम्परायाय ते नमः
## नमस्ते स्वप्रकाशाय स्वच्छन्दाय सुतन्तवे ॥१५४॥

सर्वभोगसमृद्धाय—सर्वभोगा भोगसाधनभूता दिव्यगीतनृत्तवादित्रादिरूपा दिव्यस्रक्चन्दनवस्त्रान्नपानादिरूपाश्च समृद्धाः सम्पूर्णा यस्य स तथा । अयमर्थः शिवरहस्यादौ प्रसिद्धः। 'सर्वैश्वर्यसम्पन्नः सर्वेश्वरः'—इति श्रुतिः । साम्परायाय—साम्परायः परलोकः कैलासादिः ध्यातः पूजितः स्तुतः कीर्तितः स्मृतो वा तत्प्राप्तिसाधनभूत इति साम्परायः परमेश्वरः । उक्तं च पाद्मे

'ज्ञात्वा मां पूजयेद्यस्तु सर्वकामविवर्जितः ।
मया समानरूपः सन् मम लोके महीयते ॥'—इति ।

वायवीयसंहितायाम्—

'न तत्तपोभिरत्युग्रैर्न च सर्वैर्महामखैः ।

गच्छेच्छिवपुरं दिव्यं मुक्त्वा भक्तिं शिवात्मिकाम् ॥
भक्त्या पञ्चाक्षरेणैव यः शिवं सकृदर्चयेत् ।
सोऽपि गच्छेच्छिवस्थानं शिवमन्त्रस्य गौरवात् ॥'—इति

तत्रैव—

'एककालं द्विकालं वा त्रिकालं नित्यमेव वा ।
येऽर्चयन्ति महादेवं विज्ञेयास्ते गणेश्वराः ॥'—इति

'न साम्परायः प्रतिभाति बालम्' इति श्रुतिः । स्वप्रकाशाय—प्रमाणान्तरनैरपेक्ष्येण स्वयमेव प्रकाशते इति स्वप्रकाशः । तदुक्तं ब्रह्मवैवर्ते—

'नमः स्वयंप्रकाशाय नमो मायाविभेदिने ।
नमो वेदान्तवेद्याय नमोऽनन्तसुखाय ते ॥'—इति ।

'स्वयमीश्वरस्य प्रकाशः' इति श्रुतिः ।

स्वच्छन्दाय—स्वेच्छावृत्तिः स्वच्छन्दः, स्वतन्त्र इति यावत् । वासिष्ठे लैङ्गे अरुन्धतीं प्रति शिवः—

'नाऽऽगतोऽहं महाप्राज्ञे व्योमवत्सर्वगः सदा ।
तथापि मण्डलात्तस्मात् सौराद्वेदमयादहम् ॥
आगतो लीलया सार्धमनया धर्मचारिणि ।
स्वच्छन्दवृत्तिराचारो मम चाऽऽस्थाश्च सुन्दरि ॥'—इति ।

तत्रैव वसिष्ठं प्रति शिवः—

'उमया सहितः शक्त्या मुने विद्यास्वरूपया ।
नग्नो नृत्तप्रियश्चाहं हसन् ब्रह्म क्वचित् क्वचित् ॥
स्वच्छन्दवृत्तिर्भिक्षार्थं देवदारुवनं गतः ॥'—इति ।

'शाश्वतोऽजः स्वतन्त्रः' इति श्रुतिः । सुतन्तवे—शोभनस्तन्तुः विस्तीर्णः प्रपञ्चोऽस्येति सुतन्तुः । 'विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् । सर्वो ह्येष रुद्रः' —इति श्रुतिः ॥१५४॥

**सर्वज्ञमूर्तये तुभ्यं गुह्येशाय सुशान्तये ।**
**शारदाय सुशीलाय कौशिकाय धनाय च ॥१५५॥**

सर्वज्ञमूर्तये—सर्वज्ञा अनन्तकालीना गुणविशिष्टा मूर्तिस्तनुर्यस्य स तथा 'तस्यैते तनुवौ घोराऽन्या शिवाऽन्या' इति—श्रुतिः । गुह्येशाय—निधिं गुहन्तीति गुह्या मणिभद्रप्रभृतयः, तेषामीशः गुह्येशः धनदः, तद्रूपत्वात्, 'यो देवानां नामत एक-एव'—इति श्रुतेः । यद्वा—गुह्यैर्मणिभद्रप्रभृतिभिः प्रतिष्ठापितः लिङ्गरूपी गुह्येश्वरः, 'तव श्रिये मरुतः' इत्यादिश्रुतेः । सुशान्तये—शोभना नाशरहिता परमानन्दरूपा शान्तिरुपरतिस्वभावा च सुशान्तिः नित्यमुक्तं ब्रह्म इत्यर्थः । 'तेषां शान्तिः शाश्वती नेतरेषाम्' इति—श्रुतिः ॥ शारदाय—शारदा श्रुतिस्मृत्यादिवाग्रूपा 'यः सर्वज्ञः स सर्ववित्' इत्यादिश्रुतिः । सुशीलाय—कौशिकाय—कुशिकापत्यं कौशिको महर्षिः, तद्रूपत्वात् । 'विश्वाधिको रुद्रो महर्षिः' इत्यादिश्रुतिः । धनाय—धनं वस्त्रादि यथा सर्वेषां प्रियम्, एवं परशिवोऽपि सर्वप्रत्यगात्मत्वाद् धनवर्धनप्रियतरत्वात् । 'तदेतत् प्रेयः पुत्रात् प्रेयो वित्तात्'—इति श्रुतिः ॥१५५॥

**अभिरामाय तत्त्वाय व्यालकल्पाय ते नमः ।**
**अरिष्टमथनायाऽथ सुप्रतीकाय ते नमः ॥१५६॥**

अभिरामाय—सर्वे सर्वत्र रमन्ते अनेन इत्यभिरामः, नित्यरमणीय इति यावत्। 'एष ह्येवानन्दयति' इति—श्रुतिः। तत्त्वाय—तत्त्वम्—परमार्थः।

'साक्षात् परतरं तत्त्वं स्वभावादेव निर्मलम्।
उपत्त्यादिविनिर्मुक्तं स्वतन्त्रं पूर्णमव्ययम्।।'

—इति पराशरोपपुराणे। तथा—

'यत्सर्वशास्त्रसिद्धान्तं यत्सर्वहृदयानुगम्।
यत्सर्वं सर्वगं वस्तु यत्तत्त्वं तदसौ स्थितः।।'

—इति वासिष्ठे। 'तत्त्वं नारायणः परः' इति—श्रुतिः। व्यालकल्पाय—व्यालः सर्पः परहिंसोद्योगवान् वा, तत्कल्पस्तत्सदृशः व्यालकल्पः। 'योऽपि परमेश्वरः समः, तथापि शठानां च व्यालवद् भासते वर्तते च' इति श्रुतिः। अरिष्टमथनाय—अरिष्टानि अशुभानि, 'अरिष्टे तु शुभाशुभे' इत्यमरः; तेषां तत्कारणानां च मथनः अरिष्टमथनः; कर्तरि ल्युट्। "अहींश्च सर्वाञ्जम्भयन्' इति—श्रुतिः। सुप्रतीकाय—शोभनाः स्थिरतया चारवः प्रतीकाः अवयवाः यस्य स सुप्रतीकः। 'स्थिरैरङ्गैः पुरुरूप उग्रः' इति—श्रुतिः।।१५६।।

## आशवे ब्रह्मगर्भाय वरुणायाऽग्नये नमः।
## नमः कालाग्निरुद्राय श्यामाय सुजनाय च।।१५७।।

आशवे—आशुः शीघ्रव्यापी। 'आशवे च' इति श्रुतिः। ब्रह्मगर्भाय—ब्रह्मा पितामहः गर्भे यस्य स तथा। यद्वा—ब्रह्म वेदाः गर्भे यस्य स ब्रह्मगर्भः। 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति श्रुतिः। वरुणाय—वृणोति

आवृणोति आकाशादिकं सर्वमिदमिति वरुणः परमेश्वरः । 'येनावृतं खं च दिवं मही च' इति श्रुतिः । अद्रये—अद्रिवत् अकम्पनः, परैश्चल इति यावत्, 'तं शान्तमचलम्' इति श्रुतेः । यद्वा—श्रीशैलारुणाचलपर्वतरूपत्वात् अद्रिः, 'श्रीशैलशिखरं दृष्ट्वा पुनर्जन्म न विद्यते' इति, 'काश्यां तु मरणान्मुक्तिः स्मरणादरुणाचले' इति च स्मरणात् । 'वनानि शम्भुर्गिरयश्च शम्भुः' इति स्कान्दे । 'सर्वो ह्येष रुद्रः' इति श्रुतिः । कालाग्निरुद्राय—प्रलयकालरुद्रः सर्वसंहारसमर्थो ज्वलद्दावाग्निसन्निभः भुशुण्डादिकं प्रत्युपदेशकर्ता कालाग्निरुद्रः ।

'कालाग्निरुद्रं दूरस्थं ज्वलद्दावाग्निसन्निभम् ।'—इति पाद्मे

'अथ कालाग्निरुद्रं भगवन्तं सनत्कुमारः पप्रच्छ अधीहि भगवन् त्रिपुण्ड्रविधिम्' इति, 'तं होवाच भगवान् कालाग्निरुद्रः इति च श्रुतिः । श्यामाय—कृष्णवर्णः श्यामः । 'कृष्णपिङ्गलाय' इति श्रुतिः । सुजनाय—शोभना जनाः अगस्त्यगौतमप्रभृतयो भक्तत्वेन यस्य वर्तन्ते स सुजनः, 'प्रोवाच सम्यगृषिसङ्घजुष्टम्' इति श्रुतेः ॥१५७॥

**अहिर्बुध्न्याय जाराय दुष्टानां पतये नमः ।**
**नमः समयनाथाय समयाय गुहाय च ॥१५८॥**

अहिर्बुध्न्याय—अहेर्बुध्न्याय इति वक्तव्ये विभक्तिव्यत्यय आर्षः । इदं पदद्वयं सविशेषणमेकं नाम । बुध्नो मूलम्, 'मूलं बुध्नोऽङ्घ्रिनामकः' इत्यमरः । तत्र बुध्ने—ब्रह्माण्डभूते पाताले—साधुः बुध्न्यः पातालवर्ती; तादृशो हिः सर्पः शेषः इति यावत् । शेषस्य च तामसमूर्तित्वं रुद्रात्मकसङ्कर्षणाविर्भावत्वं च श्रीविष्णुपुराणे अभिहितम् । यथा—

'पातालानामधश्चास्ते विष्णोर्धातुर्महातनूः ।
शेषाख्यस्तद्गुणान् वक्तुं न शक्ता दैत्यदानवाः ॥
कल्पान्ते यस्य वक्त्रेभ्यो विषानलशिखोज्वलः ।
सङ्कर्षणात्मको रुद्रो निष्क्रम्यात्ति जगत्त्रयम् ॥'—इति ।

'अहेर्बुध्न्यं मन्त्रं मे गोपाय' इति श्रुतिः । जाराय—ऋषिपत्नीनां पातिव्रत्यभङ्गकरत्वात् जारः । स्कान्दे— भिक्षाटनसमये शिवं प्रति—

'आलोलकबरीभारा बाला मौक्तिकभूषणाः ।
भिक्षुं समागतं दृष्ट्वाऽऽजग्मुस्तत्पार्श्वमागताः ॥
अन्याः काश्चन पश्चाद्यो गलत्काञ्चीगुणाम्बराः ।
पुष्पचापशराविद्धा निपेतुरुपरि क्षणात् ॥
सर्वास्तत्र तथाभूतास्तपोधनमनोरमाः ।
बालाश्च यौवनोन्मत्ता प्रौढाश्च जरतीर्वने ॥
विमोह्य सुतरां तत्र शुभैर्भ्रूक्षेपणैः क्षणात् ।
विहस्य नितरामुच्चैरालोकति पिनाकिनि ॥'—इति,

'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति श्रुतेः । यद्वा—भक्तानां पापानि जरयतीति जारः, 'धर्मावहं पापानुदं भगेशम्' इति श्रुतेः । दुष्टानां पतये—दुष्टा रागद्वेषादिमन्तः अतिक्रान्तधर्माः स्तेनतस्करस्तायुप्रभृतयः, तेषां पतिः स्वामी । यद्वा—पापनाशकरोऽपि दुष्टानां पतिः 'स्तेनानां पतये नमः' इति श्रुतिः । समथनाथाय—समयः कालस्तस्य नाथः कर्ता । 'ज्ञः कालकालो गुणी' इति श्रुतिः । समयाय—समयः कालः । 'कालाय नमः' इति श्रुतिः। गुहाय—गुहः स्कन्दः, तद्रूपत्वात् । यद्वा—गुहा बुद्धिः, साऽस्य व्यक्तिस्थानत्वेनास्तीति, मत्वर्थीयाच-

प्रत्ययान्तः शब्दः । 'यो वेद निहितं गुहायाम्' इति, 'यो वै रुद्रः स भगवान् यश्च स्कन्दः' इति च श्रुतिः ।। १५८।।

**दुर्लङ्घ्याय नमस्तुभ्यं छन्दःसाराय दंष्ट्रिणे ।**
**ज्योतिर्लिङ्गाय मित्राय जगतां हितकारिणे ॥१५९॥**

दुर्लङ्घ्याय—अस्याऽऽज्ञालङ्घनं कर्तुमशक्यमग्निवाय्वादीनामिति दुर्लङ्घ्यः । 'भयादग्निस्तपति' इत्यादिश्रुतिः । छन्दःसाराय—छन्दसां वेदानां सारत्वेन प्रतिपाद्यः छन्दःसारः । 'सर्वे वेदा यत्पदमामनन्ति' इति श्रुतिः । दंष्ट्रिणे—दंष्ट्रा अस्य सन्तीति दंष्ट्री ।

'वज्रदंष्ट्रं त्रिनयनं कालकण्ठमरिन्दमम् ।
सहस्रकरमत्युग्रं वन्दे शम्भुमुमापतिम्' ॥'—इति ।

सहस्रमुखदंष्ट्राकरालवदनेति च प्रसिद्धम् । 'तस्यैते तनुवौ घोराऽन्या शिवाऽन्या च' इति श्रुतिः । ज्योतिर्लिङ्गाय—ज्योतीरूपमेव लिङ्गं ज्योतिर्लिङ्गम् । लीनमर्थं गमयतीति लिङ्गम्, जडप्रकाशमिति यावत् ।

'चिन्तयन्नेवमात्मस्थं ज्योतिर्लिङ्गं सदाशिवम् , इति लिङ्गे ।
'अत्रायं पुरुषः स्वयंज्योतिः' इति – श्रुतिः ॥

मित्राय—मित्रः सूर्यः, तद्रूपी । 'यो देवानां नामत एक एव' इति श्रुतिः । जगन्मित्रमिति वा, सर्वेषां प्रत्यगात्मत्वेन परमप्रेमास्पदत्वात् । 'प्रेयः पुत्रात् प्रेयो वित्तात्' इति श्रुतिः । जगतां हितकारिणे—जगच्छब्देन हितोपदेशयोग्याः प्राणिन उच्यन्ते, तेषां हितकारी । 'अहरहः सन्ध्यामुपासीत', 'न कलञ्जं

भक्षयेत्' 'न सुरां पिबेत्' इत्येवमादिविधिनिषेधोपदेशेन हितकरत्वात् जगतां हितकारी । यद्वा—सर्वप्राणिनां प्रेरितवह्निवायुसूर्यादिरूपेण हितं रक्षणं करोतीति । 'भीषाऽस्माद् वातः पवते' इत्यादिश्रुतिः ॥१५९॥

**नमः कारुण्यनिधये श्लोकाय जयशालिने ।**
**ज्ञानोदयाय बीजाय जगद्विभ्रमहेतवे ॥१६०॥**

**कारुण्यनिधये**—कारुण्यं कृपा अस्मिन् निधीयते इति कारुण्यनिधिः, अतिसुलभचुलुकजलदूर्वादितृणस्वीकारेण भोगमोक्षप्रदत्वात् ।

'दलं किञ्चित्समादाय चुलुकं जलमेव वा ।
यो दत्ते नियमेनाऽसौ तस्मै दत्ते जगत्त्रयम् ॥'

—इति शिवगीतायाम् । 'घृणिने कपर्दिने' इति श्रुतिः । **श्लोकाय**—श्लोकः 'यतो वाचो निवर्तन्ते' इति, तेन लभ्यत्वेन प्रतिपाद्यत्वात् परमेश्वरोऽपि श्लोकः; 'सर्वे वेदा यत्पदमामनन्ति' इति प्रस्तुत्य 'ओमित्येतत्' 'एतद्ध्येवाक्षरं ब्रह्म' इत्यादिवत् । अथवा श्लोकशब्दो मत्वर्थीयाच्प्रत्ययान्तः, श्लोकोऽस्यास्तीति प्रतिपादकत्वेन इति श्लोकः । श्रुतिरुक्तैव । **जयशालिने**—सर्वत्र विजयी जयशाली । 'जेतारमपराजितम्' इति श्रुतिः । **ज्ञानोदयाय**—ज्ञानस्य उदयो येन आराधितेन परमेश्वरेण स ज्ञानोदयः, 'ज्ञानं महेश्वरादिच्छेत्' इति स्मरणात् ।

'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥'

—इति श्रुतिः । **बीजाय**—बीजं भूतसूक्ष्ममव्याकृतादि

भूतसूक्ष्माऽव्याकृतादिशब्दवाच्यं जगत्कारणम्। 'स कारणं कारणाधिपाधिपः' इति श्रुतिः। जगद्विभ्रमहेतवे—जगद्विभ्रमस्य मायामयस्य हेतुः, पारमार्थिकाधिष्ठानरूपः। 'मायामात्रमिदं द्वैतमद्वैतं परमार्थतः' इति श्रुतेः। 'मिथ्याजगदधिष्ठान' इति ब्रह्माण्डपुराणे ॥१६०॥

**अवधूताय शिष्टाय छन्दसां पतये नमः।**
**नमः फेन्याय गुह्याय सर्वबन्धविमोचिने॥१६१॥**

अवधूताय—परित्यक्तवास्तवसर्वप्रपञ्चोऽवधूतः। 'अथात आदेशो नेति नेति' इति, 'नेह नानाऽस्ति किञ्चन' इत्यादिश्रुतिः। शिष्टाय—महाप्रलये एक एव सन् सर्वोपसंहारानन्तरं परिशिष्यते इति शिष्टः। यद्वा—समाधिकाले योगिनामविद्यामायादिरहिततया एक एव सन् परिशिष्यत इति। अथवा सर्वदा प्रपञ्चविनिर्मुक्त एक एव परिशिष्यत इति। उक्तं च वासिष्ठे—

'न शोकोऽस्ति न मोहोऽस्ति न जन्माऽस्ति जरादयः।
यदस्तीह तदेवाऽस्ति विज्वरो भव राघव ॥'—इति।

'न विरोधो न चोत्पत्तिर्न बन्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥'—इति श्रुतिः।

छन्दसां पतये—छन्दसां गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यादीनामुपलक्षणमेतत्। यजुषां लौकिकवचसां तद्वाच्यभूतानामर्थानां च पतिः। तत्कारणत्वेन सर्वात्मकत्वात् ॐकारस्य, 'ओमित्येतदक्षरमिदं सर्वम्' ओंकार एवेदं सर्वम्' इत्यादिश्रुतेः। एवं परमेश्वरोऽपि ओंकारः, 'एतद्वै सत्यकामः परं चापरं च ब्रह्म यदोंकारः' इति श्रुतेः। फेन्याय—नदीमध्यगतो यः फेनः, तत्र भवः फेन्यः। तम् (फेनम्) अर्हतीति वा। 'नमः

शष्प्याय च फेन्याय च' इति श्रुतिः। गुह्याय—गुह्यो गोप्यः, अभक्तान् प्रति उपदेशेऽनर्ह इति यावत्। 'हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म' इति श्रुतिः। सर्वबन्धविमोचिने—सर्वेषां जनानां सर्वबन्धहेतूनां पाशरूपाणामविद्यास्मितारागद्वेषादीनाम् 'अहमस्मि' इति प्रत्यगात्मत्वेन ज्ञातः सन् विमोचकः सर्वविधबन्धविमोची। 'ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैः जन्ममृत्युप्रहाणिः' इति श्रुतिः ॥१६१॥

उदारकीर्तये शश्वत्प्रसन्नवदनाय च।
वसवे वेदकाराय नमो भ्राजिष्णुजिष्णवे ॥१६२॥

उदारकीर्तये—उदारा उत्कृष्टा—श्रुतिस्मृतीतिहासपुराणलोकेषु 'एष सर्वेश्वरः' 'एष सर्वज्ञः' 'एषोऽन्तर्यामी' 'एष योनिः' इत्यादिना—प्रथिता कीर्तिर्यस्य स उदारकीर्तिः। शश्वत्प्रसन्नवदनाय—शश्वत् सर्वदा प्रसन्नं प्रसादयुक्तस्वरूपनिरतिशयपरमानन्दानुभवप्रयुक्तं वदनं यस्य सः। तथा चोक्तम्—

'नीलग्रीवं शरच्चन्द्रचन्द्रिकावद्विराजितम्।
गोक्षीरधवलाकारं चन्द्रबिम्बसमाननम्॥
सुस्मितं सुप्रसन्नं च स्वात्मतत्त्वैकसंस्थितम्।
गङ्गाधरं शिवं शान्तं लसत्केयूरमण्डितम्॥'—इति।

'आनन्दो ब्रह्मेति व्यजानात्' इति श्रुतिः। वसवे—वसतीति वसुः। जातौ त्वेकवचनम्,

धरो ध्रुवश्च सोमश्च आपश्चैवानलोऽनिलः।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टावुदीरिताः॥'

—इति भविष्योत्तरपुराणे। तद्रूपत्वाद् वसुः। सर्वत्र सर्वदा पूर्णो

वसतीति वा वसुः इति। 'तेनेदं पूर्णं पुरुषेण सर्वम्' इति श्रुतिः। वेदकाराय—विद्येते धर्मब्रह्मणी एभिरिति वेदाः, आज्ञया तान्करोति निःश्वासरूपतया उच्चारयतीति वेदकारः। 'अस्य महतो भूतस्य' इत्यादिश्रुतिः। भ्राजिष्णुजिष्णवे—भ्राजते—प्रकाशते इति भ्राजिष्णुः, जिष्णुर्जयशीलः; भ्राजिष्णुश्चासौ जिष्णुश्च भ्राजिष्णुजिष्णुः स्वप्रकाशः सर्वोत्कृष्ट इति यावत्। सर्वोत्कृष्टत्वं च—सर्वदेशसर्वकाल-सर्ववस्तुव्यापित्वम्। 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतिः ॥१६२॥

**चक्रिणे देवदेवाय गदाहस्ताय पुत्रिणे।**
**पारिजातसुपुष्पाय गणाधिपतये नमः ॥१६३॥**

चक्रिणे—जलन्धरवधार्थं स्वपादाङ्गुष्ठेन निर्मितं चक्रमस्यास्तीति चक्री। आदित्यपुराणे विष्णुं प्रति—

'आविर्भूतो महादेवो मण्डलात्तिग्मदीधितेः।
कोटिसूर्यप्रतीकाशस्त्रिनेत्रश्चन्द्रशेखरः ॥
शूलटङ्कगदाचक्रकुन्तपाशधरो विभुः।
वरदाभयपाणिश्च सर्वाभरणभूषितः ॥'—इति प्रस्तुत्य,

'दिव्यं ददामि ते चक्रमद्भुतं यत्सुदर्शनम्।
जलन्धरवधार्थाय निर्मितं यन्मया पुरा ॥
गृहीत्वा तद्रणे दैत्यान् जहि विष्णो ममाज्ञया।
एवमुक्त्वा ददौ चक्रं सूर्य्यायुतसमप्रभम् ॥
नेत्रं च पद्मसदृशं विष्णवे प्रभविष्णवे।'—इति।

'नमः स्वायुधाय च' इति श्रुतिः। देवदेवाय—देवानां ब्रह्मादीनामपि देवः अधिपः।

'देवदेव महादेव जगत्कारणकारण ।
अनादिमध्यनिधन नमस्तुभ्यं महेश्वर ॥'—इति पाद्मे ।

'तं देवानां परमं च दैवतम्' इति श्रुतिः । गदाहस्ताय—गदा हस्ते यस्य स गदाहस्तः । गदाहस्तत्वमुक्तश्वानादिश्रुतिश्च । पुत्रिणे—विश्वेश्वरस्य सर्वपूज्यत्वात् विष्ण्वादिपराक्रमतुल्यगणानां पतित्वात् सकलविघ्ननिरासकत्वात् सर्वज्ञत्वात् ब्रह्मादिपतित्वाच्च, 'गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥' इति श्रुतेः । स्कन्दस्यापि लोकोत्तरसौन्दर्यशौर्यवीर्यगाम्भीर्यवत्त्वात् महायोगित्वेन प्रसिद्धेः । सनत्कुमारस्यापि श्रुतौ 'तं स्कन्द इत्याचक्षते' इति स्कन्दत्वेन स्तुतत्वात् । ब्रह्मादीन् प्रति अतिकण्टकत्वेन प्रसिद्धतारकपद्मादिविनाशकत्वात् । एवं महाशास्तुर्दुष्टभूतप्रेतपिशाचादिनिग्राहकत्वात् सर्वाभीष्टफलप्रदत्वाच्च । एवं ललितोपाख्यानादिषु परमेश्वरापत्यानि दृष्टानि । तस्मात् परमेश्वरस्यैव पुत्रवत्त्वम् । 'लम्बोदरायैकदन्ताय विघ्ननाशिने शिवपुत्राय' इति, 'वैष्णवीं स्कन्दमातरम्, इति च श्रुतिः । पारिजातसुपुष्पाय—पारिजातो देवतरुः, 'पञ्चैते देवतरवो मन्दारः पारिजातकः । सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्द्रनम् ॥' इत्यमरः । तथा च पारिजातपदं देवतरूणामुपलक्षणम् । एवञ्च पारिजातोपलक्षितदेवतरुसम्बन्धीनि शोभनानि सद्योविकसितादीनि दिव्यपरिमलमकरन्दयुक्तानि मलयमारुतात् स्ववृन्ताच्चलितानि घुमघुमायमानानि पुष्पाणि देव्या सह सुरतरूद्याने विहरणसमये स्वाङ्गे पतितानि यस्य स पारिजातसुपुष्पः । उक्तं च भाष्यकारेण—

'मन्दारकल्पहरिचन्दनपरिजात-
मध्ये शशाङ्कमणिमण्डपवेदिसंस्थः ।' इति ।

'सुधासिन्धोर्मध्ये　सुरविटपिवाटीपरिवृते
मणिद्वीपे नीपोपवनवति चिन्तामणिगृहे ।'—इति च ।

'सुगन्धि पुष्टिवर्धनम्' इति श्रुतिः ।

गणाधिपतये—गणादीनां नन्दीभृङ्गीमहाकालप्रभृतीनां पतिः परिवृढः । 'नमो गणेभ्यो गणपतिभ्यश्च' इति श्रुतिः ॥१६३॥

**सर्वशाखाधिपतये प्रजनेशाय ते नमः ।**
**सूक्ष्मप्रमाणभूताय सुरपार्श्वगताय च ॥१६४॥**

सर्वशाखाधिपतये—ऋग्वेदस्य एकविंशतिशाखाः, यजुर्वेदस्य एकशतसंख्याकाः, सामवेदस्य सहस्रसंख्याकाः, अथर्ववेदस्य नवतिसंख्याकाः, एतासां सर्वासां शाखानामधिपतिः, निःश्वसितवत् अप्रयत्नेन परमेश्वरादुत्पन्नत्वात्, 'अस्य महतो भूतस्य' इत्यादिश्रुतेः; अतः सर्वशाखाधिपतिः । प्रजनेशाय—प्रकृष्टा जनाः प्रजनाः—भक्ता दधीचिप्रभृतयो नन्दीभृङ्ग्यादयो वा, तेषामीशः, ज्ञानवैराग्यदानादिना क्रीडासंल्लापादिना चानुग्राहकत्वात् । यद्वा—प्रकृष्टजना ब्रह्मादयस्तेषामीशः, सृष्टिस्थितिसंहाराद्यधिकारप्रदत्वात् । 'तमीश्वराणां परमं महेश्वरम्' इति श्रुतिः । सूक्ष्मप्रमाणभूताय—सूक्ष्ममाकाशादिभ्यः । सूक्ष्मं च तत्प्रमाणं च सूक्ष्मप्रमाणम् । सर्वप्रकाशकमात्मनः सूक्ष्मत्वम् 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यारभ्य, 'पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः' इत्यन्तेन प्रतिपादितम् । अतः सूक्ष्मप्रमाणं सूक्ष्मप्रमाणस्वरूपं सूक्ष्मप्रमाणभूतं प्रत्यक्षानुमानादीनां यथा प्रमाणत्वमवगम्यते, न तथा आत्मनः प्रमाणत्वं गम्यते, परमसूक्ष्मत्वात् । 'सर्वस्य साक्षी' इति श्रुतिः । सुरपार्श्वगताय—इन्द्रादिपक्षपाती सुरपार्श्वगतः । इदं च स्कान्दे प्रसिद्धम्—

'पुरा सुराणां सर्वेषामसुराणां दुरात्मनाम् ।
महामोहेन संग्रामः संजातो दुर्निवारकः ॥
असुरैः पीडिताः सर्वे बलवद्भिः सुरा भृशम् ।
तद् दृष्ट्वा भगवानीशः सर्वज्ञः करुणाकरः ॥
देवानां विजयं देवा असुराणां पराभवम् ।
ददौ तेन सुरैः शीघ्रमसुरास्तु पराजिताः ॥'—इति ।

'ब्रह्म ह देवेभ्यो विजिग्ये' इति श्रुतिः ॥१६४॥

**अशरीरशरीराय अपगल्भाय ते नमः ।**
**सुकेशाय सुपुष्पाय श्रुतये पुष्पमालिने ॥१६५॥**

**अशरीरशरीराय**—न विद्यते शरीरं यस्य तदशरीरं ब्रह्म, 'अशरीरं शरीरेषु अनवस्थेष्ववस्थितम् । महान्तं विभुमात्मानम्' इति श्रुतेः; तदेव शरीरं स्वरूपं यस्य सः—अशरीरशरीरः, 'अशरीरो निरिन्द्रियोऽप्राणः' इति श्रुतेः । यद्वा—वस्तुतस्तु अशरीरोऽपि भक्तानुग्रहार्थमिच्छया शरीरवान् । अस्मिन् पक्षे शरीरशब्दो मत्वर्थीयाच्प्रत्ययान्तः । तदुक्तं सुप्रभेदे—

'यतीनां मन्त्रिणां चैव ज्ञानिनां योगिनां तथा ।
ध्यानपूजानिमित्तार्थं तनुं गृह्णाति चेच्छया ॥'—इति ।

परमेश्वरस्य अशरीरत्वे सशरीरत्वे च—'अनादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम् । उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् । ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् ॥' इति श्रुतिः । **अपगल्भाय**—अपगल्भः अप्ररूढेन्द्रियो बालः, अत्यन्तशिशुरिति यावत् । 'मध्यमाय चापगल्भाय च' इति श्रुतिः ॥

॥ इति नवमशतकभाष्यम् ॥

---

## ॥ अथ दशमशतकभाष्यम् ॥

सुकेशाय—शोभनाः केशा यस्य स सुकेशः नीलकेशः, नित्ययुवा इति यावत्। 'स्तुहि श्रुतं गर्तसदं युवानम्' इति श्रुतिः। सुपुष्पाय—शोभनानि पुष्पाणि भक्तैरभ्यर्थितानि नीलोत्पलादीनि यस्य स तथा। अनेन नाम्ना शोभनपुष्पगन्धादिभिः परमेश्वरः पूज्य इत्युक्तं भवति। तदुक्तं शैवे—

'दुर्लभं प्राप्य मानुष्यं येऽर्चयन्ति पिनाकिनम्।
तेषां तु सफलं जन्म कृतार्थास्ते नरोत्तमाः ॥'—इति।

'यावन्नाऽऽयाति मरणं यावन्न क्रमते जरा।
यावन्नेन्द्रियवैक्लव्यं तावत् पूज्यो हि शङ्करः ॥'—इति।

'ब्रह्म ह देवेभ्यो विजिग्ये' इति प्रस्तुत्य, 'किमिदं यक्षम्' इत्यादिश्रुतिः। श्रुतावत्र यक्षमित्यस्य पूज्यमित्यर्थः। श्रुतये—शब्दविषया श्रोत्रजन्या या मनोवृत्तिस्तत्प्रकाशिका श्रुतिः। चैतन्यस्वरूपा श्रुतिः। 'नहि श्रोतुः श्रुतेर्विपरिलोपो विद्यते' इति श्रुतिः। पुष्पमालिने—नीलोत्पलादिभी रचिता भक्तैर्भृत्यैर्वा समर्पिता माला यस्य स पुष्पमाली। श्रुतिरुक्ता ॥१६५॥

**मुनिध्येयाय मुनये बीजसंस्थमरीचये।**
**चामुण्डाजनकायाऽथ नमस्ते कृत्तिवाससे॥१६६॥**

मुनिध्येयाय—मुनिभिर्मननशीलैर्योगिभिः हृदयादौ सदा ध्येयः। आदित्यपुराणे भानुः—

'आत्मभूते महादेवे योगिध्येये सनातने।
भक्तिमास्थाय परमां परं निर्वाणमाप्नुहि ॥'—इति।

'योगिध्येयं परमं पदम्' इति श्रुतिः । **मुनये**—मननात् मुनिः, सर्वदा स्वात्मानुसन्धानपरत्वात् ।

'स्वात्मतत्त्वसुखस्फूर्तिप्रमोदात् ताण्डवप्रियः ।'

—इति स्कान्दे । 'विश्वाधिपो रुद्रो महर्षिः' इति श्रुतिः । **बीजसंस्थमरीचये**—बीजसंस्था मरीचिः, तत्तुल्य इत्यर्थः । इदं च नाम परमेश्वरस्य सर्वाधिष्ठानत्वात् सर्वात्मकत्वात् सर्वावभासकत्वाच्च किमित्यवभासो न स्यादित्याशङ्कानिवृत्त्यर्थम् ; भानुसम्बन्धमरीचिः सर्वव्यापी सर्वप्रकाशकः स चेत् बीजादिषु तिरोहितस्तदा न प्रकाशते, एवमुक्तलक्षणः परशिवः जगद्बीजस्थानीयमायया तिरोहितः सन्, अविदुषां न प्रकाशते । अनेकजन्माराधितपरमेश्वरानुग्रहवतां पुरुषधौरेयाणां सर्वाधिष्ठानतया सर्वात्मतया सर्वप्रकाशतया प्रत्यगात्मत्वेन च सदा करतलामलकवद् भासते । उक्तं च स्कान्दे—

'तमहंप्रत्ययव्याजात् सर्वे जानन्ति जन्तवः ।
तथापि शिवरूपेण न विजानन्ति मोहिताः ॥
प्रसादादेव रुद्रस्य श्रुत्युत्पन्नात्मविद्यया ।
बहूनां जन्मनामन्ते जानन्त्येव शिवं बुधाः ॥'—इति ।

बीजसंस्थमरीचिरित्यभूतोपमा ।

'तिलेषु तैलं दधिनीव सर्पि-
रापः स्रोतःस्वरणीषु चाऽग्निः ।
एवमात्मा निगृह्यतेऽसौ
सत्येनैनं तपसा योऽनुपश्यति ॥'—इति,

'सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवाऽर्पितम् ।' इति श्रुतिः । **चामुण्डाजनकाय**—चण्डश्च मुण्डश्च चण्डमुण्डौ असुरौ, तौ वध्यत्वेन अस्या आसाते इति चामुण्डा । अत्र प्रमाणं देवीमाहात्म्ये—

'यस्माच्चण्डं च मुण्डं च गृहीत्वा त्वमुपागता ।
चामुण्डेति ततो लोके ख्याता देवी भविष्यति ॥'—इति;

'चण्डमुण्डा तु चामुण्डा' इति नैघण्टुकाः, पृषोदरादित्वात् साधुता, तस्या जनकः चामुण्डाजनकः । यद्यपि देवीमाहात्म्ये शुम्भनिशुम्भवधार्थं देव्या शरीरकोशान्निर्गता कौशिकीति समाख्याता नारायणीति स्तुता, या देवी तस्या निटिलादुत्पन्ना इयं काली च समाख्याता; तथापि—

'न शिवेन विना शक्तिर्न शक्तिरहितः शिवः ।
उमाशङ्करयोरैक्यं यः पश्यति स पश्यति ॥'

—इति शिवपुराणवचनात् देवीशिवयोरभिन्नत्वाद् देव्या कृतं शिवेनैव कृतमिति इदं नाम प्रवृत्तम् । 'सर्वे वै देवदेवीमुपतस्थुः काऽसि त्वं महादेवि साऽब्रवीदहं ब्रह्मस्वरूपिणी, प्रकृतिपुरुषात्मकं जगत्' इति श्रुतिः । कृत्तिवाससे—कृत्तिः दारुकावनस्थमुनिकृताभिचारोत्पन्नव्याघ्रस्य चर्म वासो यस्य स तथा । अथवा शिवभक्तजिघांसयाऽऽगतस्य गजासुरस्य कृत्तिरत्र विवक्षिता । 'प्राणेश्वरः कृत्तिवासाः पिनाकी' इति श्रुतिः ॥१६६॥

**व्युप्तकेशाय योग्याय धर्मपीठाय ते नमः ।
महावीर्याय दीप्ताय बुद्धायाऽशनये नमः ॥१६७॥**

व्युप्तकेशाय—मुण्डितकेशो व्युप्तकेशः, यजमानमूर्तिरित्यर्थः । यद्वा—मुण्डितकेशो व्युप्तकेशः; पाशुपतादिवेषेण कपर्दित्वम्, यत्यादिवेषेण च मुण्डितकेशत्वं बोध्यम् । 'नमः कपर्दिने च व्युप्तकेशाय च' इति श्रुतिः। योग्याय—योगः समाधिः, तदर्हः तेन ज्ञातुमर्हः योग्यः, योगिध्येय इत्यर्थः । 'योगिध्येयं परमं

पदम्' इति श्रुतिः। धर्मपीठाय—धर्माणां ज्ञानादीनामनश्वराणां पीठमाधारम्, ज्ञानादिमानिति यावत्। तदुक्तं पुराणे—

'ज्ञानं विरागतैश्वर्यं तपः सत्यं क्षमा धृतिः।
स्रष्टृत्वमात्मसम्बोधो ह्यधिष्ठातृत्वमेव च।
अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे॥'—इति।

'एष सर्वेश्वरः एष सर्वज्ञः' इति श्रुतिः। महावीर्याय—महत्सु मेरौ धनुषि मौर्व्यां सर्पराजे नारायणात्मकशरसन्धाने पटीयः वीर्यं साहसिक्यं यस्य स तथा। यद्वा—महत् ब्रह्माण्डप्रकृतिभूतं वीर्यं तेजो यस्य स तथोक्तः। तदुक्तम्—

'अप एव ससर्जाऽऽदौ तासु वीर्यमुपासृजत्।
तदण्डमभवद्धैमं सहस्रादित्यसन्निभम्॥'—इति।

'रुद्रो वै क्रूरः' इति प्रथमार्थे श्रुतिः; क्रूरः—बलवान्। द्वितीयार्थे तु 'संरक्षत लोकान्नः प्रजाः' इति। 'स इमाँल्लोकानसृजत' इति श्रुतिः। दीप्ताय—दीप्तः प्रकाशरूपः। 'दीप्ताय दीप्तरूपिणे' इति श्रुतिः। बुद्धाय—बोधस्वभावो बुद्धः, प्रपञ्चासंसृष्ट इत्यर्थः। 'नित्यः शुद्धो बुद्धः सत्यः' इति श्रुतिः। अशनये—अशनिः वज्रं तद्वत् सर्वभयङ्करः, सर्वेषां मर्यादातिक्रमणे शिक्षकत्वात्। 'महद् भयं वज्रमुद्यतम्' इति श्रुतिः॥१६७॥

**विशिष्टेष्टाय सेनान्ये द्विपदे च नमो नमः।**
**कारणाय भगवते बाणदर्पहराय च॥१६८॥**

विशिष्टेष्टाय—वसिष्ठादयः शिष्टाः, तदपेक्षया विशेषेण शिष्टः विशिष्टः; विकार्यकरत्वाद्, इष्टश्च परमप्रेमास्पदत्वात्,

'आत्मनस्तु कामाय सर्वं प्रियं भवति' श्रुतेः। अथवा विशिष्टाः—इदानीन्तनशिष्टापेक्षया विशेषेण शिष्टा वसिष्ठगौतमादयः, ते इष्टाः प्रिया यस्य स तथा इति,

'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः।'—इति भगवद्वचनात्। 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वाम्' इति श्रुतेः। सेनान्ये—सेनाः संघाताः, यथा देव-मनुष्यासुर-रक्षो यक्ष-पिशाच-किन्नर-विद्याधरादयो भोक्तृसङ्घाता श्चेतनाः पृथिव्यादयस्तत्त्वसङ्घाताश्च तासां स्वस्वाधिकाररूपेण स्वामित्वेन नेता सेनानीः। यद्वा—सङ्ग्रामेषु सेनां नयतीति तद्रूपीत्यर्थः। अथवा सेनानीः गुहः, तद्रूपीति। 'नमो हिरण्यबाहवे सेनान्ये' इति श्रुतिः। द्विपदे—द्वौ पादौ यस्य स द्विपात्। एकेन पादेन सर्वाज्ञानभूतापस्मारस्य निगृहीतत्वात् अन्येन च सर्वसंहर्तृयमस्य निगृहीतत्वात् स एव परमेश्वरो द्विपाद्। अन्ये चतुष्पात्पशु-तुल्या ब्रह्मादयः, 'ब्रह्माद्याः स्थावरान्ताश्च पशवः परिकीर्तिताः' इति वचनात्। तथा च ब्रह्मादीनां पशुस्थानीयत्वात् पशुपालवत् परमेश्वरस्य पशुपतित्वात् द्विपात्त्वम्। 'पशूनां पतये नमः' इति श्रुतिः। कारणाय—कारणानां कारणं जगत्कारत्वेन प्रसिद्धानां विराड्ढिरण्यगर्भेश्वराणां ब्रह्मविष्णुरुद्राणां वा कारणमुत्पादकः। स्कान्दे—

'ब्रह्मा विष्णुश्च रुद्रश्च परितत्त्वविभूतयः।
तेषां त्रयाणामधिकः सर्वकारणमीश्वरः॥'—इति।

'यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः' इति श्रुतिः। भगवते—निरतिशयैश्वर्यसम्पन्नो भगवान्।

'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥' इति ।
उत्पत्तिं च विनाशं च भूतानामगतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥'

—इति स्मरणात् । 'सर्वव्यापी स भगवान् तस्मात् सर्वगतः शिवः' इति श्रुतिः । बाणदर्पहराय—बाणस्य बाणासुरस्य दर्पं गर्वं श्रीकृष्णद्वारा हरतीति बाणदर्पहरः । इदं च हरिवंशे प्रसिद्धम् । 'कृष्णाय पिङ्गलाय' इति श्रुतिः ॥१६८॥

**अतीन्द्रियाय रम्याय जनानन्दकराय च ।**
**सदाशिवाय सौम्याय चिन्त्याय शशिमौलिने ॥१६९॥**

अतीन्द्रियाय—इन्द्रियागोचरत्वात् अतीन्द्रियः ।

'हृत्पुण्डरीकान्तरसन्निविष्टं
स्वतेजसा व्याप्तनभोऽवकाशम् ।
अतीन्द्रियं सूक्ष्ममनन्तमाद्यं
ध्यायेत् परानन्दमयं महेशम् ॥'

—इति ब्रह्मोत्तरखण्डे । 'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा०' इति श्रुतिः । देवैः इन्द्रियैरित्यर्थः । रम्याय—सुखस्वरूपत्वाद् रम्यः । 'यो वै भूमा तत्सुखम्' इति श्रुतिः । जनानन्दकराय—जनानामानन्दं करोतीति जनानन्दकरः । 'एष ह्येवानन्दयति' इति श्रुतिः । सदाशिवाय—सदा सर्वकालेषु वर्तमानः सदाशिवः । किं कादाचित्कोऽपि शिवोऽस्ति, यद्व्यावृत्तये सदा इति विशेषणम् ? [इति चेदुच्यते] अस्त्येव । वायवीयसंहितायाम्—

'आयुषोऽत्र निमेषाख्यमादिमानं प्रचक्षते ।'-इति प्रस्तुत्य,

'चतुर्युगसहस्राणि स कल्प इति कथ्यते ।'—इति प्रसिद्धं कल्पपरिमाणमुक्त्वा—

'कल्पो नाम दिवा प्रोक्तो ब्रह्मणोऽव्यक्तजन्मनः ।
कल्पानां वै सहस्रं च ब्रह्मवर्षमिहोच्यते ॥
वर्षाणामष्टसाहस्रं यच्च तद्ब्रह्मणो युगम् ।
सवनं युगसाहस्रं ब्रह्मणः पद्मजन्मनः ॥
सवनानां सहस्रं च गुणितं त्रिविधं तथा ।
कल्प्यते सकलः कालो ब्रह्मणः परमेष्ठिनः ॥
तस्यैव दिवसे यान्ति चतुर्दश पुरन्दराः ।
शतानीमानि चत्वारि विंशत्या सहितानि च ॥
अष्ट पञ्च सहस्राणि चत्वारिंशद्युगानि च ।
चत्वारिंशत्सहस्राणि पञ्च लक्षाणि चायुषि ॥
ब्रह्मा विष्णुदिने चैको विष्णू रुद्रदिने तथा ।
ईश्वरस्य दिने रुद्रः सदाख्यः स तथेश्वरः ॥
साक्षाच्छिवस्य तत्संख्यस्तथा सोऽपि सदाशिवः ।
तस्मिन् साक्षाच्छिवेनैव कालात्मा संप्रवर्तते ॥-इति ।

अयमर्थः—कल्पः प्रसिद्धः । तादृशकल्पसहस्रमेको वत्सरः । तादृशवत्सराणामष्टसहस्राण्येकं युगम् । तादृशयुगसहस्रमेकं सवनम् । तादृशसवनसहस्राणि त्रिगुणानि सन्ति, त्रिविधानि नवसंख्याकानीति यावत् । सहस्रस्य प्रथमं त्रैगुण्ये त्रीणि सहस्राणि ततस्तस्यास्त्रिसाहस्र्याः पुनस्त्रैगुण्येन नवसाहस्र्यां पर्यवसानात् । एवं तादृशसवनानां नवसाहस्री ब्रह्मणः परमायुः । तादृशब्रह्मपरमायुर्विष्णोः एकं दिनम् । तादृशविष्णुपरमायू रुद्रस्य एकं दिनम् । तादृशरुद्रपरमायुः महेश्वरस्य एकं दिनम् । तादृशमहेश्वरपरमायुः सदाशिवस्य एकं दिनम् । तादृशसदा-

शिवपरमायुः परमशिवस्य एकं दिनम् । परमशिवस्य तु कालकृत-परिच्छेद एव नास्ति । अत एव प्रदेशान्तरेऽपि तत्रैव—

'कालावच्छेदयुक्तानां गुरूणामप्यसौ गुरुः ।
सर्वेषामेव सर्वेशः कालावच्छेदवर्जितः ॥'—इति ।

यद्यपि उदाहृतवचनैः सदाशिवस्यापि कादाचित्कत्व-मागतमिति सदेति विशेषणानन्वयः; तथापि ब्रह्माद्यपेक्षया अधिककालवर्तित्वेन ब्रह्मादिकालेषु सदा वर्तते इति तदभिप्रायो बोध्यः । परमशिवे वा केवलयौगिको वार्थः, तत्र कालावच्छेदरहिते सदापदाञ्जस्यात् । न च तस्य कालावच्छेदोऽस्त्येव, 'सदाशिवस्य परमायुः, परमशिवस्य दिनम्' इति परिच्छिन्नव्यवहारयोगादिति वाच्यम्; दिनव्यवहारवदिति 'क्षुद्रः कालः' इत्यौपचारिकतया प्रवर्तकत्वात् । अत एवोक्तं तत्रैव किञ्चिदुत्तरतः—

'अहर्न विद्यते तस्य न रात्रिरिति धारयेत् ।
उपचारस्तु क्रियते लोकानां हितकाम्यया ॥'

—इति सनत्कुमारसंहितायाम् । 'ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम् ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्' इति श्रुतिः । **सौम्याय**—सोमो भवानीपतिस्तेन अनन्यः सौम्यः प्रियदर्शनो वा । 'प्राजापत्यं सूक्ष्मं सौम्यम्' इति श्रुतिः । **चिन्त्याय**—चिन्तार्हः चिन्त्यः, परमानन्दरूपत्वात् । तथा च परमशिव एव कर्मेन्द्रियज्ञानेन्द्रियमनोहङ्कारनिरोधपूर्वकं धारणाध्यानसमाधिभिः साक्षात्कर्तव्य इत्यर्थः । तदुक्तं मनुना—

'कर्मेन्द्रियाणि संयम्य पञ्च बुद्धीन्द्रियाणि च ।
दशेन्द्रियाणि मनसि ह्यहङ्कारे तथा मनः ॥

अहङ्कारं तथा बुद्धौ बुद्धिमात्मनि योजयेत्।
यतः बुद्धीन्द्रियः पश्यन् बुद्ध्या बुद्ध्येत् परात्परम्॥'-इति।

'न चिन्त्यमेव तत्' इति श्रुतिः। **शशिमौलिने**—शशी चन्द्रः मौलौ यस्य स शशिमौली। 'नमश्चन्द्रललाटाय' इति श्रुतिः॥ १६९॥

**नमस्ते जातुकर्ण्याय सूर्याध्यक्षाय ते नमः।**
**ज्योतिषे कुण्डलीशस्य वरदायाऽभयाय च॥१७०॥**

**जातुकर्ण्याय**—जातुकर्णस्य महर्षेरपत्यं पुमान् जातुकर्ण्यः, तद्रूपत्वात्। 'विश्वाधिपो रुद्रो महर्षिः' इति श्रुतिः। **सूर्याध्यक्षाय**—सूर्यस्य अध्यक्षः पालयिता सूर्याध्यक्षः, 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इति श्रुतेः। **ज्योतिषे**—ज्योतिः प्रकाशरूपत्वात् 'प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' इति श्रुतिः। **कुण्डलीशस्य वरदाय**—सर्पराजः शेषः, स पतञ्जलिरूपः सन् परमेश्वरनटनदर्शनार्थं तिल्लवननामके पुण्डरीकपुरे तपः कृतवान्। तं प्रति नटनप्रदर्शनपूर्वकं वरदानार्थमाविर्बभूव परशिव इति चिदम्बरमाहात्म्यादौ प्रसिद्धम्। 'तमीशानं वरदं देवमीड्यम्' इति श्रुतिः। **अभयाय**—भयरहितोऽभयः। 'अभयं तितीर्षतां पारम्' इति श्रुतिः॥१७०॥

**वसन्ताय सुरभये जयारिमथनाय च।**
**प्रेम्णे पुरञ्जयायाऽथ पृषदश्वाय ते नमः॥१७१॥**

**वसन्ताय**—वसत्यस्मिन् सुखमिति वसन्तः। वसन्तः

पुष्पसमयः, तद्रूपत्वात् । 'कालाय नमः' इति श्रुतिः । सुरभये—सुष्ठु रमते तृप्तम् इति सुरभिः, घ्राणतर्पणो गन्धः, तद्रूपी । 'सर्वो वै रुद्रः' इति श्रुतिः । यद्वा—सुष्ठु रमते आरमते भक्तान् प्रति मङ्गलमिति । 'अन्नादो वसुदानः' इति श्रुतिः । जयारिमथनाय—जययुक्ता अरयः जयारयः त्रिपुरजलन्धरादयः, तान् मथ्नाति नाशयतीति जयारिमथनः, तस्मै जयारिमथनाय ।'जेतारमपराजितम्' इति श्रुतिः । प्रेम्णे—प्रेमा सर्वेषां प्रियत्वात्, भावभवित्रोरभेदविवक्षया प्रिय इत्यर्थः । 'सर्वस्मात् प्रियतम आनन्दघनः' इति श्रुतिः । पुरञ्जयाय पुरं त्रिपुरं जयतीति पुरञ्जयः । 'तेषामसुराणाम्' इत्यादिश्रुतिः । पृषदश्वाय—पृषदश्वो वायुः । पृषदाख्यो मृगोऽश्वो यस्य पृषदश्वः पृषन्ति अम्बुकणा त एवाश्वा यस्येति वा । श्रुतिरुक्ता ॥१७१॥

रोचिष्णवेऽसुरजिते श्वेतपीताय ते नमः ।
नमस्ते चञ्चरीकाय तमिस्रमथनाय च ॥१७२॥

रोचिष्णवे—प्रमाणं विना सदा प्रकाशनशीलो रोचिष्णुः । 'प्रकाशः प्रकाशेभ्यः' इति श्रुतिः । असुरजिते—शास्त्रीयप्रकाशनवृत्त्यभिभवनाय प्रवृत्ताः स्वाभाविक्यस्तमआत्मिका इन्द्रियवृत्तयोऽसुरा मताः, तान् जयतीति असुरजित्; 'नहि स्वात्मारामं विषयमृगतृष्णा भ्रमयति' इति न्यायोपबृंहितशिवरहस्यवचनोपबृंहणात् । 'अनिच्छोऽलेपोऽव्यग्रः' इति श्रुतिः । श्वेतपीताय—श्वेतः सर्वाङ्गे, ललाटे नेत्रे च पीतो यस्य स श्वेतपीतः ।

'गोक्षीरसदृशाकारः कुन्देन्दुसदृशः परः ।
संसारभयभीतानामेकेनैवाऽभयप्रदः ॥'

—इति । 'नमो नीलग्रीवाय शितिकण्ठाय नमो नमः कृष्णाय पिङ्गलाय नमः' इति श्रुतिः । **चञ्चरीकाय**—चञ्चरीको भृङ्गः । भृङ्गो यथा पुष्पास्वादनपरः, एवं परशिवोऽपि भक्त-भक्तिरसास्वादनपर इत्यर्थः । यद्वा—गौरीमुखाम्भोजाधररस-मधुपानलम्पट इत्यर्थः । 'यमेवैष वृणुते तेन लभ्यः' इति पक्षान्तरे च 'अम्बिकापतये' इति श्रुतिः । **तमिस्रमथनाय**—तमिस्रम-न्धकारः, तन्मथ्नातीति तमिस्रमथनः सूर्यः तद्रूपी । 'सूर्यायादि-त्याय' इति श्रुतिः । यद्वा—तमिस्रं तमः अज्ञानम् , तन्मथ्नाति वेदान्तमहावाक्यजन्यवृत्त्यारूढः सन् नाशयति इति तमिस्रमथनः । 'निचाय्य तन्मृत्युमुखात् प्रमुच्यते' इति श्रुतिः ॥१७२॥

**प्रमाथिने निदाघाय चित्रगर्भाय ते नमः ।**
**शिवालयाय स्तुत्याय तीर्थदेवाय ते नमः ॥१७३॥**

**प्रमाथिने**—भक्तजनविरोधिबलजातमविद्यां च प्रमथ्ना-तीति प्रमाथी । 'बलप्रमथनाय नमः' इति श्रुतिः । **निदाघाय**—नितरां दह्यतेऽनेनेति निदाघो ग्रीष्मः । निदाघवत् प्रलयकाले सर्व-प्राणिदाहकत्वात् निदाघः परमेश्वरः । 'तस्मा उपसंहर्त्रे महाग्रासा-य वै नमः' इति श्रुतिः । **चित्रगर्भाय**—चित्रा अनेकभेदभिन्ना आकाशादिरूपाः प्रपञ्चा गर्भे यस्य स चित्रगर्भः । 'एतस्माज्जायते प्राणः' इत्यादिश्रुतिः । **शिवालयाय**— । **स्तुत्याय**—स्तुत्यर्हः स्तुत्यः ।

'आदरेण यथा स्तौति धनवन्तं धनेच्छया ।
तथा चेद्विश्वकर्तारं को न मुच्येत बन्धनात् ॥'

—इति महाभारते । 'तमु ष्टुहि यः स्विषुः सुधन्वा यो विश्वस्य क्षयति भेषजस्य । यक्ष्वामहे सौमनसाय रुद्रं नमोभिर्देवमसुरं

दुवस्य ॥' इति श्रुतिः। तीर्थदेवाय—तरन्त्येभिः पापानीति तीर्थानि शास्त्र-पुण्योदक-क्षेत्रयात्रादीनि। 'तीर्थं मन्त्राद्युपाध्याय-शास्त्रेष्वम्भसि पावने। पात्रोपधावतारेषु............॥' इति वैजयन्ती; तेषु दीव्यति उपास्यतया द्योतत इति तीर्थदेवः। 'नमस्तीर्थ्याय च' इति श्रुतिः ॥१७३॥

**पत्तीनां पतये तुभ्यं विचित्रशक्तये नमः।**
**नमो निस्तुलरूपाय सवित्रे तपसे नमः ॥१७४॥**

**पत्तीनां पतये**—'एको रथो गजश्चैको नराः पञ्च पदातयः। त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते ॥' तासां पतिः स्वामी तद्रूपी। पादचारिणो योधाः पत्तिशब्दवाच्याः, तेषां पालको वा। 'पत्तीनां पतये नमः' इति श्रुतिः। **विचित्रशक्तये**—विचित्रा विविधा ब्रह्मादिस्थावरान्ताः कार्यानुमेयाः शक्तयो यस्य स तथा। 'परास्य शक्तिर्विविधैव श्रूयते' इति श्रुतिः। **निस्तुलरूपाय**—उपमारहितस्वरूपो निस्तुलरूपः, स्वस्य सच्चिदानन्दपरिपूर्णरूपत्वात्, अशनायापिपासादिरहितत्वाच्च। स्वान्यस्य बद्धजीवसमुदायस्य अशनायापिपासादिमत्त्वात्; मुक्तात्मनां तु स्वापेक्षया भेदाभावात्। अचेतनात्मकस्य गिरिनदीसमुद्रादेरनृतजडदुःखपरिच्छिन्नस्वरूपत्वात्। तस्मात् स्वसमानवस्त्वन्तराभावः, अत एव अधिकवस्त्वन्तराभावश्च। 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति श्रुतिः। **सवित्रे**—सवितृरूपेण जगदनुग्रहं कुर्वन् परमात्मा सवितेत्युच्यते। अथवा—सर्वजगतः सविता प्रजनयिता। 'सवितारं नृचक्षसम्' इति श्रुतिः। **तपसे**—अत्र तपःशब्देन परमेश्वरस्य जगत्सृष्टौ सहकारिकरणीभूता मायावृत्तिः सङ्कल्पात्मिका उच्यते। तया तद्वान् परमेश्वरो लक्ष्यते। तत्र श्रुतिः—'स तपोऽतप्यत,

स तपस्तप्त्वा इदं सर्वमसृजत' इति श्रुतिः। यद्वा—तपःशब्द-वाच्यचित्तैकाग्र्यपर्यालोचनप्राप्यत्वात् ब्रह्मणः ब्रह्म तपःशब्देन लक्ष्यते, 'तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्म' इति श्रुतेः। 'मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः' इति स्मरणात् ॥१७४॥

**अहङ्कारस्वरूपाय मेघाधिपतये नमः।**
**अपाराय तत्त्वविदे क्षयद्वीराय ते नमः ॥१७५॥**

अहङ्कारस्वरूपाय—अहङ्कारस्य अभिमानात्मकस्य प्रथमाध्यासभूतस्य स्वरूपं तस्याधिष्ठानत्वेन तत्सत्तास्फूर्तिप्रदत्वात्। यद्वा—अहङ्कारस्वरूप एव परमेश्वरः। ननु—अहङ्कारस्य अध्यस्तत्वात् कथमिदम्? इति चेत्, न; अहमश्चातुर्विध्यात्। तदुक्तं वासिष्ठे—

'आपादमस्तकमहं मातापितृविनिर्मितः।
इत्येको निश्चयो राम बन्धायाऽसद्विलोकनात् ॥
अतीतः सर्वभावोऽसौ वालाग्रादप्यहं तनुः।
इति द्वितीयो मोक्षाय निश्चयो जायते सताम् ॥
जगज्जालपदार्थात्मा सर्वमेवाहमक्षयः।
तृतीयो निश्चयश्चेत्थं मोक्षायैव रघूद्वह ॥
अहं जगद्वा सकलं शून्यं व्योमसमः सदा।
एवमेव चतुर्थोऽपि निश्चयो मोक्षसिद्धये ॥
एतेषां प्रथमः प्रोक्तस्तृष्णया बन्धयोग्यया।
शुद्धतृष्णास्त्रयः शुद्धा जीवन्मुक्तविलासिनः ॥
सर्वमात्माऽहमेवेति निश्चयो यो महामते।
तमादाय विषादाय न भूयो जायते मतिः ॥'

—इति। अयम्भावः—तत्र आपादमस्तकमहमेव इति

प्रथमः, सर्वातीतः परमसूक्ष्मोऽहमिति द्वितीयः, सर्वात्मकोऽहमिति तृतीयः, 'अहमिति जगदिति सकलं शून्यमेव, अतो व्योमवत् सर्वविकल्पातीतोऽहम्' इति चतुर्थोऽहङ्कारः। एतेषां मध्ये प्रथमो बन्धयोग्यः, तृष्णाप्रोतत्वात् बन्धायैव। अन्ये तु त्रिधाः शुद्धाः तृष्णावर्जितत्वात् जीवन्मुक्तेष्वेव विलसन्ति। उपादेयेष्वपि त्रिषु 'सर्वात्मकोऽहम्' इति निश्चयः श्रेयान् इत्याह—सर्वमहं चात्मैवेति यो निश्चय इत्यन्वयः। अत एवोक्तं सूतसंहितायां पञ्चमाध्याये ब्रह्मविष्ण्वादीन् प्रति ईश्वरेण—

'अहं हि सर्वं न च किञ्चिदन्यत्
निरूपणायामनिरूपणायाम्।
इयं हि देवस्य परा हि निष्ठा
ममाऽनुभूतिश्च न संशयश्च॥'
अहं सदाऽधश्च सदाऽहमूर्ध्वं
त्वहं पुरस्तादहमेव पश्चात्।
अहं हि सर्वेतरमास्तिकास्तथा
त्वहं सदैवोदितमान्तरं बहिः॥'—इति।

'अथातोऽहङ्कारादेश एवाहमेव' 'नान्यः कश्चिन्मत्तो व्यतिरिक्तः' इति श्रुतिः। मेघाधिपतये—मेघस्य वारिवाहस्य अधिपतिस्तत्र अन्तर्यामिरूपेण स्थित्वा वृष्टयर्थप्रेरकत्वात् मेघाधिपतिः। 'यामिषुं गिरिशन्त हस्ते' इति श्रुतिः। अस्यायमर्थः—गिरिः कैलासस्तत्र आविर्भूतः प्राणिनां शं तनोतीति गिरिशन्तः। यद्वा—गिरिर्मेघः तत्र स्थितः पर्जन्यरूपेण शं तनोतीति भट्टभास्करैः व्याख्यातम्। अपाराय—अवधिरहितोऽपारः। 'अनन्तमपारम्' इति श्रुतिः। तत्त्वविदे—तत्त्वं सर्वजगत्स्वरूपं सामान्यतो विशेषतश्च वेत्तीति तत्त्ववित्। 'यः सर्वज्ञः सर्ववित्' इति

श्रुतिः । क्षयद्वीराय—क्षयन्ति निवसन्ति वीरा विक्रान्ता वीरभद्रादयो यमाश्रित्य स क्षयद्वीरः । यं प्राप्य वीराः संक्षयन्ति विनश्यन्ति इति वा । 'इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय' इति श्रुतिः ॥१७५॥

## पञ्चास्यायाऽग्रगण्याय विष्णुप्राणेश्वराय च ॥१७६॥

पञ्चास्याय—पञ्च आस्यानि मुखानि यस्य स तथा । पञ्चवक्त्रत्वं सदाशिवरूपस्य परमेश्वरस्य पुराणागमादिषु प्रसिद्धम् । 'ईशानः सर्व०......ब्रह्माशिवो मे अस्तु सदाशिवोम्' इति श्रुतिः । अग्रगण्याय—अग्रे गण्यते इति अग्रगण्यः सर्वेश्वरत्वसर्वज्ञत्वादौ । 'तमीश्वराणां परमं महेश्वरम्' इत्यादिश्रुतिः । विष्णुप्राणेश्वराय—विष्णोः प्राणा विष्णुप्राणाः । उपलक्षणमेतत् इन्द्रादिप्राणान्तानाम् । तेषाम् ईश्वरः रक्षकः । तदुक्तं स्कान्दे कमलालयमाहात्म्ये—

'ततः कदाचिद् बलिनः कालेय इति विश्रुताः ।
दानवा अपि देवानां पीडां चक्रुः समन्ततः ॥

—इति प्रस्तुत्य,

पराजितान् सुरान् दृष्ट्वा दानवैर्मधुसूदनः ।
आरुह्य गरुडं तूर्णं कालप्रभमुपाद्रवत् ॥
ततः सुदर्शनं चक्रं दैत्याय मुरशासनः ।
मुमोच सहसा क्रुद्धो ज्वालामालासमावृतम् ॥
सोऽपि तच्चक्रमाहृत्य वासुदेवकरेरितम् ।
अब्रवीच्च महादैत्यस्तिष्ठ तिष्ठेति चाऽब्रवीत् ॥
ततो विष्णुं समुद्दिश्य सायकान् ज्वलनोपमान् ।
मुमोच दैत्यस्तद्विद्धो निश्चेष्टोऽभवदच्युतः ॥

एतस्मिन्नन्तरे स्थित्वा भगवांस्त्रिपुरान्तकः ।
दृष्ट्वा हरिं तथाभूतं चक्रं चाऽपि पराङ्मुखम् ॥
सद्यः शूलप्रहारेण तं निहत्य दनोः सुतम् ।
शरैः पिनाकनिर्मुक्तैः जघानोच्चैस्तथाऽपरान् ॥
ततो हतप्रधानास्ते दानवा भयविह्वलाः ।
पलायनपरा जाता निरुत्साहा द्रिपन्ति ते ॥
ततो विष्णुश्च शक्रश्च लब्धसंज्ञौ धृतायुधौ ।
प्रणम्य तु महादेवं किञ्चिद् व्रीडासमन्वितौ ॥'—इति ।

'प्राणेश्वरः 'कृत्तिवासाः पिनाकी' इति श्रुतिः ॥१७६॥

**अगोचराय याम्याय क्षेम्याय वडवाग्नये ।**
**विक्रमाय स्वतन्त्राय स्वतन्त्रगतये नमः ॥१७७॥**

**अगोचराय**—इन्द्रियाविषयत्वाद् अगोचरः । 'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैः' इति श्रुतिः । **याम्याय**—यमलोकप्राप्तानां शिक्षकरूपेण भवो याम्यः । **क्षेम्याय**—क्षेमं मोक्षमर्हतीति क्षेम्यः । 'नमो याम्याय च क्षेम्याय च' इति श्रुतिः । **वडवाग्नये**—वडवाया अग्निरनलः, तद्रूपी पावका-येत्यर्थः । पावकवर्णाय' इति श्रुतिः । **विक्रमाय**—सर्वान् लोकान् विशेषेण क्रमते अतिक्रमते इति विक्रमः । अथवा विशेषः क्रमः शौर्यम् , तदस्यास्तीति विक्रमः, मत्वर्थीमाच्-प्रत्ययान्तः । 'अभि त्वा शूर नो नुमो दुग्धा इव धेनवः' इति 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' इति च श्रुतिः । **स्वतन्त्राय**—सृष्टिस्थितिसंहारेष्वन्यानपेक्षः । **स्वतन्त्रगतये**—स्वतन्त्राः स्वेच्छानुरूपा गतिर्विषयेषु गमनव्यापारो यस्य स स्वतन्त्रगतिः । मार्कण्डेयस्य षोडशसंवत्सरपर्यन्तं आयुर्दत्वा

पुनरनेककल्पपरिमितमायुर्दत्तम् , ततः ऋषिपत्नीमोहनम् , ब्रह्म-पञ्चमशिरश्छेदनम् , सर्वेषां देवादीनां महायागे हवनम्—इत्येवमादि पुराणप्रसिद्धम् । 'शाश्वतोऽजोऽनन्यः स्वतन्त्रः' इत्युभयत्र श्रुतिः* ॥१७७॥

**अनावृताय मुक्ताय मातृकापतये नमः ।**
**नमस्ते बीजकोशाय दिव्यानन्दाय मुक्तये॥१७८॥**

अनावृताय—अविद्यादिभिरावृतो न भवतीत्यनावृतः । 'निरस्ताविद्यातमोमोहः' इति श्रुतिः । मुक्ताय—मुक्तः पारवश्य-रहितः । तथा चोक्तम्—

'नित्यशुद्धाय बुद्धाय मुक्ताय सत्त्वरूपिणे ।'—इति ।

'नित्यशुद्धो बुद्धो मुक्तः' इति श्रुतिः । मातृकापतये—मातृकाणां ब्राह्म्यादीनां पतिः स्वामी ।

'ब्राह्मी मां चतुराननाऽवतु सदा माहेश्वरी शूलिनी
कौमारी वरशक्तिषण्मुखवती श्रीवैष्णवी चक्रिणी ।

---

* अगोचराय क्षेम्याय याम्याय वडवाग्नये ।
विक्रमाय स्वतन्त्राय नमस्ते जमदग्नये ॥१७७॥

इति पाठे 'जमदग्नये' इति नामपदस्य व्याख्येत्थं कृता व्याख्याकृद्भिः—

जमदग्नये—जमदिति ज्वलनो नाम जमदग्निः, तत्सदृशो ऋषिरपि जमदग्निः । 'वसिष्ठः कश्यपो ह्यत्रिर्जमदग्निश्च गौतमः । विश्वामित्रो भरद्वाजः सप्तैते ऋषयोऽभवन् ॥' इति । किं च निखिलक्षत्रवरोपसंहारपरो नारायणावताररूपः परशुरामो यस्य कुमारः । यस्य च जमदग्निः पुष्टिकामश्चतुरात्रेण यः विश्वामित्रजमदग्नी वसिष्ठेनास्पर्द्धतां स एत-ज्जमदग्निर्हव्यमपश्यत्' इति श्रुतिप्रसिद्धः । एवंभूतः परम ऋषिः जमदग्निः, तद्रूपी । 'विश्वाधिकोरुद्रोमहर्षिः' इति श्रुतेः। यद्वा—जमदग्निः ज्वलदग्निः । कालाग्निरुद्रः । 'काला-ग्निरुद्रं दूरस्थं ज्वलद्दावाग्निसन्निभम्' इति पाद्मे । यद्वा—सर्वतः पाणिपादाब्जं विश्व-तोऽक्षिशिरोमुखम् । ज्वलन्तं विश्वमावृत्य तेजोराशिं शिवं स्मरेद् ॥' इति रहस्यम् । 'तेजोदास्त्वमस्यग्नेर्वर्चोदास्त्वमसि सूर्यस्य द्युम्नोदास्त्वमसि चन्द्रमसः' इति श्रुतिः ।

वाराही हलशूलपाशमुसलं वज्रायुधैन्द्री तत-
श्चामुण्डा गजचक्रशस्त्रसहितास्ताः पान्तु मां मातरः'–इति।

एता परमेश्वरपरिवारत्वेन प्रसिद्धा ब्रह्माण्डपुराणे। 'सर्वान् लोकानीशत ईशनीभिः' इति श्रुतिः। यद्वा—मातृकादीनामकारादीनां वर्णानां पञ्चाशत्संख्याकानां पतिः वाच्यः श्रीकण्ठादिरूपेण शिवः। पूर्णोदयादिरूपेण शक्तिरपि वाच्या। मातृकायाः सूक्ष्मभूतपरापश्यन्त्यात्मना निष्कलः परशिवोऽपि मातृकापतिः। तदुक्तं सूतसंहितायां यज्ञवैभवखण्डे चतुर्थाध्याये—

'यथा परतरः शम्भुर्द्विधा शक्तिशिवात्मना।
तथैव मातृका देवी द्विधाभूता भवेत्स्वयम्॥
एकाकारेण शक्तेस्तु वाचकश्चेतरेण तु।
शिवस्य वाचकः साक्षाद्द्विधेयं पदगामिनी॥
अपदं पदमापन्नं पदं चाप्यपदं भवेत्।
पदापदविभागं च यः पश्यति स पश्यति॥'

—इति। अस्य व्याख्या तात्पर्यदीपिका लिख्यते—'ननु अकाराद्यात्मिकाया मातृकाया एकरूपाया एव कथं श्रीकण्ठादिशिवमूर्तिप्रतिपादकत्वं पूर्णोदयादिशिवशक्तिमूर्तिप्रतिपादकत्वं च तत्राऽऽह—यथा परतर इति। उक्तात् परादपि परो निष्कलः यः स परतरः। स यथा स्वप्रतिष्ठेन रूपेण निष्कलः शिवः। कार्याभिमुखेन तु शक्यप्रतियोगिनिरूप्येण रूपेण शक्तिरिति द्विरूपो जातः। एवमियमक्षरात्मिका मातृकाऽपि स्वकारणतया स्वानुगतशिवप्राधान्येन शिवमूर्तीनां तथाविधशक्तिप्राधान्येन च शक्तिमूर्तीनामपि प्रतिपादिका किं न स्यादित्यर्थः॥

ननु सा मातृका वाङ्मनसातीतं शिवशक्त्यात्मकं परमशिवस्वरूपं कथं प्रतिपादयेत्, इत्यत आह—अपदं पदमापन्न-

मिति। पद्यते प्राप्यते इति पदमिन्द्रियगोचरं वस्तु। अपदम-विषयं वाङ्मनसातीतं सच्चिदानन्दाखण्डैकरसं प्रागुदीरितं परशिवस्वरूपम्, 'अपदस्य पदैषिणः, अपि तर्हि पद्यते' इति श्रुतेः। तदेव स्वशक्तिमहिम्ना प्रागुक्तरीत्या परबिन्दुनादादि-क्रमेण परा पश्यन्ती मध्यमा वैखरीत्येवमात्मकं पदं जातम्। पद्यते प्राप्यतेऽनेन परं तत्त्वमिति परमन्त्रात्मिका मातृकाविद्या परापश्यन्त्याद्यात्मिका सा मातृका परशिवस्वरूपं विदुषः पुरुषस्यापदं भवेत्। अपदस्य अपदनीयस्य वाङ्मनसागोचरस्य प्रागुक्तपरशिवस्वरूपस्य दात्री प्रतिपादयित्री भवतीत्यर्थः। अविषयमपि तत्स्वरूपमविद्योपाधिं विषयीकृत्य प्रकाशयन्ती मातृकाविद्या स्वविषयावरणभूतामविद्यां समूलमुन्मूलयन्ती यथो-दीरितपरशिवस्वरूपं विदुषः स्वात्मतया प्रापयतीत्यर्थः। यद्वा— अपदं पदमिति, नादात्मकं शब्दब्रह्म परा पश्यन्ती मध्यमा वैखरीत्येवं रूपं सत्पदं जातम्। अस्ति हि परापश्यन्त्याद्यव-स्थस्यापि पदाभिधेयता। श्रूयते हि 'चत्वारि वाक्परिमिता पदानि' इति। तत्पदं सम्यग्ज्ञातं सन्मूलभूतं शब्दब्रह्म स्वकारणत्वेनावगमयत्तत्प्राप्तिहेतुर्भवतीत्यर्थः। इत्थमुक्तं पदापद-विभागं यो जानाति स एव परशिवस्वरूपं साक्षात्करोति इति।

तत्रैवान्यत्र—

'मातृकाधारभूताय मातृकामूलरूपिणे।
महामन्त्रैकवाच्याय महसे ब्रह्मणे नमः॥'

—इति। अस्यायमर्थः— 'मातृकाधारेति। परशिवविवर्त-रूपत्वात् मातृकायास्तां प्रति तस्य शिवस्याऽऽधारत्वम्। मातृका-मूलेति। मातृकाया मूलं शब्दब्रह्म तदुपादानतया तद्रूपिणे। महामन्त्रेति। मातृकामन्त्राः प्रणवहृल्लेखाष्टाक्षरादयो महामन्त्रास्तेषां

पृथक्-पृथक् वाच्यास्तत्तद्देवतामूर्तयः, तद्द्वारा चिदानन्दैकरसः शिवः एक एव तात्पर्येण प्रतिपाद्यः' इति तात्पर्यदीपिकायाम् । 'त्वं त्वौपनिषदं पुरुषम्' इति 'आत्मतो वागात्मतो नाम' इति श्रुतिः । बीजकोशाय—बीजानां जगत्कारणानां ब्रह्मविष्णुरुद्राणां कोश आधारभूतः, तत्कारणत्वात् । 'ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते' इत्यादिश्रुतिः । यद्वा—बीजमव्याकृताकाशमावरणभूतं यस्य स तथा । यथा खड्गादेर्दारुचर्मादिनिर्मितकोशे विद्यमानस्य तल्लेपराहित्यम्, एवं प्रपञ्चकारणाव्याकृताकाशादिशब्दवाच्ये तत्सत्तास्फूर्तिप्रदत्वेन तदधिष्ठानत्वेन विद्यमानत्वेऽपि तेन साकं वास्तवसम्बन्धरहितः ।

'सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ।
न विद्या··· हि नो माया शान्तं ब्रह्मेदमक्रमम् ॥'

—इति वासिष्ठे । 'नेह नानास्ति किञ्चन । तदेतद्ब्रह्मापूर्वमनपरम्' इति श्रुतिः । दिव्यानन्दाय—दिव्यः विषयसम्बन्धरहितः स्वयंप्रकाशमानो वा आनन्दः स्वरूपत्वेन यस्य स दिव्यानन्दः । 'विज्ञानमानन्दं ब्रह्म' इति श्रुतिः ॥

मुक्तये— ॥१७८॥

**नमस्ते विश्वदेवाय शान्तरागाय ते नमः ।**
**विलोचनसुदेवाय हेमगर्भाय ते नमः ॥१७९॥**

विश्वदेवाय—विश्वस्य सर्वस्य देवोऽधिपतिः प्रकाशो वा । 'एष सर्वेश्वरः', 'सर्वस्य साक्षी' इति च श्रुतिः ।

शान्तरागाय—शान्त उपरतः राग इच्छा यस्य स तथा । ज्ञानं विरागतेति, 'ज्ञानवैराग्ययोश्च' इति परमेश्वरधर्मे पठित-

तत्वात् । 'अनिच्छोऽलेपोऽव्यग्रः' इति श्रुतिः ॥ **विलोचनसुदेवाय**—लोकापेक्षया विशेषयुक्तानि त्रीणि पञ्चदशसंख्यकानि वा लोचनानि यस्य स विलोचनः । शोभनो देवः सुदेवः । पारमैश्वर्यादिसंपन्न उमास्कन्दादियुक्तश्च । विलोचनश्चासौ सुदेवः । 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्' इति श्रुतिः ॥

**हेमगर्भाय**—हेम गर्भो यस्य स हेमगर्भः । हिरण्यरेतस्त्वाद्धेमगर्भत्वम् । हिरण्यरेतस्त्वं च स्कान्दे प्रसिद्धम् । 'नमो हिरण्यबाहवे हिरण्यपतये च' इति श्रुतिः ॥१७९॥

## अनाद्यन्ताय चण्डाय मनोनाथाय ते नमः ॥
## ज्ञानस्कन्दाय तुष्टाय कपिलाय महर्षये ॥१८०॥

**अनाद्यन्ताय**—न विद्येते आद्यन्तौ यस्य सोऽनाद्यन्तः, उत्पत्तिनाशरहित इत्यर्थः । 'अनाद्यनन्तं महतः परं ध्रुवम्' इति श्रुतिः । **चण्डाय मनोनाथाय**—सविशेषणमेकं नाम । चण्डः क्रोधयुक्तः, नाथः शासकः । उग्रशासन इति यावत् । 'भीषास्माद्वातः पवते' इत्यादिश्रुतिः । **ज्ञानस्कन्दाय**—भक्तेभ्यो ज्ञानामृतरूपेण स्कन्दति स्रवतीति स्कन्दः । भक्तानां ज्ञानोपदेष्टा इति यावत् । 'ईशानः सर्वविद्यानाम्' इति श्रुतिः । **तुष्टाय**—परमानन्दैकरूपत्वात्तुष्टः । 'विज्ञानमानन्दं ब्रह्म' इति श्रुतिः । **कपिलाय महर्षये**—एतत्पदद्वयं विशिष्टमेकं नाम । महांश्चासावृषिश्च महर्षिः । योगबलात् सर्वज्ञः कपिलो नामतः कपिलनामको महर्षिः । सांख्यशास्त्रप्रवर्तकः । सगरपुत्राणां प्रतप्ता वासुदेवावतार इति च पुराणेषु प्रसिद्धः । तद्रूपी । 'ऋषिं

प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत्' इति श्रुतिः । 'विश्वाधिको रुद्रो महर्षिः' इति श्रुतिः ॥१८०॥

नमस्त्रिकाग्निकालाय देवसिंहाय ते नमः ।
नमस्ते मणिपूराय चतुर्वेदाय ते नमः ॥१८१॥

त्रिकाग्निकालाय—त्रित्वविशिष्टोऽग्निस्त्रिकाग्निः । गार्हपत्यो दक्षिणाग्निराहवनीयश्चेति प्रसिद्धः । जारोऽग्निर्भूताग्निर्देवाग्निनिरिति । 'अयमग्निर्वैश्वानरो योऽयमन्तःपुरुषे येनेदमन्नं पच्यते यदिमद्यते' इति 'विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतु मह्न कृण्वन्' इति, 'वैश्वानरस्य सुमतौ स्याम राजाहिकं भुवनानामभिश्रीः' इति श्रुतिः । प्रसिद्धा वा अग्नयः तद्रूपश्चासौ कालश्च त्रिकाग्निकालः । 'पावकाय पावकरूपिणे' इति च श्रुतिः । देवसिंहाय—दीव्यतीति देवः स्वयंप्रकाशः, सिंहः पिङ्बन्धन इति धातो रूपं सिः इति कार्यकारणसम्बन्धः सर्वदृश्यसम्बन्धो वा, तं सम्बन्धं तत्त्वमस्यादिवाक्यवृत्त्यारूढः सन् असौ परमेश्वरो हन्ति नाशयतीति सिंह इत्युच्यते । ह इति 'हन्' हिंसागत्योरित्येतस्य रूपम् । अत्र सिंहः पृषोदरादित्वात् साधुः । देवश्चासौ सिंहश्च देवसिंहः । 'चक्षुः श्रोत्रं क उ देवो युनक्ति', 'सिंहोऽसौ परमेश्वरः' इति श्रुतिः । यद्वा—पुरुषसिंह इतिवत् देवसिंहः देवश्रेष्ठः । 'तं देवानां परमं च दैवतम्' इति श्रुतिः । मणिपूराय—मणिपूराख्यषट्चक्रमध्ये नाभिस्थानीयः दशदलात्मकश्चक्रविशेषः । अकारात्मकब्रह्मस्वरूपेण विद्यमानस्य परमेश्वरस्याभिव्यक्तिस्थानविशेषः । अत्र मणिपूरशब्दो मत्वर्थीयाच्प्रत्ययान्तः । स्कान्दे—

'अन्ये च योगिनो विप्रा आमनन्ति शिवस्य तु ।

'आधारेषु शरीरेऽस्मिन् लिङ्गानि परमात्मनः ।
अधोमुखमनाद्यन्तमपिण्डं पिण्डसंज्ञितम् ॥
ज्वलत्कालानलप्रख्यं स्वयंभु ब्रह्मसंज्ञितम् ।
मध्यमस्थं महामन्त्रैरर्चनीयं तु योगिभिः ॥
गुरूपदेशतो ज्ञेयं लिङ्गमेकं प्रकीर्तितम् ।'—इति ।

अस्य तात्पर्यदीपिका लिख्यते । विश्वप्रकाशकत्वेन विश्वाधिष्ठानत्वेन वा परशिव एव मुख्यं लिङ्गमित्युक्तम् । तस्य परशिवस्योपासनार्थमौपाधिकानि रूपाणि श्रुत्यनुसारादागमानुसाराद् वा लिङ्गतया व्यवहरतां मतमाह—अन्ये चेति । मूलाधारो मणिपूरकः अनाहत आज्ञा द्वादशान्तः षोडशान्तश्चेत्यस्मिन् शरीरे षडाधाराः शिवस्योपासनास्थानानि । अष्टवितस्तिपरमितस्य शरीरस्य वितस्तिचतुष्टयानन्तरं मूलाधारस्तत्र गुणसामान्योपाधिकं परतत्त्वं लिङ्गमुपासनीयम् । नाभौ मणिपूरकः तत्र तदेव परतत्त्वं जगत्सर्गव्यापारं ब्रह्मसंज्ञितं लिङ्गमुपासनीयम् । हृदयेऽनाहतं तत्र सत्त्वगुणोपाधिकं तदेव तत्त्वं जगत्पालनव्यापारं विष्णुसंज्ञितम् । भ्रूमध्ये आज्ञा तत्र तमोगुणोपाधिकं तदेव तत्त्वं संहारव्यापारं रुद्रसंज्ञितम् । ब्रह्मरन्ध्रे द्वादशान्ते तदेव तत्त्वं साक्षिरूपम् । ततः परश्चाच्चतुरङ्गुलानन्तरं षोडशान्तं तदेव तत्त्वं स्वप्रतिष्ठितं लिङ्गरूपमुपासनीयमिति । उक्तम् उत्तरतापनीयोपनिषदि 'मूलाग्रावग्निरूपं प्रणवं संदध्यात्' इत्यादि 'लिङ्गरूपानेव च संपूज्य'इत्यन्तम् । अतस्तामुपनिषदमनुसरन्तः तच्छायानुसारिण आगमाननुसरन्तश्च योगिनोऽस्मिन् शरीरे उक्तेष्वाधारेषु यथोदीरितलिङ्गानि आमनन्तीत्यर्थः । मणिपूरक उपासनीयस्य ब्रह्मलिङ्गस्य स्वरूपमाह—अधोमुखमिति । यदनाद्यन्तं स्वयंभु स्वप्रतिष्ठमपिण्डमशरीरं

ब्रह्मसंज्ञितं परं तत्त्वं तदेव पिण्डसंज्ञितम् । पिण्डेन स्थूलशरीरेण समष्टिरूपेण उपाधिना सम्बन्धात् प्राप्तप्राजापत्यादिनामकम् । संज्ञा जाता अस्येति संज्ञितम् । तारकादित्वादितच् । अतएवो-पाधिसम्बन्धात् ज्वलत्कालानलप्रख्यं सुवर्णवर्णमधोमुखं स्रष्ट-व्यजगल्लक्षणकार्याभिमुखं कारणकार्ययोरूर्ध्वाधश्शब्दौ प्रसिद्धौ गीतासु—ऊर्ध्वमूलमधश्शाखमिति । मध्यमस्थमुदरमध्ये हि नाभि-स्थाने स्थितं मणिपूरकं चक्रं मध्यमं तत्र स्थितमित्यर्थः । महामन्त्रैः । प्रणवप्रथमावयवभूतोऽकार एको महामन्त्रः । सह्येकाक्षरमात्रत्वेन परिमाणतोऽल्पोऽपि परापरपुरुषार्थप्राप्तिसाधनत्वेन फलतो महत्त्वान्महामन्त्रः । श्रूयते ह्यकारस्य महाफलत्वं 'जागरितस्थानो वैश्वनरोऽकारः प्रथमा मात्रा । आप्तेरादिमत्त्वाद् वाऽऽप्नोति ह वै सर्वान् कामान् आदिश्च भवति य एवं वेद' इति । प्रणवसमाना-र्थस्य हृल्लेखावयवस्य प्रथमावयवो हकारोऽप्यकारसमानरीत्या द्वितीयो महामन्त्रः । अपरे बहवो मन्त्राः उत्तरतापनीयोपनि-षद्भाष्ये प्रपञ्चिताः । अकारादिमन्त्राणां ब्रह्मात्मकता च श्रुत्यै-वोक्ता –'अकारं ब्रह्माणं नाभौ । उकारं विष्णुं हृदये । मकारं रुद्रं भ्रूमध्ये । सप्तात्मानं चतुरात्मानं चतुःसप्तात्मानं चतुरात्मानमोङ्कारं सर्वेश्वरं द्वादशान्ते' इति । बाह्योपकरणनिरपेक्षमनोमात्रसाधन उक्तलिङ्गार्चने योगिनामेवाधिकार इत्याशयेनोक्तम्—योगिभि-रिति । ब्रह्मलिङ्गस्य सरस्वतीशक्तिसाहित्यं परिवारान्महान्त्रांश्च सांप्रदायिकानभिसंधायोक्तम्—गुरूपदेशत इति ॥

चतुर्वेदाय—चत्वारो वेदा निष्पन्नतया आवेदकतया च यस्य स चतुर्वेदः 'अस्य महतो भूतस्य निःश्वसितमेवैतद् यदृग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः' इति । 'वेदैरनेकैरहमेव वेद्यः' इति च श्रुतिः ॥१८१॥

स्वरूपाणां स्वभावाय ह्यन्तर्यागाय ते नमः ॥
नमः श्लोकाय वन्याय महाधर्माय ते नमः ॥१८२॥

स्वरूपाणां स्वभावाय-स्वयं स्वीयं रूपं सच्चिदानन्दात्मकं येषां पदार्थानामाकाशादीनां ते स्वरूपाः। 'अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्। आद्यं त्रयं ब्रह्मरूपं जगद्रूपं तयोर्द्वयम्' इत्यभियुक्तोक्तेः। 'सद्धीदं सर्वं सदसदिति चिद्धीदं सर्वं काशते काशते चेति' इति श्रुतेश्च। तेषां स्वभावो वास्तवरूपम्। ननु आकाशादिस्वरूपायेत्येवालं स्वभावायेत्यधिकम्, न; विवर्तवादप्रक्रिया द्वारा सर्वस्याऽपि प्रपञ्चस्य मिथ्यात्वप्रतिपादनेन परशिवस्वरूपमेव वर्तते। तद्व्यतिरिक्तं कालत्रयेऽपि नास्तीति वक्तुमिति ब्रूमः। तथाहि आकाशादिस्वरूप इत्युक्ते यथा दधितक्रघृतादीनां क्षीरस्वरूपत्वेऽपि यथा आकारतो वर्णतो रसतो भेदः, एव सच्चिदानन्दरूपत्वेऽपि प्रपञ्चस्यात्मापेक्षया भेदोऽपि स्यात्तन्निवृत्त्यर्थम्। स्वरूपाणां स्वभाव इति। यथा स्वप्नदृगपेक्षया स्वाप्निकपदार्थस्य भेदेन प्रतीयमानत्वेऽपि तदपेक्षया अभावः, प्रबोधे सर्वस्याऽपि स्वात्ममात्रत्वात्। एवमज्ञानदशायामेव भेदेनावभासनं तथा च सर्वथा परशिवस्वरूपमात्रत्वमेव पदार्थानाम्, अत एव श्रुतिः—'प्रपञ्चोपशमः शिवोऽद्वैतः' इति 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्' इति च। अन्तर्यागाय—युज्यत इति यागः। अन्तश्शरीरान्तर्हृदयपुण्डरीकादिषूपास्यत इत्यन्तर्यागः। 'अथ य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः'-इति बृहदारण्यके। 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद् विजिज्ञासितव्यम्' इति छान्दोग्ये। 'यो देवानां प्रथमं पुरस्तात् विश्वाधिको रुद्रो महर्षिः' इति प्रस्तुत्य,

'दहरं विपाप्मं वरवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् । तत्रापि दहरं गगनं विशोकः तस्मिन् यदन्तस्तदुपासितव्यम्' इति चोक्त्वा 'यः परः स महेश्वरः' इति महानारायणे 'हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकम् । अचिन्त्यमव्यक्तमनन्तरूपं शिवम्' इति प्रस्तुत्य 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् । ध्यात्वा मुनिर्गच्छति भूतयोनिम्' इति कैवल्ये । भारतशिवरहस्यस्मृतिपुराणागमेषु परशिवस्य हृदयपुण्डरीकोपास्यत्वं बहुधा प्रपञ्चितं द्रष्टव्यम् ।

श्लोकाय — अक्षरसंघातः श्लोकः । तत्र भवः श्लोक्यः । वैदिकमन्त्रो वा श्लोकः । 'तदप्येष श्लोको भवति', 'अत्रैते श्लोका भवन्ति' इति च श्रुतेः । 'नमः श्लोक्याय च, इति श्रुतिः ॥ वन्याय— वने अरण्ये भवो वन्यः । 'नमो वन्याय च कक्षाय च' इति श्रुतिः ॥ महाधर्माय—महान् परिपूर्णो धर्मः सर्वप्रपञ्चधारकः महांश्चासौ धर्मश्च महाधर्मः । ननु महानित्येवालम्, धर्म इत्यधिकम् । यद्वा— धर्म इत्येव महानिति मास्तु ; उच्यते—महानित्युक्ते सांख्याद्यभिमत आत्माऽपि महान् स्यात् , अतो धर्म इति, धर्म इत्येवोक्ते सर्वप्रपञ्चाधारभूतवाय्वादिरपि धर्मः स्यात् , अतो महाधर्म इति । अनेनाध्यस्तसर्वप्रपञ्चाधिष्ठानभूतः कालतो देशतो वस्तुतः परिच्छेदरहितः सर्वप्रत्यगात्मा परशिव उक्तो भवति । 'सर्वव्यापी सर्वभूतान्तरात्मा' इति श्रुतिः ॥

**प्रसन्नाय नमस्तुभ्यं सर्वात्मज्योतिषे नमः ।**
**स्वयंभुवेऽध्वातीताय यक्षराक्षसमन्महे ॥१८३॥**

प्रसन्नाय—कामक्रोधरहितः भक्तानुग्रहार्थं मङ्गलस्वरूप इति यावत् । 'या ते रुद्र शिवा तनूः' इति श्रुतिः । सर्वात्म-

ज्योतिषे—सर्वेषां चेतनानामचेतनानां चात्मस्वरूपभूतः सर्वात्मा। सर्वात्मा चासौ ज्योतिः स्वयंप्रकाशश्च सर्वात्मज्योतिः। सर्वभूतान्तरात्मा 'कर्माध्यक्षः सर्वभूताधिवासः साक्षी' इति श्रुतिः। स्वयंभुवे—त्रिमूर्तीनां ब्रह्मविष्णुरुद्राणां स्वयमात्मा भवतीति स्वयंभूः। उपलक्षणमेतत् सर्वेषां चेतनाऽचेतनस्वरूपाणामात्मत्वात्। 'सर्वो वै रुद्रस्तस्मै रुद्राय नमो अस्तु। पुरुषो वै रुद्रस्तन्महो नमो नमः। विश्वं भूतं भव्यं भुवनं चित्रं बहुधा जातं जायमानं च यत्। सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु' इति, 'एको रुद्रो न द्वितीयाय तस्थौ।' इति च श्रुतिः। कुलेशाय—। अध्वातीताय—अध्वभ्यः कलादिनामकेभ्योऽतीतोऽध्वातीतः। उक्तं च वायवीयसंहितायाम्—अध्वस्वरूपम्—

'कला तत्त्वं च भुवनं वर्णः पदमतः परम्। मन्त्रश्चेति समासेन षडध्वा परिपठ्यते॥'[2] इति, अध्वातीतत्वं च परशिवस्य तत्रैवोपरिभागे सप्तविंशाध्याये प्रपञ्चितम्। तत्र हि विधातृविष्ण्वोः कलहनिवृत्त्यर्थं ज्वालामयमहालिङ्गरूपेणाविर्भूते परशिवे ताभ्यामविज्ञाते तयोः सन्निधौ तस्मिन् लिङ्गे—

'अथाविरभवत्तत्र सनादं शब्दलक्षणम्।
ओमित्येकाक्षरं ब्रह्म ब्रह्मणः प्रतिपादकम्॥
तदप्यविदितं तावद् ब्रह्मणा विष्णुना तथा।
रजसा तमसा चित्तं तयोर्यस्मात्तिरस्कृतम्॥
तदा विभक्तमभवच्चतुर्धैकं तदक्षरम्।
अ उ मेति त्रिमात्राभिः परस्ताच्चार्धमात्रया॥
तत्राकारः श्रितो भागे ज्वलल्लिङ्गस्य दक्षिणे।
उकारश्चोत्तरे तद्वन्मकारस्तस्य मध्यतः॥

अर्धमात्रात्मको नादः श्रूयते लिङ्गमूर्धनि ।
विभक्तेऽपि तदा तस्मिन् प्रणवे परमाक्षरे ॥
विभागार्थं च तौ देवौ न किंचिदवजग्मतुः ।
वेदात्मना तदा व्यक्तः प्रणवो विकृतिं गतः ॥
तत्राकारो ऋगभवदुकारो यजुरव्ययः ।
मकारः साम संजातो नादस्त्वाथर्वणी श्रुतिः ॥
ऋगयं स्थापयामास समासात् स्वर्धमात्मनः।
रजोगुणेषु ब्रह्माणं मूर्तिष्वाद्यं क्रियास्वपि ॥
सृष्टिं लोकेषु पृथिवीं तत्त्वे स्वात्मानमव्ययम् ।
कलाध्वनि निवृत्तिं च सद्यं ब्रह्मसु पञ्चसु ॥
लिङ्गभागेष्वधोभागं बीजाख्यं कारणत्रये ।
चतुष्षष्टिगुणैश्वर्यं बौद्धं यदणिमादिषु ॥
तदित्थमर्थैर्दशभिर्व्याप्तं विश्वमृचा जगत् ।
अथोपस्थापयामास स्वार्थं दशविधं यजुः ॥
सत्त्वं गुणेषु विष्णुं च मूर्तिष्वाद्यं क्रियास्वपि ।
स्थितिं लोकेष्वन्तरिक्षं विद्यां तत्त्वेषु च त्रिषु ॥
कलाध्वसु प्रतिष्ठां च वामं ब्रह्मसु पञ्चसु ।
मध्यन्तु लिङ्गभागेषु योनिं च त्रिषु हेतुषु ॥
प्राकृतं च यथैश्वर्यं तस्माद् विश्वं यजुर्मयम् ।
तथोपस्थापयामास सामार्थं दशधात्मनः ॥
तमोगुणेष्वथो रुद्रं मूर्तिष्वाद्यं क्रियासु च ।
संहृतिं त्रिषु लोकेषु तत्त्वेषु शिवमुत्तमम् ॥
विद्याकलास्वघोरं च तथा ब्रह्मसु पञ्चसु ।
लिङ्गभागेषु च पीठोऽर्धं बीजिनं कारणत्रये ॥

पौरुषं च तथैश्वर्यमित्थं साम्ना ततं जगत् ।
अथाथर्वाह नैर्गुण्यमर्थं प्रथममात्मनः ॥
ततो महेश्वरं साक्षान्मूर्तिष्वपि सदाशिवम् ।
क्रियासु निष्क्रियस्यापि शिवस्य परमात्मनः ॥
भूतानुग्रहणं चैव मुच्यन्ते येन जन्तवः ।
लोकेष्वपि यतो वाचो निवृत्ता मनसा सह ॥
तदूर्ध्वमुन्मना लोकात् सोमलोकमलौकिकम् ।
सोमः सहोमया यत्र नित्यं निवसतीश्वरः
तदूर्ध्वमुन्मना लोकाद् यं प्राप्तो न निवर्तते ।
शान्तिश्च शान्त्यतीतां च व्यापिकां वै कलास्वपि ॥
तत्पूरुषं तथेशानं ब्रह्म ब्रह्मसु पञ्चसु ।
मूर्धानमपि लिङ्गस्य नादभागेष्वनुत्तमम् ॥
यत्रावाह्य समाराद्धः केवलो निष्कलः शिवः ।
तत्त्वेष्वपि तदा बिन्दोर्नादाच्छक्तेस्ततः परात् ॥
तत्त्वादपि परं तत्त्वमतत्त्वं परमार्थतः ।
कारणेषु त्रयातीतान्मायाविक्षोभकारणात् ॥
अनन्तात् शुद्धविद्यायाः परस्ताच्च महेश्वरात् ।
सर्वविद्येश्वराधीशान्न पराच्च सदाशिवात् ॥
सर्वमन्त्रतनोदवाच्छक्तित्रयसमन्वितात् ।
पञ्चवक्त्राद्दशभुजात् साक्षात् सकलनिष्कलात् ॥
तस्मादपि पराद् बिन्दोरर्धेन्दोश्च ततः परात् ।
ततः परान्निशाधीशान्नादाख्याच्च ततः परात् ॥
ततः परात् सुषुम्णेशाद् ब्रह्मरन्ध्रेश्वरादपि ।
ततः परस्ताच्छक्तेश्च परस्ताच्छिवतत्त्वतः ॥
परमं कारणं साक्षात् स्वयं निष्कारणं शिवम् ।
कारणानां च धातारं ध्यातारं ध्येयमव्ययम् ॥

परमाकाशमध्यस्थं परमात्मोपरि स्थितम् ।
सर्वैश्वर्येण संपन्नं सर्वेश्वरमनीश्वरम् ॥
ऐश्वर्याच्चापि मायेयादशुद्धान्मानुषादिकात् ।
अपराच्च परात्त्वाज्यादधिशुद्धाध्वगोचरात् ॥
तत्पराच्छुद्धविद्याद्यादुन्मनान्तात् परतः परात् ।
परमं परमैश्वर्यमुन्मनाद्यमनादि च ॥
अपारमपराधीनं निरस्तातिशयं स्थिरम् ।
इत्थमर्थैर्दिशद्भिर्विधैरियमाथर्वणी श्रुतिः ॥
यस्माद् गरीयसी तस्मात् विश्वं व्याप्तमथर्वणात् ।
ऋग्वेदः पुनराहेदं जाग्रद्रूपं मयोच्यते ॥
येनाहमात्मतत्त्वस्य नित्यमस्म्यभिधायकः ।
यजुर्वेदोऽवदत्तद्वत् स्वप्नावस्था मयोच्यते ॥
भोग्यात्मना परिणता विद्या वेद्या यतो मयि ।
साम चाह सुषुप्त्याख्यं साधु सर्वं मयोच्यते ॥
ममार्थेन शिवेनेदं तामसेनाभिधीयते ।
अथर्वाह तुरीयाख्यं तुरीयातीतमेव च ॥
मयाभिधीयते तस्मादध्वातीतः परोऽस्म्यहम् ।
अध्वात्मकं हि त्रितयं शिवविद्यात्मसंज्ञितम् ॥
तत्त्रैगुण्यं त्रयीसाध्यं संशोध्यं च पदैषिणा ।
अध्वातीतं तुरीयाख्यं निर्वाणं परमं पदम् ॥
तदतीतं च नैर्गुण्यादध्वनोऽस्य विशोधकम् ॥'—इति ।

'अध्वनामध्वपते श्रैष्ठ्यस्य स्वस्त्यस्याध्वनः पारमशीय' इति श्रुतिः । अथवा—अध्वानं संसारमार्गं सुरनरपशुपक्षिकृमिकीटादियोनिरूपं महारण्यं गर्भदुःखजन्मदुःखमरणदुःखनरकदुःखरूपं क्षुद्रपाषाणकण्टकादियुक्तमशनायापिपासाशोकमोहादिव्याघ्रसर्पा-

दिदूषितं कामक्रोधादिचोरभूयिष्ठमविद्यातमआदिमहान्धकारावृतं शुभकर्मफलभूतब्रह्मादिलोकप्रपादियुक्तमेवंभूतमतीतः कदाचिदप्यस्पृष्टत्वात् परशिवस्य निर्मृष्टनिखिलदुःखानुषङ्गपरमानन्दरूपत्वाच्च । तदुक्तं ब्रह्मगीतायाम्--

'विज्ञानसारथिर्यस्तु मनःप्रग्रहवान् नरः ।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥
पदं यत्परमं विष्णोस्तदेवाखिलदेहिनाम् ।
पदं परममद्वैतं स शिवः साम्बविग्रहः ॥
रुद्रविष्णुप्रजेशानामन्येषामपि देहिनाम् ।
ऋते साम्बं महादेवं किं भवेत् परमं पदम् ॥'—इति ।

अस्मिन्नेव पाद्मे पुराणे शिवगीतायाम्--

'विज्ञानसारथिर्यस्तु मनःप्रग्रहवान् नरः ।
सोऽध्वनः पारमाप्नोति ममैव परमं पदम् ॥'—इति

श्रीरामं प्रति श्रीशिवेनोक्तम् ।

ब्रह्मगीतावचनस्य श्रीविद्यारण्यस्वामिभिः कृता तात्पर्यदीपिका लिख्यते—पुनस्तत्त्वं विशिनष्टि—विज्ञानेति । निश्चयरूपा आत्मानात्मविवेकबुद्धिः विज्ञानम् । संकल्पविकल्पात्मकं मनः । तथा च विज्ञानरूपसारथिना नीयमानः प्रगृहीतमनस्कश्च सन् विद्वानध्वनः संसारगतेः पारमन्तं प्राप्नोति स्वस्वरूपयथार्थज्ञानेन संसाराद् विमुच्यते । तच्च परमविष्णोर्व्यापनशीलस्य ब्रह्मणः परं प्रकृष्टं पदं पदनीयं प्राप्तव्यं सच्चिदानन्दैकरसं स्वरूपमिति यावत् । 'तद्विष्णोः परमं पदम्' इति श्रुतिवाक्यं स्वयं व्याकरोति—पदं यदिति । 'यत्र नान्यत् पश्यति नान्यच्छृणोति' इत्येवं त्रिपुटीहीनं यदद्वितीयं तत्त्वं तदेवाखिलदेहिनां

देवमनुष्यादीनां सर्वेषां परमं पदम् निरतिशयानन्दरूपतया सर्वैरभिलषितत्वात् । ईदृगिदं परमं पदमेव लीलयार्धनारीश्वर-विग्रहः शिवः संपन्नः, एतदेव सच्चिदानन्दैकरसं परमशिवस्वरूपं रुद्रविष्ण्वादीनां गुणमूर्तीनामन्येषामिन्द्रादीनां च परमं पदं भवतीत्यर्थः । इति ॥ 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति श्रुतिः । ॥१८३॥

## ॥ इति दशमशतकविवरणम् ॥

श्रीसदाशिव उवाच—

जपन्तु मामिकां देवा नाम्नां दशशतीमिमाम् ।
मम चातिप्रियकरीं महामोक्षप्रदायिनीम् ॥१८४॥

इमां वेदसारसहस्राख्यां मामिकां मम सगुणनिर्गुणस्वरूप-कथनपरां महामोक्षप्रदायिनीं भक्तिज्ञानवैराग्यद्वारा निर्गुण-सायुज्यप्रदानकरीम् ॥१८४॥

संग्रामे जयदात्रीं च सर्वसिद्धिमयीं शुभाम् ।
यः पठेच्छृणुयाद् वापि सर्वपापैः प्रमुच्यते ॥१८५॥

सर्वसिद्धिमयीं सर्वाभीष्टप्रदाम् ॥१८५॥

पुत्रकामो लभेत्पुत्रं राज्यकामस्तु राजताम् ।
प्राप्नुयात्परया भक्त्या धनधान्यादिकं बहु ॥१८६॥

पुत्रं वंशाभिवृद्धिकरम् ॥१८६॥

शिवालये नदीतीरेऽश्वत्थमूले विशेषतः ।
प्रजपेत् सिद्धिदां देवाः शुचौ देशे शमीतले ॥१८७॥

शमी नाम वृक्षविशेषः । समे इति पाठभेदः ॥१८७॥

धनकामस्तु जुहुयात् घृताक्तैर्बिल्वपत्रकैः ।
मोक्षकामस्तु गव्येन घृतेन प्रतिनामतः ॥१८८॥

जुहुयात् स्वगृह्योक्तविधानेनाग्निं प्रतिष्ठाप्य बिल्वपत्रकैः त्रिदलैः कृमिकीटादिभिरदूषिताच्छिद्रितैः प्रतिनामतः पराय देवाय स्वाहा, शङ्कराय स्वाहेत्यारभ्य अध्वातीताय स्वाहेत्यन्तेन ॥१८८॥

पुत्रकामस्तु जुहुयात्तिलाक्तेन तथान्धसा ।
आयुष्कामस्तु जुहुयादाज्येन मधुना तथा ॥१८९॥

तिलाक्तेन तिलमिश्रितेनान्धसा अन्नेन तथा प्रतिनामत इत्यर्थः । एवमुत्तरत्रापि आज्येन मधुना वेति विकल्पः । आज्येनैकावृत्तिः मधुना आवृत्त्यन्तरम् ॥१८९॥

मत्समीपे प्रदोषे च नत्वा भक्त्या जपेन्नरः ।
जीवन् स्वरूपतां प्रेत्य सायुज्यं समवाप्नुयात् ॥१९०॥

सायुज्यं निर्गुणसायुज्यम् ॥१९०॥

कालोऽपि जनशास्ता हि मम भक्तं न पश्यति ।
अहं पुरस्सरस्तस्य नेष्यामि गमनस्थलम् ॥१९१॥

पुरस्सरः अग्रेसरः । तस्य नामजपशीलस्य । गमनस्थलं कैलासादिस्थानम् ॥१९१॥

त्रिसन्ध्यं प्रजपेद् भक्त्या वत्सरं नियमान्वितः ।
मच्चित्तो मन्मना भूत्वा साक्षान्मोक्षमवाप्नुयात्॥१९२॥

नियमान्वितः शिवक्षेत्रवासशिवप्रदक्षिणनमस्कारशिवपूजादिसंयुक्तः मन्मना ज्ञानध्यानपरः ॥१९२॥

रुद्रपाठेन यत्पुण्यं यत्पुण्यं वेदपाठतः ।
तत्पुण्यं प्राप्यते पुम्भिरेकावृत्त्या पठेदिमाम् ॥१९३॥

रुद्रपाठेन आवृत्तियुक्तेन इमां विद्यामर्थज्ञानपुरस्सरं पठनेन नामपाठस्यैव विद्यात्वात् ॥१९३॥

कन्याकोटिप्रदानस्य यत्फलं लभते नरः ।
तत्फलं लभते सम्यङ्नाम्नां दशशतं जपन् ॥१९४॥

अर्थज्ञानपुरस्सरमिति शेषः ॥१९४॥

अश्वमेधसहस्रस्य यत्फलं लभते नरः ।
कपिलाशतदानस्य तत्फलं पठनाद् भवेत् ॥१९५॥

स्पष्टम् । एवमुत्तरश्लोका अपि ॥१९५॥

यश्शृणोति सदा विद्यां श्रावयेद् वापि भक्तितः ।
सोऽपि मुक्तिमवाप्नोति यत्र गत्वा न शोचति ॥१९६॥

यक्षराक्षसवेतालग्रहकूष्माण्डभैरवाः ।
पठनादस्य नश्यन्ति जीवेच्च शरदां शतम् ॥ १९७ ॥
ब्रह्महत्यादिपापानां नाशस्स्याच्छ्रवणेनच ।
किं पुनः पठनादस्य मुक्तिस्स्यादनपायिनी ॥ १९८ ॥
इत्युक्तः स महादेवो भगवान् परमेश्वरः ।
पुनरप्याह भगवान् कृपया परयायुतः ॥ १९९ ॥
दीयतामात्मभक्तेभ्यो यदुक्तं भवघातकम् ।
इत्युक्त्वान्तर्दधे देवः परमानन्दरूपधृक् ॥ २०० ॥

श्रीकृष्ण उवाच ।

एतदेव पुरा रामो लब्धवान् कुंभसंभवात् ।
अरण्ये दण्डकाख्ये तु प्रजजाप रघूद्वहः ॥ २०१ ॥
नित्यं त्रिषवणस्नायी त्रिसंध्यं संस्मरन् शिवं ।
तदासौ देवदेवोपि प्रत्यक्षं प्राह राघवम् ॥ २०२ ॥
महापाशुपतं दिव्यं प्रगृहाण रघूद्वह ।
एतदासाद्य पौलस्त्यं जहि मा शोकमर्हसि ॥ २०३ ॥
तदाप्रभृति भूदेवाः प्रजपामि सुभक्तितः ।
गृह्णन्तु परया भक्त्या भवन्तस्सर्वं एवहि ॥ २०४ ॥

व्यास उवाच ।

ततस्ते ऋषयस्सर्वें जगृहुर्मुनिपुंगवाः ।
सहस्रनाम सद्विद्यां भक्तियुक्तेन चेतसा ॥ २०५ ॥
एतद्वः कथितं सर्वं हितार्थं मुनिसत्तमाः ।
गृह्णन्तु मम वाक्येन मुक्तिं प्राप्स्यथ निश्चितम् ॥ २०६ ॥
भवद्भिरात्मशिष्येभ्यो दीयतामिदमादरात् ।
नाम्नां सहस्रमेतद्धि लिखितं यन्निकेतने ॥ २०७ ॥

अविमुक्तं तु तद्गेहं तत्र तिष्ठति शङ्करः ।
अनेन मन्त्रितं यस्य दुष्टदुःखविनाशनम् ॥ २०८ ॥
पिशाचस्य विनाशाय जप्तव्यमिदमुत्तमम् ।
नाम्नां सहस्रेणानेन समं किंचिन्न विद्यते ॥ २०९ ॥

इति श्री पाद्मे पुराणे पंचाशत्—

साहस्रिकायां संहितायां उत्तरभागे बिल्वकेश्वरमाहात्म्ये श्रीकृष्णमार्कण्डेयसंवादे वेदसाराख्यं शिवसहस्रनाम स्तोत्रम् ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदभिनवनारायणेन्द्रसरस्वतीपूज्यपादशिष्य श्रीमत्परमशिवेन्द्रसरस्वतीविरचिता **श्री वेदसारसहस्रनामव्याख्या समाप्ता ।**

विश्वानि देव सवितर्दुरितानि परासुव
यद्भद्रं तन्न आसुव ॥